सुरेषु मालाममलामपश्यन्नले तु बाला मलिनीभवन्तीम् ।
इमां किमासाद्य नलेऽद्य म्रद्वीं म्रद्रास्यते मामिति चिन्तयेव ॥२०॥

श्रियं भजन्तां कियदस्य देवाश्छाया नलस्यास्ति तथापि नैषाम् ।
इतीरयन्तीव तया निरैक्षि सा नैषधे न त्रिदशेषु तेषु ॥ २१ ॥

चिह्नैरमीभिर्नलसंविदस्याः सम्वादमाप प्रथमोपजाता ।
सा लक्षणव्यक्तिभिरेव देवप्रसादमासादितमप्यबोधि ॥ २२ ॥

---

सुरेष्विति । दमयन्ती भैमी सुरेष्वमला मम्लानां मालां स्रजमपश्यत् नले तु अद्य म्रद्वीं सुकुमारामिमां दमयन्तीमासाद्य किं किमर्थं मां म्रद्रास्यते आदरिष्यते इति चिन्तयेव मलिनीभवन्तीं म्लायन्तीं मालामपश्यत् म्लानकुसुमत्वमन्यचिह्नमित्यर्थः ॥ २० ॥

श्रियमिति । देवा इन्द्रादयोऽस्य नलस्य श्रियं कान्तिं कियदल्पं यथा तथा भजन्तां तथास्य हि एषामिन्द्रादीनां नलस्यच्छाया कान्तिः समग्रेति भावः । अनातपश्च छाया त्वनातपे कान्तावपीति वैजयन्ती । नास्ति नलरूपधारित्वेऽपि तेषु तत्कान्तिरीषदेव न समग्रेत्यर्थः । इतीरयन्ती कथयन्तीव स्थिता छाया कान्तिरनातपश्च तया दमयन्त्या नैषधे नले निरैक्षि दृष्टा ईक्षतेः कर्मणि लुङ् । तेषु त्रिदशेषु इन्द्रादिषु न निरैक्षि तेषान्तेजस्त्वान्न तत्र छत्रादिच्छाया लग्ना नले तु लग्नेत्येकं चिह्नमित्यर्थः । अत्र श्रियमिव श्रियं छायेव छायेति साम्याक्षेपान्निदर्शने ताभ्यां सङ्गाभ्यामितीरयन्तीवेत्युत्प्रेक्षायाः सङ्करः ॥ २१ ॥

चिह्नैरिति । अस्या दमयन्त्याः प्रथमोपजाता इतरनलतुलाभागेष येष इत्युक्ता नलसंवित् नलोऽयमिति चिरमेभिश्चिह्नैः पूर्वोक्तैः भूस्पर्शादिभिः सम्वादमैकमत्यम् आप दार्ढ्यं प्रापेत्यर्थः । सा दमयन्ती लक्षणानां पूर्वोक्तचिह्नानां व्यक्तिभिरभिव्यक्तिलक्षणकार्यैरेव देवप्रसादं देवतानुग्रहमदृष्टकारणभूतमासादितं प्राप्तमबोधि कारणं विना कथं कार्यं भवेदिति भावः । बुध्यतेः कर्तरि लुङ् दीपजनेत्यादिना विकल्पात् चिण् ॥ २२ ॥

नले विधातुं वरणस्रजन्तां स्मरः स्म रामां त्वरयत्यथैनाम् ।
अपत्रपा तां निषिषेध तेन द्वयानुरोधं तुलितं दधौ सा ॥२३॥
स्रजा समालिङ्गयितुं प्रियं सा रसादधत्तैव बहुप्रयत्नम् ।
स्तम्भत्रपाभ्यामभवत्तदीये स्पन्दस्तु मन्दोऽपि न पाणिपद्मे ॥२४॥
तस्या हृदि व्रीडमनोभवाभ्यां दोलाविलासं समवाप्यमाने ।
स्थितं धृतैणाङ्ककुलातपत्रे शृङ्गारमालिङ्ग्य दधौ स्मरश्रीः ॥ २५ ॥

नल इति। स्मरो नले वरणस्रजं विधातुं निधातुं तां रामां दमयन्तीं त्वरयति स्म त्वरयामास अथैनां त्वरावतीं भैमीं अपत्रपा लज्जा निषिषेध निवारयामास स्मादिष्वभ्यासेन चाभ्यासस्येति धात्वभ्यास सकारलोपश्च अतः तेन कारणद्वयेन सा भैमी द्वयानुरोधमुभयानुरोधं तुलितं समीभूतं यथा तथा दधौ न वक्रेणापि विरराम इत्यर्थः एतेनास्या मध्यमावस्थात्वमुक्तं। तुल्यलज्जास्मरा मध्येति लक्षणात् ॥ २३ ॥

स्रजेति। सा भैमी रसाद्रागात्प्रियं नलं स्रज्यत इति स्रक् सम्बन्धमाला ऋत्विग्दधृगित्यादिना कर्मार्थे क्विप् अजागमश्च। तया समालिङ्गयितुं समाश्लेषयितुं बहुप्रयत्नं महोद्योगम् अधत्तैव किन्तु तदीये तस्याः सम्बन्धिनि पाणिपद्मे स्तम्भो निष्क्रियत्वलक्षणः सात्त्विकविशेषः स च त्रपा च ताभ्यां हेतुभ्यां मन्दोऽल्पोऽपि स्पन्दो व्यापारो नाभवत् ॥ २४ ॥

तस्या इति। व्रीडमनोभवाभ्यां लज्जास्मराभ्यां दोलाविलासम् प्रेङ्खणलीलां समवाप्यमाने नीयमाने आन्दोल्यमान इत्यर्थः। धृतमेणाङ्ककुलस्य सोमवंशस्यातपत्रं भूतो नलो येन तस्मिन् तस्या हृदि हृदये स्थितमालिङ्ग्य स्थितं शृङ्गारमधीश्वरश्री राजलक्ष्मीरालिङ्गन् दोलाधिरूढा स्त्रियो भीताः पुमांसमालिङ्गन्ति इति भावः। नलाधिष्ठिते हृदि भैमी परां कोटिमारूढ इत्यर्थः ॥ २५ ॥

कर: स्रजा सज्जतरस्तदीय: प्रियोन्मुखी भूय पुनर्व्यरंसीत् ।
तदाननस्यार्द्धपथं ययौ च प्रत्याययौ चातिचल: कटाक्ष: ॥२६॥
तस्या: प्रियं चित्तमुदेतुमेव प्रभूबभूवाक्षि न तु प्रयातुम् ।
सत्य: कृत: स्पष्टमभूत्तदानीं तयाक्षि-लज्जेति जनप्रवाद: ॥२७॥
कथं कथञ्चिन्निषधेश्वरस्य कृत्वास्यपद्मं दरवीक्षितश्रि ।
वाग्देवताया वदनेन्दुबिम्बं त्रपावती साऽकृत मामिदृष्टम् ॥२८॥

कर इति । तदीयो दमयन्तीसम्बन्धिन: कर: स्रजा वरणस्रजा-करणेन सज्जतरोऽतिसन्नद्ध: सन् नलस्योन्मुखीभूयाभिमुखीभूय पुनर्व्य-रंसीत् विरराम रमेर्लुङि व्याङ्परिभ्यो रम इति परस्मैपदं यमरमन मातां सक्चेति सगिड़ागमौ, अस्ति सिचोऽपृक्त इतीड़ागमे ईट ईटीति सलोपे च सवर्णे दीर्घ: । तथा अतिचलोऽत्यन्तचञ्चल: कटाक्ष स्तदाननस्य नलमुखस्य अर्ध: पन्था इति विशेषण समासे समासान्त: । अर्द्धं नपुं-सक मिति नैकदेशी समास: समप्रविभागे प्रमाणाभावात् । तमर्द्धपथं ययौ च प्रत्याययौ प्रत्यावृत्तश्च उभयत्र लज्जयेतिभाव: ॥ २६ ॥

तस्या इति । तस्या दमयन्त्याश्चित्तं प्रियं नलमुदेतुं प्राप्तुमेव प्रागेव नेदानीमितिभाव: । अक्षि तु प्रयातुं नलं गन्तुं न प्रभूबभूव न शशा-केत्यर्थ: प्रभुशब्दाद्भूततद्भावे च्वौदीर्घ: । अक्षिण चक्षुषि लज्जा न तु चेत-सीति शेष: इति जनप्रवाद: तत्र्या तया भैम्या स्पष्ट यथा तथा सत्यी कृतोऽभूत् अन्त:करण वृत्तेरात्मैक संवेद्यत्वान्न तस्य लज्जा चक्षुषस्तु न तथेति तत्रैव लज्जेतिभाव: ॥ २७ ॥

कथं कथमिति । त्रपावती लज्जावती सा भैमी कथं कथञ्चिदति-कष्टेण निषधेश्वरस्य नलस्यास्यपद्मं मुखारविन्दं दरवीक्षिता ईषद्दृष्टा श्रीरस्य तत्कृत्वा लेशतोद्दृष्टेत्यर्थ: शेषिकत्वस्य वैभाषिकत्वाद्भाव: ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्व: । ईषदर्थे दरोऽव्यय । वाग्देवताया:

**भैमीं निरीक्ष्याभिमुखीं मघोनः स्वाराज्यलक्ष्मीरभताभ्यसूयाम्।**
**दृष्ट्वा ततस्तत्परिहारिणीं तां व्रीडां बिडौजःप्रवणाभ्यपादि ॥३२**
**त्वत्तः श्रुतं नेति नले मयातः परं वदस्वेत्युदिताथ देव्या।**
**ह्रीमन्मथद्वैरथरङ्गभूमिर्भैमी द्विधा भाषितनैषधाऽभूत् ॥ ३३ ॥**

पथोऽण्नित्यमित्यण्प्रत्यये पथः पन्थादेशे च ङीप् । पुरन्ध्रीणां सर्व-योषितां साधारणः सविभागः सर्वनामत्वे सविभज्य ग्रहणं यस्य तद्वा-मेति नामैव सार्थं वक्रत्वेनार्थवद्यथा तथा बभाज बभार वक्रोऽपाभूत् वामं सर्वं प्रतीपेच चारौ वक्रेच योषितीत्यजमलः ॥ ३१ ॥

भैमी मिति । मघोन इन्द्रस्य भिमुखीं भैमीं निरीक्ष्य स्वः स्वर्गस्य राज्य स्वरव्ययं स्वर्गनाकेत्यमरः । ढ्रलोपे पूर्वस्य दीर्घोऽणः। तस्य लक्ष्मीरभ्य-सूयामिन्द्रे भैम्यां चेर्ष्यामभत बभार भङ् लङ् तङ् ह्रस्वादङ्गादिति सलो-पः । ततोऽसूयानन्तरं तत्परिहारिणीमिन्द्रप्रतिषेधिनीपताकां भैमीं दृष्ट्वा विड़ौजःप्रवणा पुनरिन्द्रानुरक्ता सती व्रीड़ामभ्यपादि अभिपेदे तथा माया-शङ्कितं सा तु न गणयतीति लज्जितेत्यर्थः । पद्यतेः कर्तरि लुङि तङि ह्रस्वादङ्गादिति सलोपः चिणो पदः चिणो लुङि तिङि चिणुपदः चिणो लुङीति प्रत्ययस्य लुक् । ॥ ३२ ॥

त्वत्तइति । अथ नले प्रमिते सति मया नेति त्वत्त एव श्रुतः श्रुत एवायं त्वत्त्रेष्यैव ज्ञातइत्यर्थः । अन्यथा ज्ञात्वापि तं किमिति न वृणोषि इति भावः । अतो नलात्परमन्यं वदस्व नृपान्तरं ब्रूहीत्यर्थः । इति देव्या वाग्देवतया उदिता ह्रीमन्मथ द्वैरथरङ्गभूमि र्लज्जाकामरथद्वय-प्रवृत्तयुद्ध नाट्यशालेव भैमी द्विधा द्वेधैव भाषितो नैषधो नलो यया साभूत् ह्रिया कण्ठेन वक्तुमशक्ता कामादक्नुत्स्वाशक्ता कटाक्षदृष्ट्या नलं सानुरागमै-क्षतेत्यर्थः ॥ ३३ ॥

दिषत्स्विति । दिवि सीदन्तीति दिविषदो देवा आदितेया दिविषद इत्यमरः । सत्सूद्विषेत्यादिना क्विप् । ह्रद्युभ्याञ्चेत्युपसङ्ख्यानमिति सप्तम्य

हसत्सु भैमीं दिविषत्सु पार्श्वोपार्श्वं प्रणीयाप्सरसां रसात् सा।
आलिङ्ग्य नीत्वाऽकृत पार्श्वदुर्गां भूपालदिक्पालकुलाभ्रमध्यम्॥३४

अदेयिताम्प्यवलोक्य मन्दं मन्दं नलस्यैव दिशा चलन्तीम्।
भूयः सुरानर्थपथादथासौ तानेव तां नेतुमना नुनोद ॥ ३५ ॥

मुखाब्जमावर्त्तनलोलनालं कृत्वालिकुङ्कुरवलक्षलक्ष्यम्।
भीमोद्भवा तां नुनुदेऽङ्कपालीं देव्या नवोढेव हृथा विवोढुः॥३६॥

---

लुक् सुपमादिषु चेतिषत्वम्। अपर्हिन लक्षण मूर्धन्याः सुषमादिषु दृष्टव्या इति वचनात्। तेषु रसाद्धर्षादप्सरसां पार्श्वे पार्श्वं प्रणीय हसत्सु अहो नरासक्तेति परिहसत्सु सा सरस्वती भैमीं आलिङ्ग्य भूपालानां दिक्पालानाञ्च कुलयोर्वंशयोरभ्रं तस्य मध्यन्नीत्वा पार्श्वानां तत्पार्श्व-चारिणां दुर्गां दुर्गां देवीम् अकृत तद्वदलङ्घ्यामिकलक्ष्यां कृतवतीत्यर्थः। कृञ् कर्तरि लुङि हस्वादङ्गादिति सिच् सकार लोपः ॥३४॥

अदेयितामिति। असौ देवी अदेयितामचोदितामपि दिशेषौरा-दिकात्कर्मणि क्तः। मन्दं मन्दं नलस्यैव दिशा चलन्तीं चलन्तीं चलेरात्मने-पदमनित्यत्वज्ञापनादिति वामन। तां भैमीम् अथ अवलोक्य भूयस्तानिन्द्रा-दीन् सुरान् एव नेतुं मनो यस्याः सा, मनो तु काममनसोरपीति मकार लोपः। तदर्थपथादर्थमार्गात् परावर्त्य नुनोद प्रेरयामास ॥ ३५ ॥

मुखेति। भीमोद्भवा भैमी मुखाब्जं स्वमुखारविन्दम् आवर्तनेन त्रिवर्तनेन लोलनालं व्यावर्त्तकण्ठनालं तथा अलीनां भ्रमरीणां कुङ्कुरवाणां कुङ्कुमिति निनादेन शब्दानाम् अन्यत्र अलीनां सखीनां भङ्काराणां भङ्कार-शब्दानां कर्णैः सङ्कुलविशेषैः लक्ष्यं दर्शनीयं च कृत्वा नवोढा नववधू-र्विवोढुः परिणेतुरिव तामालिङ्ग्य नात्मीयलोकां देव्याः सरस्वत्याः हृथा अङ्कपालीं परिरम्भणवक्षसम् अङ्कपाली स्मृत, क्रोडां दारिका परिरम्भ-योरिति विश्वः। नुनुदे तत्याज ॥ ३६ ॥

देवीति। देवी तां भैमीं कर्णाभ्यां तत् कर्णाभ्यदपि देवानसु-नोतीति देवसूर्वा देवानसुनोतीति देवसूर्वज्ञिरमरः। कर्णादिगमादिना

देवी कथञ्चित् खलु तामदेवद्रीचीभवन्तीं स्मितसिक्तसृक्का ।
आह स्म मां मय्यपि ते भयं का शङ्का शशाङ्कादधिकास्यबिम्बे! ३७

एषामकृत्वा चरणप्रणामं येषामनुज्ञामनवाप्य सम्यक् ।
सुपर्ववैरे तव वैरसेनिं वरीतुमीहा कथमौचितीयम् ॥ ३८ ॥

इतीरिते विस्मयितां पुनस्तामादाय पाणौ दिविषत्सु देवी ।
कृत्वा प्रणम्रां वदति स्म सा तान् भक्तेयमर्हत्यधुनानुकम्पाम् ॥३९

अञ्चतेः क्विन्प्रत्ययः विष्वग्देवयोश्च देवद्र्यञ्चतावप्रत्यय इति टेरद्र्यादेशः अञ्चतेश्चोपसङ्ख्यानमिति ङीप् । सा न भवन्तीमित्यदेवद्रीचीं तान् देवाननभिगच्छन्तीमित्यर्थः विचिन्त्य विचार्य्य स्मितेन सिक्ते सृक्कणी ओष्ठप्रान्तौ यस्याः सा सृक्वौ प्रान्तावोष्ठस्य सृक्कणीत्यमरः । शशाङ्कादधिक सत्-कष्टमास्यबिम्बं मुखस्वरूपं यस्यास्तस्याः सम्बुद्धिः सापेक्षत्वेऽपि गमकत्वात् समासः । मयि स्थिते ते तव का शङ्का अविश्वासः न काचिदित्यर्थः इति तां भैमीं भयमाह स्म उवाच लट् स्म इति भूते लट् ब्रुवः पञ्चानामित्या-दिना णलाद्यादेशः ॥ ३७ ॥

एषामिति । हे वत्से ! एषामिन्द्रादीनां चरणप्रणाम मकृत्वा येषा मनुज्ञां सम्यक् भवत्यनिश मनवाप्य अनाकर्ण्य सुपर्ववैरे देवताद्वेषे सति तव वीरसेनस्यापत्यं वैरसेनिं नलम् अत इञ् । वरीतुं वृतो वेति थिक-ल्यादिटो दीर्घः । इयमीहा स्पृहा कथमौचिती औचित्यं न कथञ्चि-दित्यर्थः ॥ ३८ ॥

इतीति । सा देवी इतीरिते सति विस्मयितां तां प्रतीतां भैमीं पुनर्भूयः पाणौ हस्ते आदाय तत्पाणिं स्वहस्तेनावलम्ब्येत्यर्थः । दिविषत्सु देवेषु विषये प्रणम्रां प्रणतां तानिन्द्रादिदेवान् वदति स्म उक्तवती लट् स्म इति भूते लट् । किमिति भक्ता युष्मद्भक्ता इयं दमयन्ती अधुना इदा-नीम् अनुकम्पां भवत्कृपाम् अर्हति त्वद्दरणायां विहाय नलवरणार्थ मनुग्रहं कुरुतेतिभावः ॥ ३९ ॥

**युष्मान् वृणीते न बहून् सतीयं शेषात्तमानाच्च भवत्सु नैकम्।**
**तद्वः समेतं नृपमंशमेनं वरीतुमन्विच्छति लोकपालाः! ॥४०॥**
**भैम्याः स्रजः सञ्जनया पथि प्राक् स्वयम्बरं सम्बरयांबभूव।**
**सम्भोगमालिङ्गनयास्य वेधाः शेषन्तु कं हन्त मियद्यतध्वम् ॥४१॥**
**वर्णाश्रमाचारपथात् प्रजाभिः स्वाभिः स्फुटैवास्खलते नलाय।**
**प्रसेदुषी वेद्म्यदृत्तभङ्ग्या दिशत्येव कीर्त्तेर्भुवमानयद्वः ॥ ४२ ॥**

युष्मानिति। हे लोकपालाः! सती साध्वी इयं भैमी युष्मान् बहून् न वृणीते पातिव्रत्यभङ्गादिति भावः। शेषात् सर्वशिष्टात् समानात् एकमानप्रसङ्गाद्भवत्सु मध्ये एकञ्च न वृणीते तत्तस्माद्वो युष्माकं सम्बन्धिनं समेतं मिलितमंशं सर्वांशसमष्टिरूपम् अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृप इति भावः। एनं नृपं वरीतुम् अन्विच्छति सर्वांशवरणैकवरणोक्तदोषानवकाशादिति भावः ॥ ४० ॥

किञ्च भैम्या नलवरणसम्भोगौ तत्र प्रागेव ब्रह्मणैव निवर्तितौ किमपरमवशिष्यते यदिह तावन्मयं वः प्रयाम इत्याह भैम्या इति। किञ्च वेधाः स्रष्टैव प्राक्पुरा दूत्यानुसन्धानकाले पथि अन्तःपुरमार्गे स्रजः सञ्जनया कण्ठे योजनया गृहणसूचनया च। भैम्याः स्वयम्बरं नलवरणं सम्बरयांबभूव निवर्तयामास तथा आलिङ्गनया आश्लेषणया पूर्ववद्धृच्च। सम्भोगं सम्बरयांबभूव एतदुभयं पञ्चमसर्गे प्रसूनमालाधिगता मनोऽन्यमन्यसर्गादिस्थल च श्लोकद्वयेऽनुसन्धेयम्। शेषमिति अवशिष्टन्तु अथ शेषं किमन्यस्मिन् उपयुक्ततमाममानतादिवाने स्त्रीना नारीप्रधानयोरिति वैजयन्ती। क हन्त वियोक्तुं इयदेतावद्यथा तथा यतध्वं प्रयतति सम्प्रश्ने लोट्। ब्रह्मसृष्टेरनल्लङ्घ्यत्वाद्वृथा वः प्रयाम इति भावः ॥ ४१ ॥

यद्वा किमेषु दोषप्रदर्शनेन येनेत्थमुपालभ्यन्ते किन्तु गुणप्रदर्शनेनैव तान् प्रसादयामीत्याशयेनाह वर्णेति। वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्यादीनाम् आचारपथात् वृत्तमार्गात् स्वाभिः स्वकी-

इति श्रुतेऽस्या वचने च हास्यात् कृत्वा नलस्याधरमास्यबिम्बम् ।
भ्रूविभ्रमाकूतकृताभ्यनुज्ञेष्वेतेषु तां साथ नलाय निन्ये ॥४३॥

मन्दाक्षनिःस्पन्दतनोर्मनोभूदुष्प्रेरमप्यानयति स्म तस्याः ।
मधूकमालामधुरं करं सा कण्ठोपकण्ठं वसुधासुधांशोः ॥४४॥

अथाभिलिख्येव समर्प्यमाणां राजिं निजस्वीकरणाक्षराणाम् ।
दूर्वाङ्कुराढ्यां नलकण्ठनाले वधूर्मधूकस्रजमुत्ससर्ज ॥ ४५ ॥

याभिः प्रजाभिः सह व्यसखलने अचलते नलाय प्रसेदुषः प्रसन्नान् भाषायां सदवसश्रुव इति सदेः कसुरादेशः । वो युष्मानीदृश्या तुल्यकल्प-दृश्या वृत्तभङ्ग्या चरित्रवैचित्र्या तद्राजेनेत्यर्थः स्त्रियाः पुंवदित्यादि पुंवद्भावः । कीर्तिदित्सा नलाय दातुमिच्छेव कर्त्री ददातेः सनि मीमेत्यादिना इसादेशोऽभ्यासलोपः । अप्रत्यया इत्यकारप्रत्ययेऽटाप् । सुवर्मान यद्वा कृतो नीतवती किं नावज्ञेरित्यादिना नयतेर्द्विकर्मकता नलस्य कीर्तिम् अनङ्गीकर्तुमयं वः प्रयासो ननु भैमीं पीडयितुमित्यर्थः ॥ ४२ ॥

इतीति । किन्नीतवाथः इतीत्यस्याः अस्या देव्या वचने श्रुते सति हास्याद्वचनाद्धेतोरास्यबिम्बं नलस्याधरं चलदोष्ठं कृत्वा एतेषु देवेषु भ्रूविभ्रमेण भ्रूचेष्टयैवाकूतेनाकपटभावेन कृता अभ्यनुज्ञा यैस्तेषु सत्सु अभ्यनुज्ञानन्तरं सा देवी तां भैमीं नलाय निन्ये नलसमीपं निनायेत्यर्थः क्रियायहणाच्चतुर्थी ॥ ४३ ॥

मन्दाक्षेति । सा सरस्वती मन्दाक्षनिष्पन्दतनोर्लज्जानिश्चला-ङ्ग्यास्तस्या भैम्या मनोभुवा कामेनापि दुष्प्रेरं प्रेरयितुमशक्यं मधूक-मालया मधुरं रम्यं करं वसुधासुधांशोर्भूचन्द्रस्य नलस्य कण्ठोपकण्ठं कण्ठसमीपमानयति स्म तदास्याः स्मरादपि लज्जा बलीयसीति भावः ॥४४॥

अथेति । अथ वधूः कन्या भैमी अभिलिख्य लिखित्वा समर्प्य-माणां निजस्यात्मीयस्य यत् स्वीकरणं तस्याक्षराणां तद्वाचकवर्णा-राजिं मालमिव दूर्वाङ्कुराढ्यां तद्भूयिष्ठां मधूकस्रजं मधूकद्रुम-

कापि प्रमोदास्फुटनिर्जिहानवर्णैव या मङ्गलगीतिरासाम्।
सैवाननेभ्यः पुरसुन्दरीणामुच्चैरुलूलुध्वनिरुच्चचार ॥ ४९ ॥
रोमाणि सर्वाण्यपि बालभावाद्वरश्रियं वीक्षितुमुत्सुकानि।
तस्यास्तदा कण्टकिताङ्गयष्टेरुद्ग्रीविकादानमिवान्वभूवन् ॥५०॥
रोमाङ्कुरैर्दन्तुरिताखिलाङ्गी रम्याधरा सा सुतरां विरेजे।
शारव्यदण्डैः श्रितमण्डनश्रीः स्मारी शरोपासनवेदिकेव ॥५१॥

कापीति। प्रमोदेन हर्षातिरेकेणास्फुटं यथा तथा निर्जिहाना निर्गच्छन्तो वर्णा यस्याः सैव हर्षपारवश्यादस्फुटाक्षरैव निर्गच्छन्त्यक्षरा। काप्यपूर्वा पुरसुन्दरीणां या मङ्गलगीतिः सैव अस्फुटाक्षरा मङ्गलगीतिरेवासामाननेभ्य उलूलुध्वनिः मङ्गलसूचकः समुच्चचार उत्थितः अनुकारिशब्दोऽयम् उलूलुरित्ययं शब्दः कश्चिदुपरि तमके मुखोच्चार्यो ध्वनिविशेष उत्सवादौ स्त्रीभिरुच्चार्यत इत्युदीच्यानामाचारः। तथा च पुरसुन्दरीणां यत् धार्मिकमङ्गले गानं तदेव हर्षपारवश्यादस्फुटाक्षरत्वात् उलूलुध्वनिकल्पमभूदित्यर्थः ॥ ४९ ॥

अथास्याः स्त्रीभिः पुलकोदयमाह रोमाणीत्यादि। तदा तत्काले कण्टकिताङ्गयष्टेः पुलकिताङ्गयष्टेः तस्या भैम्याः सर्वाण्यपि रोमाणि बालभावात्कचत्वात् वबयोरभेदेन शिशुत्वाच्च बालः कचे शिशौ मूर्खे इति विश्वः। वरस्य वोढुर्नलस्य श्रियं वीक्षितुमुत्सुकानि सन्ति उद्ग्रीविका उन्नमितग्रीवीकरणं ग्रीवोन्नमनमिति यावत् उद्ग्रीवयतेस्तत्करोतीति णिजन्ताद्धात्वर्थनिर्देशेऽपि ण्वुल्प्रत्ययः। तस्या आदानं स्वीकारमन्वभवन्नित्युत्प्रेक्षा बाला ह्युद्ग्रीवा भृशं पश्यन्तीति भावः ॥ ५० ॥

रोमाङ्कुरैरिति। रोमाङ्कुरैः पुलकैर्दन्तुरितं विषमितमखिलाङ्गं यस्याः सा रम्यौ अधरोष्ठौ अन्यत्राधोभागश्च यस्याः सा अधरो दन्तवसनेऽधोऽधरोऽन्यवदिति विश्वः। सा भैमी शरव्यदण्डैर्लक्ष्ययष्टिभिः श्रिता मण्डनश्रीः प्रसाधनश्रीः यस्याः सा। स्मरस्येयं स्मारी शरोपासनस्य

चेष्टा व्यनेशन्निखिलास्तदास्याः स्मरेषुपातैरिव ता विधूताः ।
अभ्यर्थ्य नीताः कलिना मुहूर्त्तं लाभाय तस्या बहु चेष्टितुं वा ॥ ५२ ॥

तन्न्यस्तमाल्यस्पृशि तस्य कण्ठे स्वेदं करे पञ्चशरश्चकार ।
भविष्यदुद्वाहमहोत्सवस्य हस्तोदकं तज्जनयाम्बभूव ॥ ५३ ॥

तूलेन तस्यास्तुलना मृदोस्तत् कम्पास्तु सा मन्मथबाणपातैः ।
चित्रीयितं तत्तु नलो यदुच्चैरभूत् स भूभृत् पृथुवेपथुस्तैः ॥ ५४ ॥

शराभ्यासस्य वेदिकेव सुतरां विरेजे शराभ्यासिनो व्याधप्रवणां निखात-लक्ष्ययष्टिकां वेदीं कुर्वन्तीति प्रसिद्धम् ॥ ५१ ॥

चेष्टा इति। तदा तस्मिन् काले अस्या भैम्यास्ताः प्रागनुभूता निखिलाश्चेष्टाः कटाक्षवीक्षणाङ्गविक्षेपादयः स्मरस्य इषुपातैर्बाणप्रहारैर्विधूता निरस्ता इवेत्युत्प्रेक्षा व्यनेशन् विनष्टाः नशेर्लुङि पुषादित्वादङ् नशोऽमल्लेन एत्वं वक्तव्यमित्येत्वं विनेशुरिति पाठे लिड्यनादेशादित्वादेत एकहल्मध्येऽनादेशादेर्लिटीत्येत्वाभ्यासलोपौ। प्रकारान्तरेणोत्प्रेक्षते अथवा तस्या भैम्या लाभाय स्वप्राप्त्यै बहु बहुविधं चेष्टितुं विजृम्भितुं कलिना कलिपुरुषेणाभ्यर्थ्य मयि तिष्ठन्त्विति प्रार्थ्य मुहूर्तमात्रं कालं नीता वा दमयन्तीप्राप्त्यां प्रवृत्तस्य कलेरप्यागामित्वात्तस्याः विरूपकल्पस्य चतुर-चेष्टाशून्यत्वाच्चेत्युत्प्रेक्षा। एतेन स्तम्भाख्यसात्त्विकोक्तः स्तम्भः स्यान्निष्क्रियाङ्गत्वमिति लक्षणात् ॥ ५२ ॥

अथ चतुर्भिर्नलस्यापि सात्त्विकोदयमाह। तया भैम्या न्यस्तं माल्यं स्पृशतीति तत्स्पृक् स्पृशोऽनुदके क्विन्। तस्मिन् तस्य कण्ठे करे च पञ्चशरः स्मरः स्वेदं चकार जनयामासेति यत् तत् भविष्यत उद्वाह-महोत्सवस्य सम्बन्धि हस्तोदकम् अर्घ्यजलं जनयाम्बभूवेत्युत्प्रेक्षा व्यञ्जका-प्रयोगाद्गम्या ॥ ५३ ॥

तूलेनेति। मृदोर्मृद्व्याः वोतो गुणवचनादिति विकल्पादनीकारः। तस्या भैम्यास्तूलेन कार्पासादिना तुलना साम्यं तत्तस्मात् सा भैमी मन्मथबाणपातैः कम्पा चला अस्तु किन्तु स महान् भूभृद्राजा गिरिश्च भूभृद्

**दृशोरपि न्यस्तमिवास्त राज्ञां रागाद्दृगम्बुप्रतिबिम्बि माल्यम्।**
**नृपस्य तत्पीतवतोरिवाक्ष्णोः प्रालम्बमालम्बत युक्तमन्तः॥५५॥**
**स्तम्भस्तथालम्बितमां नलेन भैमीकरस्पर्शमुदः प्रभावः।**
**कन्दर्पलक्ष्मीकरणार्पितस्य स्तम्भस्य दम्भं स चिरं यथाऽऽपत्॥५६॥**

भूमिधरे नृप इत्यमरः। स नलस्तैर्बाणपातैः पृष्ठवेपथुः महाकम्पः दृढतो-ऽप्यच्। अभूदिति यत तत् चित्रीयितं चित्रीकरणं नमोवरिवश्चित्रङः क्यच्। अस्य क्यादितिकारः श्वजन्तत्वाद्भावे निष्ठा। अल्पवायुना तृणचलने किं चित्रं शैलचलनन्तु चित्रीयत इत्यर्थः। धीरो राजा नलोऽपि चलति भीरुर्भैमी चलतीति किं चित्रमिति भावः॥ ५४॥

सात्त्विकानां सर्वसमसाधारणत्वाद्राज्ञां रोषादुत्पन्नत्वं नलस्य हर्षादित्येवं स्थिते तदाश्रित्योभयत्रोत्प्रेक्षते दृशोरिति। राज्ञां रागात् मात्सर्याद् दृगम्बु बाष्पः रागोऽनुरक्तौ मात्सर्ये इति विश्वः। सापेक्षत्वेऽपि गमकत्वात् समासः। तत्र प्रतिबिम्बते प्रतिफलतीति तत् प्रतिबिम्बि माल्यं स्वयंवरस्रक् दृशोरक्ष्णोरपि न्यस्तमिवास्त स्थितमित्युत्प्रेक्षा। आसेर्लङ्। अपि सम्भावनायां यथोरसि तथाऽक्ष्णोरपि न्यस्तं किमित्यर्थः। नृपस्य नलस्य तु तन्माल्यं कर्म अनुरागेणाश्रुप्रतिबिम्बितम् अक्ष्णोः पीतवतोस्तृष्णया तन्माल्यं गिलतोरिव सतोः प्रालम्बं सत्प्रालम्बमृजुलम्बि स्यात्कण्ठा-दित्यमरः। अन्तर्मध्ये तथा प्रान्ते स्वीकारेऽपि च दृश्यत इति विश्वः। युक्तम् आलम्बत अवलम्बते स्म अत्रापि राज्ञां द्वेषाद्दृष्ट्या तत् प्रतिबिम्बि-माल्ययुक्तमक्षिगतमेव कृतमित्युत्प्रेक्षा। नलस्य तु रागातिरेकादक्षिभ्यां तत् तृष्णया पीतमित्युत्प्रेक्षितस्यैव बाह्यबिम्बमाल्याध्यवसायभेदेन मध्ये प्रालम्बितया लम्बनमित्युत्प्रेक्ष्यते॥ ५५॥

स्तम्भ इति। नलेन भैमीकरस्पर्शेण या मुत् आनन्दः तस्याः प्रभावः तदनुभाव इत्यर्थः। स्तम्भो निष्क्रियाङ्गत्वलक्षणः सात्त्विकवि-शेषः सोऽपि तथा तेन प्रकारेणालम्बितमामतिशयेनालम्बि लम्बेः कर्मणि लुङ्। चिणि विभाषा चिण्णमुलोरिति विकल्पान्नुमागमः तिङ् धादा

उत्सृज्य साम्राज्यमिवाथ भिक्षां तारुण्यमुल्लङ्घ्य जरामिवारात्।
तं चारुमाकारमुपेक्ष्य यातुं निजां तनूमादधिरे दिगिन्द्राः॥५७॥
मायानलत्वं त्यजतो निलीनैः पूर्वैरहंपूर्विकया मघोनः।
भीमोद्भवासात्त्विकभावशोभादिदृक्षयेवाविरभावि नेत्रैः॥५८॥
गोत्रानुकूलप्रभवे विवाहे तत्प्रातिकूल्यादिव गोत्रशत्रुः।
पुरस्चकार प्रवरं वरं यमायन् सखायं ददृशे तया सः॥५९॥

समभ्यस्यः। यथा स नलः कन्दर्पस्य लक्ष्यीकरणायार्पितस्य शराभ्यास-
काले शरव्यत्वेन स्थापितस्य स्तम्भस्य स्थणायाः स्थाणुरूपो जडीभावो
विस्मयः। टङ्कः व्याजत्वं भावप्रधानो निर्देशः व्याज टङ्कोपधय इत्य-
मरः। चिरमाप प्रापत॥५६॥

उत्सृज्येति। अथ दिगिन्द्रा इन्द्रादिदिक्पाला यातुं गन्तुं सम्रा-
जतीति सम्राट् महाराजविशेषः। येनेष्टं राजसूयेन मण्डलस्येश्वरश्च
यः। शास्ति यश्चाज्ञया राज्ञः स सम्राडित्यमरः। सत्सूद्विषेत्यादिना
क्विप् मोराजसमः क्वाविति समो मकारस्य मकारादेशानुस्वारः। तस्य भावः
कर्म वा साम्राज्यं तदुत्सृज्य भिक्षां याच्ञामिव तारुण्यं यौवन समुल्लङ्घ्य
जरामिव आरात्समीपे तत्वेनेत्यर्थः तं चारुं सुन्दरमाकारं नवरूप मु-
पेक्ष्य हित्वा निजां तनूमाकार मादधिरे स्वीचक्रुः॥५७॥

मायेति। स यानलत्व त्यजतो मघोन इन्द्रस्य निलीनैर्निगूढैः
पूर्वैः प्राचीनैः नेत्रैः भीमोद्भवाया भैम्याः सात्त्विकभावानां शोभया
दिदृक्षया द्रष्टुमिच्छयेवेति फलोत्प्रेक्षा दृष्ट्या आविर्भावफलत्वाच्छोभादर्शनस्य।
अहं पूर्वोऽहं पूर्व इति योऽभिमानः क्रियायां साऽहंपूर्विका मयूरव्यंस-
कादित्वात् समासः। स्वार्थे मत्वर्थे वा ठच्प्रत्ययः। आविरभावि आविर्भूतं
भावे लुङ्। स्त म्भप्रलयरोमाश्वाः स्वेदो वैवर्ण्यवेपथू। अश्रु वैस्वर्यमित्यष्टौ
सात्त्विकाः परिकीर्तिताः॥५८॥

गोत्रेति गोत्रानुकूल्यप्रभवे कुलानुकूल्यप्रसक्ते विवाहे गोत्रशत्रुर्गोत्रं
कलस्थावराम गोत्रं नामि कुरेऽचल इति विश्वः। तच्छत्रुरिन्द्रः तत्प्राति-

स्वकामसम्मोहमहान्धकारनिर्वापमिच्छन्निव दीपिकाभिः ।
उद्गत्वरीभिस्फुरितं वितेने निजं वपुर्वायुसखः शिखाभिः ॥६०॥

पत्यौ हृते भीमजया न वज्री वज्री स्वमङ्गाय निजुह्नुवे यः ।
जनादपत्रप्य सहासहायस्तस्य प्रकाशोऽभवदप्रकाशः ॥ ६१ ॥

मदण्डमालक्तकनेत्रचण्डं तमःकिरं कायमधत्त कालः ।
तत्कालमन्तःकरणं नृपाणामध्यासितुं कोप इवोपनम्रः ॥६२॥

कुल्यात् गोत्रशत्रुत्वादिव न हि यो यस्य शत्रुः स तदनुकूलकार्य्यं सहत इति भावः । अत आयन् स्वयम्बरार्थमागच्छन् इन्द्रोऽटः शर्तार यादेशः । शचीं यं वरं वोढारमेव स्वायं पुरस्कार इत्वेन सहायत्वेन स्वो चकारेत्यर्थः सएव तया दृश्ये न सहस्रामं इत्यर्थः। केचित्तु प्रवरनामा कश्चिदिन्द्रेण सहायत्वेनानीत इति व्याचक्षते तत्तु अमूलं चिन्त्यं भारतादिस्वदर्शनादिति ॥ ५९ ॥

स्वेति । अथ वायुसखोऽग्निर्दीपिकाभिः दीपैः स्वः स्वीयः कामेन संमोहोऽज्ञानमेव महान्धकारस्तस्य निर्वापं प्रशान्ति मिच्छन्निव उद्गत्वरीभिरुद्गमनशीलाभिः गत्वरश्चेति करवन्तो निपातः । शिखाभिर्ज्वालाभिस्फुरितं व्याप्तं निजं वपुर्वितेने प्रकाशयामास ॥ ६० ॥

पत्याविति । यः प्रकाशः पत्यौ स्वामिनि वज्रौ भीमजया भैम्या न हृते अनादृते सति जनादपत्रप्य लज्जित्वा लज्जा सापत्रपान्यत इत्यमरः । जुगुप्साविरामप्रमदार्थानाम् अपादानमित्यपादाने पञ्चमी । अङ्गाय शीघ्रं सपदि करणेन स्वमिजमात्मस्वरूपञ्च निजुह्नुवे अपह्नुतवान् अदर्शि वज्रेर प्रकाशादिति भावः हुतेः कर्तरि लिट् । तस्य वज्रेः सहायोऽनुचरः सोऽप्रकाशोऽनुज्ज्वलोऽभवत् हा कष्टं प्रयासवैयर्थ्यादग्निरपत्रपय त्वं निस्तेजा एवासीदित्यर्थः ॥ ६१ ॥

मदण्डमिति । अथ कालो यमस्तत्कालं तस्मिन् स्वयम्वरकाले अत्यन्तसंयोगे द्वितीया । नृपाणां मन्तःकरणमध्यासितुमधिष्ठातुम उपनम्र

दृग्गोचरोऽभूदथ चित्रगुप्तः कायस्थ उच्चैर्गुण एतदीयः।
ऊर्ध्वं तु पत्रस्य मषीद एको मषेर्दधच्चोपरि पत्रमन्यः॥६३॥
तस्यां मनोबन्धविमोचनस्य क्षतस्य तत्कालमिव प्रचेताः।
पाशं दधानः करबद्धवासं विभुर्बभावाप्यमवाप्य देहम्॥६४॥

---

उपागतः कोपः दमयन्त्यनादरोत्थक्रोध इव सदण्डं दण्डहस्तम् क-लङ्कके रक्ते तेन रक्तं रागादित्यण्प्रत्ययः। कषायौ गर्दभस्य कर्णावितिवदलङ्कके इत्युपमानाप्रयोगः। ताभ्यां नेत्राभ्यां चण्ड क्रूर किरतीति किरः इगुपधज्ञाप्रीकिरः कः। तमसः किरः त तमःस्य सं कायं देह मयत्त कालेऽपि स्वरूपं प्रादर्शयदित्यर्थः॥६२॥

दृगिति। अथ एतदीयः कालसम्बन्धि उच्चैर्महान् गुणः प्रधानं शेषभूतः चित्रगुप्तः चित्रगुप्ताख्यः कायस्थो लेखको जातिविशेषः दृग्गोचरो दृश्योऽभूत् लेखकः स्यादक्षरजीविक इति हला-युधः। अन्यत्र चित्रं यथा तथा पूर्वं निगूहितः कायस्थः कायनिष्ठ एतदीयः कालसम्बन्धि उच्चैर्महान् गुणो नीलगुणो दृग्गोचरोऽभूत् एकः सम्बन्धः चित्रगुप्तनीलगुणयोरेकः चित्रगुप्तस्तु पत्रस्योर्ध्वमुपरितले मषिं ददातीति मषीदः मषीमयलिपिकारो लेखक इत्यर्थः। अन्यस्तु पूर्व-वच्छब्दः अन्यो नील गुणस्तु मषेर्मषिद्रव्यस्योपरि ऋदिकारादक्तिनो वेति ईकारविकल्पादुभयथा प्रयोगः। पत्र पत्रालम्बनं दधत् दधानोऽभूत् मषितेऽपि कोऽयं नीलिमेत्यर्थः। नाभ्यस्ताच्छतुरिति नुमभावः। अत्र मषेरुपरि पत्रमिति प्रतीतेराभासीकरणाद्विरोधाभासोऽलङ्कारः॥६३॥

तस्यामिति। तस्यां दमयन्त्यां विषये तस्मिन् काले तत्कालं नल वरणकाल इत्यर्थः। अत्यन्तसंयोगे द्वितीया। क्षतस्य मनोबन्धविमोचनस्य-तत्प्रतियोगिसम्बन्धमिव स्थित मित्यर्थः उत्प्रेक्षा। करे बद्धदामं कृतमित्यर्थं करगतं पाशं बन्धनरज्जु दधानो विभुः प्रभुः प्रचेताः वरुणः अपां विकारमाप्यं मयमय माप्यमिति चान्द्रव्याकरणसूत्रेण साधुः। देहमवाप्य बभौ॥६४॥

सहद्वितीयः स्त्रियमभ्युपेयादेवं स दुर्बुध्य नयोपदेशम्।
अन्यां सभार्य्यः कथमृच्छतीति जलाधिपोऽभूदसहाय एव ॥६५॥
देव्यापि दिव्यां नु तनुः प्रकाशीचक्रे मुदश्चक्रभृतः सृजन्ती।
अनिङ्गितैस्तामवधार्य चिह्नैस्तद्वाचि बाला शिथिलादृताऽभूत्॥६६॥
विलोकके नायकमेलकेऽस्मिन् रूपान्यथाकौतुकदर्शिभिस्तैः।
बाधा व्यन्द्रादिभिरिन्द्रजालविद्याविदां द्राक्तवधाद्व्यधायि॥६७॥

सहेति। जलाधिपोऽपांपतिः लडयोरभेदाज्जडाधिपः मूढाग्रणीश्च स वरुणः स्त्रियं कान्तामपि द्वितीयेन सह वर्तत इति सहद्वितीयः स-सहाय एव तेन सहेति तुल्ययोग इति बहुव्रीहिः वोपसर्जनस्येति विकल्पात् सहस्य स भावः। उपेयादित्येव नयोपदेशं नीतिवाक्यम् अन्यां स्त्यन्तरं सभार्य्यः सस्त्रीकः सन् कथमृच्छति गच्छेदित्येवं दुर्बुध्य विपरीतं बुद्धा समासात् क्त्वो ल्यबादेशः असहाय एवाभूदस्त्रीक एवाभूदित्यर्थः। दमयन्ती लोभात्सर्वत्र ससहायएवोपेयादिति नीति सप्यस्त्रं सदारा-नादरे सम्प्रति सापि दुर्लभत्यक्तो वरुणस्य दुर्बुद्धिरितिभावः॥ ६५ ॥

देव्येति। अथ देव्या सरस्वत्यापि चक्रभृतो गगनगतस्य विष्णो-रपि मुदो हर्षान् सृजन्ती दिव्यां स्वतनुं प्रकाशीचक्रे मानुषीवेष मुत्सृज्य निजरूपमाविश्चकारेत्यर्थः। तदा बाला दमयन्ती अनिङ्गितैः प्रकाशितैः चिह्नैर्वीणापुस्तकादिभिः तां सरस्वतीमवधार्य्य सम्यङ् निरूप्य निश्चित्य तस्या वाचि वाक्उपन्यासे शिथिलादृता किंयदेषा भगवत्या इति शिथिलितविश्वासाभूत् ॥ ६६ ॥

विलोकक इति। विलोकके विलोकितवति अस्मिन् नायकमेलके पुरोव-र्त्तिनीनां सुरमेलके राजसङ्घे रूपान्यथा रूपनानात्वमेव कौतुकं विनो-दस्तद्दर्शिभिस्तत्प्रदर्शकैः दर्शयद्भिस्तैः व्यन्द्रादिभिरिन्द्रादिभिरि-न्द्रजालविद्याविदामैन्द्रजालिकानां द्राक्तवधाज्जीवनोच्छेदाद्धेतोर्बाधा पीड़ा व्यधायि विहिता वर्तते इति खेदे एतन्महेन्द्रजालाद्भुतावलोकिना

विलोक्य तावाप्तदुरापकामौ परस्परप्रेमरसाभिरामौ।
अथ प्रभुः प्रीतमना बभाषे जाम्बूनदोर्वीधरसार्वभौमः॥६८॥
वैदर्भि! दत्तस्तव तावदेष वरो दुरापः पृथिवीश एव।
दूत्यन्तु यत्त्वं कृतवानमायं नल! प्रसादस्त्वयि तन्मयायम्॥६९॥
प्रत्यक्षलक्ष्यामवलम्ब्य मूर्त्तिं कृतानि यज्ञेषु तवोपभोक्ष्ये।
संशेरतेऽस्माभिरवीक्ष्य भुक्तं मखं हि मन्त्राधिकदेवभावे॥७०॥

---

भिन्नशाखान्तरेषु अरुच्या तदुपजीविनां तेषां वृत्तिविच्छेदः प्राप्त इत्यहो मेदं देवमायेतिभावः।६७।

विलोक्येति। अथ साक्षात्कारानन्तरं जाम्बूनदोर्वीधरस्य हेमाद्रिसम्बन्धि सर्वस्या भूमेरीश्वरः सार्वभौमः सर्वाध्यक्षः सर्वभूमिपृथिवीभ्यामणञ्‌ इत्यणप्रत्ययः अनुशतिकादीनां चेत्युभयपदवृद्धिः। प्रभुर्महेन्द्रः आप्तदुरापकामौ प्राप्तदुर्लभमनोरथौ परस्परप्रेमा अन्योन्यानुरागः स एव रसस्तेनाभिरामौ अन्यथा रसाभावादितिभावः। तौ दमयन्तीनलौ विलोक्य प्रीतमनाः सन्तुष्टान्तरङ्गः सन् बभाषे॥६८॥

ता बभाषेत्युक्त तत्र वैदर्भीं तावद् वैदर्भीति। हे वैदर्भि! तव तावदेष पृथिवीशो नल एव दुरापो अस्मदनुग्रहं विना दुर्लभो वरो दत्तः पारितोषिकस्तावदेष वर उभयसाधारणस्त्वेव तु वरान्तरञ्च भविष्यतीतिभाव। नलञ्चाह हे नल! त्वन्तु अमायमकपटं दूत्यं दूतकर्म दूतस्य भावः कर्म वेति यत्प्रत्ययः। कृतवानिति यत्तत्तस्मात्त्वयि विषये मया अयं वक्ष्यमाणः प्रसादो वरो दत्त॥६९॥

प्रत्यक्षेति। हे नल! तव यज्ञेषु प्रत्यक्षेण लक्ष्यां दृश्यां मूर्त्तिं विग्रहमवलम्ब्य इह कृतानि हवींष्युपभोक्ष्ये अनुभोक्ष्ये भोपाभ्यां भुजेरित्यात्मनेपदं। तथा हि अस्माभिर्भुक्तं मखं यज्ञमवीक्ष्य प्रत्यक्षेणादृष्ट्वा मन्त्राधिकदेवभावे शब्दातिरिक्तदेवसद्भावे संशेरते सन्दिहते यतुर्थ्यन्तशब्दो देवतेति मीमांसकाः इत्यन्तेह निवृत्त्यर्थं ते विग्रहं दर्शयिष्यामीत्यर्थः॥७०॥

भवानपि त्वद्दयितापि शेषे सायुज्यमासादयतं शिवाभ्याम्।
प्रेत्यास्मि कीदृक् भवितेति चिन्ता सन्तापमन्तस्तनुते हि जन्तोः॥७१॥
तवोपवाराणसि नाम चिह्नं वामाय पारेऽसि पुरं पुरास्ते।
निर्यातुमिच्छोरपि तत्र भैमी सम्भोगसङ्कोचभियाधिकाशि॥७२॥
धूमावलिश्मश्रु ततः सुपर्वा मुखं मखास्वादविदां तमूचे।
कामं मदीनामदकामधेनोः पयायतामभ्युदयस्त्वदीयः॥७३॥

अथोभयसाधारणं वरमाह भवानिति। भवानपि त्वञ्च त्वद्दयितापि च तौ च शेषे आयुरवसाने शिवा च शिवश्च ताभ्यां शिवाभ्यां पार्वतीपरमेश्वराभ्यां सह पुमान्स्त्रियेत्येकशेषः। सयुजोभावः सायुज्यन्तादात्म्यम् आसादयतं प्राप्नुतम् आमुष्मिकफलोक्तौ कारणमाह प्रेत्य लोकान्तरं गत्वा कीदृग्भविता कीदृशो भविष्यामीति चिन्ता जन्तोरन्तरन्तरङ्गे सन्तापं तनुते तन्निवृत्त्यर्थमयमुक्तिरित्यर्थः॥७१॥

तवेति। किञ्च तव वामाय निवासाय उपवाराणसि वाराणस्याः समीप अव्ययं विभक्तीत्यादिना अव्ययीभावः। असिर्नाम नदी तस्याः पारे पारे मध्ये षष्ठ्या वेत्यव्ययीभावः। नाम चिह्नं त्वन्नामाङ्कितं परं नलपुरं पुरास्ते आसिष्यते भविष्यतीत्यर्थः आसे भविष्यदर्थे यावत् पुरानिपातयोर्लट्। तत्पुरं निर्यातुं मोक्तुमिच्छोः मुमुक्षोरपि तव भैमीसम्भोगस्य सङ्कोचात् प्रतिबन्धाद्भिया अधिकाशि काश्यां न भविष्यति मुमुक्षोरपि स्वयावज्जीवं भैम्या सह नलपुरे विहृत्य अन्ते काश्यां शिवसायुज्यमाप्स्यसीत्यर्थः॥७२॥

धूमेति। तत इन्द्रवरदानानन्तरं धूमावलिरेव श्मश्रूणि यस्य तत् मखास्वादविदां मखरसज्ञानां क्रतुरिह मुखं मुखभूतः सुपर्वा देवोऽग्निः अग्निमुखा वै देवा इति श्रुतेः। तं नलमूचे तदेवाह हे नल! त्वदीयोऽभ्युदयो वृद्धिः मदीनामयी महावृष्टिरिव कामधेनुः तस्याः कामं पयायतां क्षीरायतां मत्कटाक्षमात्रेण ते सर्वार्थसिद्धिर्भविष्यतीत्यर्थः।

या दाहपाकौपयिकी तनुर्मे भूयात् त्वदिच्छावशवर्त्तिनी सा।
तया पराभूततनोरनङ्गात् तस्याः प्रभुः सन्नधिकस्त्वमेधि ॥७४॥
अन्नं त्वया साधितमन्नमीनरसादि पीयूषरसातिशायि।
तद्भूय विद्मस्तव सूपकारक्रियासु कौतूहलशालि शीलम् ॥७५॥
वैवस्वतोऽपि स्वत एव देवस्तुष्टस्तमाचष्ट नराधिराजम्।
वरप्रदानाय तवावदानैश्चिरं मदीया रसनोद्यतेयम् ॥७६॥

कर्तुः क्यङ् सलोपश्चेति पयःशब्दादाचारार्थे क्यङ्प्रत्ययो वैभाषिकः सलोपश्च ओजसोऽप्सरसो नित्यं पयसस्तु विभाषेति वचनात् ॥७३॥

येति। दाहो भस्मीकरणं पाकस्तण्डुलविक्लेदनादि तयोः औपयिकी उपायभूता विनयादित्वात् स्वार्थे ठकि ङीप् उपायाद्ध्रस्वत्वञ्च। ईदृशी या मे तनुः सा त्वदिच्छया वशवर्तिनी भूयात्। किञ्च त्वं तस्यास्तनोः प्रभुः स्वामी नियामकः सन् तया तन्वा पराभूततनोरनङ्गात् किं स्मरहरक्रोधान्यतममूर्तित्वादस्या इति भावः। अनङ्गादधिक एधि भव न केवलं रूपादेवानङ्गादधिकः किन्तु तज्जयात् [illegible]रपि [illegible]दिति भावः। अस्तेर्लोटि सिपि हेर्धि [illegible] ॥७४॥

अन्नमिति। किञ्च हे भूप! त्वया साधितं पक्वम् अन्नं शाल्यादि मीनेति मांसोपलक्षणं तयोः रसः स्वादः आदिर्यस्य यादिशब्दह[illegible] तत्सर्वं पीयूषरसममृतस्वादमतिशेते इत्यतिशायि ततोऽप्युत्कृष्टमस्तु ईदृग्वरदाने कारणमाह तदिति तद्भूय तव शीलं स्वभावं सूपं सूपादिपाकं कुर्वन्तीति सूपकाराः सूदाः सूपकारास्तु बल्लवाः आरालिका आन्धसिकाः सूदा औदनिका गुणा इत्यमरः कर्मण्यण्। तेषां क्रियासु पाकक्रियासु सूपकारक्रियासु च कौतूहलमभिलाषस्तत् इति तच्छालि उत्कण्ठितं विद्मः अतस्त्वमेव सूपविद्या [illegible] ॥७५॥

वैवस्वत इति। देवो वैवस्वतो यमोऽपि स्वत एव स्वयमेव तुष्टः सन् तं धराधिराजं नलम् आचष्ट अब्रवीत् तदेव ४ हे नृप! तव अव-

अम्लानिरामोदभरश्च दिव्यः पुष्पेषु भूयाद्भवदङ्गसङ्गात् ।
इष्टं प्रसूनोपमया मयान्यत्न धर्म्मगर्मोभयकर्म्मठं यत् ॥ ८२ ॥
वाग्देवतापि स्मितपूर्व्वमुर्व्वीसुपर्व्वराजं रभसादभाषे ।
त्वत्प्रेयसीसम्मदमाचरन्त्या मत्तो न किञ्चिद् ग्रहणोचितं ते ॥ ८३॥
अर्थो विनैवार्थनयोपनीतस्त्वल्पोऽपि धीरैरवधीरणीयः ।
मान्येन मन्ये विधिना वितीर्णः स प्रीतिदायो बहु मन्तुमर्हः॥८४

पांशौ कृतहोमोऽपि स इति विस्मयः । प्रमादितामोदारोपितोदक सन् पुरं वास्तु पूर्ववन्निर्जल एव स्थित्यर्थः ॥ ८१ ॥

द्वितीय वरमाह अम्ल निरिति । हे नल ! भवतोऽङ्गसङ्गात्करस्पर्शा देव पुष्पेष्वम्लानिरम्लानत्वं दिव्य आमोदभरः सौरभ्यसम्पच्च भूयात् कस्य वरस्य स्व स्यतामाह यन्मया तु प्रसूनोपमया पुष्पसदृश्येन धर्मगर्मणोः सुकृत-सुखयोरुभयोरप्यन्वये कर्मठं कर्मणि घटं कर्मक्षममित्यर्थः । कर्मशूरस्तु कर्मठ इत्यमरः । कर्मणि घटोऽठजिति ठच्प्रत्ययः । अन्यनया न इष्ट सुरार्चन स्वोपभोगाभ्यामिह सुख चोपयोग च्छाय्येऽयं वर इत्यर्थः ॥ ८२ ॥

वागिति । वाग्देवतापि स्मितपूर्वं यथा तथा उर्वीसुपर्वराजं भूदेवेन्द्रं नलं रभसाद्धर्षात् वभाषे रभसो वेगहर्षयोरिति विश्वः । अथ स्व प्रदत्तोक्तिपूर्वकं स्वदेयस्य वरस्य परिहार्यत्वं तावत्सार्धश्लोकेनाह त्वदिति त्वत्प्रेयस्या दमयन्त्याः सम्मदं हर्षं त्वद्वरणरूपं प्रियमित्यर्थः । प्रिय सम्मदौ हर्ष इति निपातः आचरन्त्या कुर्वन्त्या अत एव मत्तो मत् स्वस्मा-दिमत्तो पञ्चम्यर्थे तसिप्रत्ययः । ग्रहणोचितमादानेन स्वीकारार्हं ते तव किञ्चित् ज्ञानान्तरं नास्ति अतो मद्वरं ग्राह्यमित्यर्थः ॥ ८३ ॥

अर्थ इति । किञ्च अर्थनया याचनादैन्येन विनोपनीतः स्वयमुपनतः स्व-ल्पोऽप्यर्थो हितार्थो धीरैः प्रेक्षावद्भिः अवधीरणीयः उपेक्ष्यो न भवति मान्येन पूज्येन विधिनेव ब्रह्मणेव वितीर्णो दत्तः दीयत इति दायः कर्मणि

सर्व्वाङ्गीणरसामृतस्तिमितया वाचा स वाचस्पतिः
स स्वर्गीयमृगीदृशामपि वशीकाराय मारायते।
यस्मै यः स्पृहयत्यनेन स तदेवाप्नोति किं भूयसा
येनायं हृदये कृतः सुकृतिना मन्मन्त्रचिन्तामणिः ॥८६॥
पुष्पैरभ्यर्च्य गन्धादिभिरपि सुभगैश्चारुहंसेन मां चे-
न्निर्यान्तीं मन्त्रमूर्त्तिं जपति मयि मतिं न्यस्य मय्येव भक्तः।

यन्त्रपक्षे भगवद्योनीव दृश्यं यद्रूपं त्रिकोणाख्यम् उभयाकारघटनात् त्रिकोणद्वयमेलनात् षट्कोणं भवति तस्य षट्कोणस्य मध्यमे मन्त्रम् अनन्तरोक्तं नरपते इत्यादि पूर्ववत्। अत्र देवतामन्त्रयन्त्राणां त्रयाणामपि प्रकृतत्वात् केवलप्रकृतश्लेषोऽलङ्कारः। शिखरिणीवृत्तम् ॥ ८५ ॥

सम्प्रति श्लोकद्वयेन मन्त्रमाहात्म्यमाह सर्वाङ्गीणेत्यादि। येन सुकृतिना पुण्याधिकेनायं पूर्वोक्तो मन्मन्त्र एव चिन्तामणिः हृदये कृतोऽनुस्मृतः सोऽनुकृतः सर्वाङ्गीणेन सर्वाङ्गव्यापिना तत्सर्वादिरित्यादिना ख प्रत्ययः। रसः शृङ्गारादिः तेनैवामृतेन स्तिमितया भरितया वाचा वाग्वैदग्ध्येन स वाचस्पतिर्बृहस्पति स्तत्सदृशो भवतीत्यर्थः। कस्कादिषु चेति वाचः पतिः पुत्रेत्यादिना विसर्जनीयस्य सत्वमिति स्वामी तत्र छन्दोविषयत्वादिति। स्वर्गे भवः स्वर्गीया वा नामधेयस्येति वृद्धत्वा छप्रत्ययः। तासां मृगीदृशां स्त्रीणां वशीकाराय वशीकरणाय मार इवाचरति मारायते न केवलं वाक्पटुः स्त्रीवशीकरणश्चेत्यर्थः। यद्वा भूयसा बहुतरोक्तेन किं किन्तु यो यस्मै स्पृहयति यत्कामयते स्पृहेरीप्सित इति सम्प्रदानत्वाच्चतुर्थी, स कामी तत्सर्वमनेन मन्त्रेणाप्नोति एव यतोऽयं चिन्तामणिरिति भावः ॥ ८६ ॥

पुष्पैरिति। किञ्च हंसेन वाहनभूतेन चारु रम्यङ्निर्यान्तीं सञ्चरन्तीं मन्त्रमूर्त्तिं मन्त्ररूपां मां सुभगैर्मनोज्ञैः पुष्पैर्गन्धादिभिरादि शब्दादुपचारैरभ्यर्च्य मयि मतिं न्यस्य मनो निधाय मय्येव भक्तः सन्

सम्प्राप्ते वत्सरान्ते शिरसि करममी यस्य कस्यापि धत्ते
सोऽपि श्लोकानकाण्डे रचयति रुचिरान्कौतुकं दृश्यमस्य ॥ ८९ ॥
गुणानामास्थानीं नृपतिलक! नारीतिविदितां
रसस्फीतामन्तस्तव च तव वृत्ते च कवितुः।
भवित्री वैदर्भीमधिकमधिकण्ठं रचयितुं
परीरम्भक्रीडाचरणशरणामन्वहमहम् ॥ ८८ ॥

जपति चेत्तर्हि वत्सरान्ते सम्प्राप्ते सत्यमी जपिता यस्य कस्यानक्षरस्यापि शिरसि करं धत्ते निधत्ते सोऽनक्षरोऽप्यकाण्डे अकस्माद्रुचिरान् श्लोकान् रचयति अस्य मन्त्रस्यैतत्कौतुकं अद्भुतं दृश्यं द्रष्टव्यम् ॥ ८९ ॥

अथ श्लोकद्वयेन नलं प्रत्युपयोगविशेषमाह गुणानामित्यादि। हे नृपतिलक! नृपश्रेष्ठ! गुणानां रूपलावण्यादीनां श्लेषप्रसादादीनाञ्चास्थानीम् आधारभूताम् आस्थानीं सभां सत्यां सत्स्थानमित्यमरः। नारी उत्तमस्त्रीति विदितां विश्रुताम् अन्यत्र रीतिषु गौडीपाञ्चाल्यादिषु विदिता प्रसिद्धा सा न भवतीत्यरीति विदितां न अद्विदितां नञ्समासः। सापि न भवतीति नारीतिविदितां नञ्द्वयस्य नञ्समासद्वयस्य सुप्सुपेति समासः। तां रीतिषु विदितामित्यर्थः। अन्तरन्तरङ्गे रसस्फीतां रसभृतां अन्यत्र शृङ्गारादिरसाढ्यां शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः इत्यमरः। वैदर्भीं दमयन्तीं वैदर्भीरीतिं च तव कस्तूलनव च तव वृत्ते चरित्रविषये कवितुं वर्णयितुं कवेः कवि वर्णने इति धातोस्तुन्। अधिकण्ठं कण्ठे विभक्त्यर्थेऽव्ययीभावः। परीरम्भक्रीडाचरणमालिङ्गनविनोदाचरणमेव शरणं प्राणत्राणं यस्याः सा तदेकजीविता अन्वहमनुदिनं यथार्थेऽव्ययीभावः नपुंसकादन्यतरस्यामिति समासान्तष्टच् अहःष्टखोरेवेति टिलोपः। अधिकमत्यर्थं रचयितुं कर्तुमहं भवित्री भविष्यामि त्वयेः ॥ ८८ ॥

भवदिति। किञ्च हे नल! भवतो वृत्तस्य चरित्रस्य श्रोतुः श्रा- ... ... ...तकण्ठ। तस्य कवितुः कथं सुखात्

भवद्वृत्तस्तोतुर्मदुपहितकण्ठस्य कविनु-
र्मुखात् पुण्यैः श्लोकैस्त्वयि घनमुदेयं जनमुदे ।
ततः पुण्यश्लोकः क्षितिभुवनलोकस्य भविता
भवानाख्यातः सन् कलिकलुषहारी हरिरिव ॥ ८९ ॥

देवी च ते च जगदुर्जगदुत्तमाङ्ग-
रत्नाय ते कथय कं वितराम कामम् ।
किञ्चित्त्वया न हि पतिव्रतया दुरापं
भस्मास्तु यस्तव बत व्रतलोपमिच्छुः ॥ ९० ॥

त्वयि विषये पुण्यैः पवित्रैः चारुभिर्वा पुण्यन्तु चारुणि पवित्रमित्यमरः । श्लोकैः पद्यैः जनमुदे घनं निरन्तरम् उदेयम् उदेतव्यम् उदेयतामित्यर्थः । एतेः क्यपो यत्प्रत्ययः । ततः को मे लाभस्तत्राह तत इति ततः श्लोकोदयात् पुण्यश्लोकः पुण्यकीर्तिः भवानाख्यातः कीर्तितः सन् हरिर्जनार्दन इव क्षितिभुवनलोकस्य भूलोकस्य कलिकलुषहारी कलिकालकल्मषनाशनो भविता भविष्यति भवतेर्लुटि शेषे प्रथम [illegible] । पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः ॥ कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनमिति ॥ ८९ ॥

अथ ते सर्वे दमयन्तीं प्रत्याहुः देवीति । देवी सरस्वती च ते देवाश्च जगदुः जगदुत्तमाङ्गरत्नाय त्रैलोक्यशिरोमणये उत्तमाङ्गं शिरः शीर्षमित्यमरः । ते तुभ्यं कम्यते इति कामः अभीप्सितः कर्मणि घञ् । वितराम प्रयच्छाम सम्प्रश्ने लोट् । कथय पत्यौ व्रतं नियमोऽस्यास्तीति यस्यास्तया त्वया दुरापं दुष्प्रापं नास्ति पातिव्रत्यतेजसोऽप्रतिहतशक्तित्वा-दिति भावः । तथापि यः पापी तव पत्यौ व्रतवत्त्वं तस्य लोपं नाशमिच्छुः अभिलाषुकः 'बिन्दुरिच्छुः' इत्युप्रत्ययान्तो निपातः न लोकेत्यादिना

कूटकायमपहाय नो वपु-

र्बिभ्रतस्त्वमसि वीक्ष्य विस्मिता ।

आप्नु माकृतिमतो मनीषितां

विद्यया हृदि तवाप्युदीयताम् ॥ ९१ ॥

इत्थं वितीर्य वरमम्बरमाश्रयत्सु

तेषु क्षणादुदलसद्विपुलः प्रणादः ।

उत्तिष्ठतां परिजनालपनैर्नृपाणां

स्ववासिवृन्दहतदुन्दुभिनादसान्द्रः ॥ ९२ ॥

---

षष्ठी प्रतिषेधात्कर्मणि द्वितीया। स पापी भस्मास्तु तथाचाकस्मात्प्रमादा देव तत्प्रतीकारात्तव ततो भयो न भविष्यतीति भावः। एतच्चोत्तरत्र वनवासे अजगरग्रस्तां दमयन्तीमजगरादुन्मोच्य पुनस्तां कामयमानस्य पापिष्ठस्य व्याधस्य वधे फलिष्यतीति भारती कथात्वानुसन्धेया ॥ ९० ॥

अथ वरान्तरस्य कूटेति। कूटकायं कपटदेहं नलाकारमपहाय वपुर्निजविग्रहं बिभ्रतो बिभ्राणानस्मान् वीक्ष्य त्वं विस्मिता विस्मयाविष्टा तेन तत्कामाश्चर्यमिति प्रतिभासीति भावः। अतो हेतोर्मनीषिता अभिलषिता माकृतिं शरीरमाप्य तवापि हृदि हृदये विद्यया कामरूपसम्पादकविद्यया उदीयताम् उद्भूयताम् उत्पूर्वादिणो भावे लोट् ॥ ९१ ॥

इत्थमिति। तेषु देवेष्वित्थं वरं वितीर्य दत्त्वा अम्बरमाकाशमाश्रयत्सु सत्सु उत्तिष्ठतां गमनेच्छूनां उच्छलतां नृपाणां प्रणादो हर्षोत्थध्वनिः प्रणादस्तु शब्दः स्यादनुरागज इत्यमरः। परिजनानामालापनैः सम्भाषणैर्विपुलः सन् तथा स्ववासिनां दिव्यजनानां वृन्देन हतानां ताडितानां दुन्दुभीनां नादेन सान्द्रो घनः सन् क्षणादुदल

न दोषं विद्वेषादपि निरवकाशं गुणमये
वरेण प्राप्तास्ते न समरसमारम्भसदृशम् ।
जगुः पुण्यश्लोकं प्रति नृपतयः किन्तु विदधुः
स्वनिश्वासैर्भैमीहृदयमुदयन्निर्भरदयम् ॥ ९३ ॥

भूभृद्भिर्लम्भितासौ करुणरसनदीमूर्त्तिमद्देवतात्वम्
तातेनाभ्यर्थ्य योग्याः सपदि निजसखीर्दापयामास तेभ्यः ।
वैदर्भ्यास्तेऽप्यलाभात् कृतगमनमनःप्राणवाञ्छां निजघ्नुः
सख्याः संशिक्ष्य विद्यां सततधृतवयस्यानुकाराभिराभिः ॥ ९४ ॥

नेति। प्राप्ताः स्वयम्बरागताः ते नृपतयो गुणमये गुणैकनिलये नले निरवकाशं दोषं विद्वेषादपि द्वेषे सत्यपीत्यर्थः। न जगुः नोद्घाटयामासुः तादृशगुणसम्पत्तिरदोषता चास्येति भावः। किन्तु वरेण शच्या दत्तेन हेतुना पुण्यश्लोकं नलं प्रति समरसमारम्भस्य युद्धोद्योगस्य सदृशमनुकूलञ्च किञ्चिन्न जगुः नोचुः गैशब्दे इति धातोर्लिट्। सान्निध्ययोगात्किल तत्र शच्याः स्वयम्बरक्षोभकतासम्भाव इति भावः। किन्तु स्वनिश्वासैर्दुःखोत्थैः। भैमीहृदयञ्चेतः उदयन्ती निर्भरा अतिमात्रा दया यस्य तत्तथाभूतं विदधुः तद्दुःखं विदधुश्चक्रुः स्वावरण दुःखानुभूतो दृष्ट्वा तद्दुःखप्रहणेऽसमर्था इत्यर्थः ॥ ९३ ॥

भूभृद्भिरिति। असौ दमयन्ती भूभृद्भिः भूपालैः करुणस्य रसनद्याः करुणरसप्रवाहस्य मूर्त्तिमद्देवतात्वमधिदेवतात्वं लम्भिता प्रापिता कृता स्वदुःखेन दुःखाकृता सतीत्यर्थः। सपदि योग्याः राजार्हाः निजसखीः तेभ्यो भूभृद्भ्यः सम्प्रदाने चतुर्थी। तेन पित्रा भीमेनाभ्यर्थ्य सम्प्रार्थ्य दापयामास ते भूभृतोऽपि वैदर्भ्याः अलाभाद्धेतोः कृतं गमनं निष्क्रमणेच्छा यैस्तेषां मनःप्राणानां वाञ्छां निष्क्रमणेच्छाकर्माणि सख्याः भैम्याः आख्यातोपयोग इति अपादानत्वात्पञ्चमी। विद्यां कामरूपधारणविद्यां शिक्षा... संशिक्ष्याभ्यस्य सततं नित्यं धृतो वयस्यानुकारो भैमीसादृश्यं याभिः

सानन्दं तनुजाविवाहनमहे भीमः स भूमीपति-
र्वैदर्भीनिषधाधिपौ नृपजनानिष्टोक्तिसंसृष्टये ।
स्वानि स्वानि धराधिपाश्च शिबिराण्युद्दिश्य यान्तः क्रमा-
देकौ द्वौ बहवश्चकार सृजतः स्मार्तेतरे मङ्गलम् ॥ ९७ ॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
यातस्तस्य चतुर्दशः शरदिजज्योत्स्नाच्छसूक्तेर्महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ ९८ ॥

उत्क उन्मना इति निपातः । भैमीं निवृत्य निवृत्य पुनः पुनः परावृत्य पश्यति स्म सस्नेहं भगमर्ति मस्तु हृदयंगम इति भावः ॥ ९६ ॥

सानन्दमिति । तत्र तस्मिन् तनयाया दुहितुः दमयन्त्या विवाहने परिणयने विपूर्वाद्वहतेर्ण्यन्तात् भावे ल्युट् । तदेव महः उत्सवः तस्मिन् स भीमो भूमीपतिः भूपतिस्तथा वैदर्भीनिषधेश्वरौ दमयन्तीनलौ तथा स्वानि स्वानि शिबिराण्युद्दिश्य यान्तो धराधिपा एकौ द्वौ बहवः एते त्रितयेऽपि नृपाणां ये जनाः परिजनास्तेषां या अनिष्टोक्तिः रक्षं न वाक्यानि तासां संसृष्टये रहितुं परिहराय मङ्गलं नगरसंस्कारादि देवतानुसरणादिरूपं धर्मादिकं कुलाचारं क्रमादेको भीमश्चकार द्वौ दमयन्तीनलौ सृजतः स्म असृजतां चक्रतुरित्यर्थः इतरे बहवो धराधिपाश्चक्रुरित्यर्थं क्रमादलङ्कारः ॥ ९७ ॥

श्रीहर्षमिति । शरदि भवा शरदिजा सप्तम्यां जनेर्डः । प्रावृट्शरत्कालदिवाञ्ज इति सप्तम्या अलुक् । सा च सा ज्योत्स्ना तद्वदच्छा स्पष्टाः सूक्तयो यस्य तस्य स गतमन्यत् ॥ ९८ ॥

इति पदवाक्यप्रमाणपारावारपारीण श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां नैषधव्याख्यायां जीवातुसमाख्यायां चतुर्दशः सर्गः ॥ १४ ॥

# नैषधचरितम्।

## पञ्चदशः सर्गः।

अथोपकार्य्यां निषधावनीपतिर्निजामयासीद्वरणस्रजान्वितः।
वसूनि वर्षन् सुबहूनि बन्दिनां विशिष्य भैमीगुणकीर्त्तनाकृताम्॥१॥
तथा पथि त्यागमयं वितीर्णवान् यथातिभाराधिगमेन मागधैः।
तृणीकृतं रत्ननिकायमुच्चकैश्चिकाय लोकश्चिरमुञ्छमुत्सुकः॥२॥

अथेति। अथ स्वयम्वरविसर्गानन्तरं निषधावनीपतिर्नलः वरणस्रजान्वितः सन् बन्दिनां स्तुतिपाठकानां तत्रापि भैमीगुणकीर्तनां कुर्वन्तीति तत्कृतां तत्कारिणां क्विप्। विशिष्यातिशय्य बहूनि भूयिष्ठानि वसूनि धनानि वर्षन् निजाम् आत्मीयाम् उपकार्य्याम् उपकारिकाम् अयासीद् अगमत् यातेर्लुङि यमरमनमातां सक् चेति सगिडागमौ अस्तिसिचोऽपृक्ते इतीडागमः॥१॥

तथेति। अयं नलः तथा तेन प्रकारेण पथि स्वनिवेशमार्गे त्यज्यत इति त्यागं धनं कर्मणि घञ्। वितीर्णवान् दत्तवान् यथा येन प्रकारेण अतिभारस्यातिगुरुत्वस्याधिगमेन प्राप्त्या मागधैर्बन्दिभिस्तृणीकृतं तृणवत्त्यक्तम् उच्चैरुच्छ्रितं रत्नानां निकायं समूहं लोको जन उत्सुकः सन् चिरं बहुकालम् उच्चैश्चिकाय उञ्छेन सञ्चितवान् विभाषा चेरिति कुत्वम् उञ्छो धान्यस्य कणश आदानं कणिकाद्यर्जनं शीलमिति च यादव॥२॥

त्रपास्य न स्यात् सदसि प्रियान्वयात् कुतोऽतिरूपः सुखभाजनं जनः।
अमूदृशी तत्कविवन्दिवर्णनैरपाकृता राजकरञ्जिलोकवाक् ॥३॥
अदोषतामेव सतां विवृण्वते द्विषां मृषादोषकणाधिरोपणाः।
न जातु सत्ये सति दूषणे भवेदलीकमाधातुमवद्यमुद्यमः ॥४॥
विदर्भराजोऽपि समं तनूजया प्रविश्य हृष्यन्नवरोधमात्मनः।
शशंस देवीमनुजातसंगयां प्रतीच्छ जामातरमुत्सुके नलम् ॥५॥

त्रपेति। अस्य नलस्य सदसि सभायां प्रियान्वयात्प्रियासमागमात् त्रपा अनुचितमाचरामीति लज्जादुःखं न स्यादिति काकुः-स्यादेवेत्यर्थः। तथा हि अतिरूपोऽतिमात्रसौन्दर्यो जनः कुतः क्व सुखभाजनं सुखास्पदम्भवेत न कुत्रापीत्यर्थः। असाविव दृश्यत इति अमूदृशी एतादृशी उक्तरूपेत्यर्थः। अदःशब्दोपपदाद्दृशेस्त्यदादिषु दृशोऽनालोचने कञ् चेति कञ्, टिड्ढाण इत्यादिना ङीप्, आसर्वनाम्न इत्यात्वे अदसोऽसेर्दादु दो म इत्युत्वमत्वे। राजकं राजसमूहं रञ्जयतीति राजकरञ्जिनी तदिच्छानुकूलवादिना लोकानां जनानां वाक् पूर्वोक्ता निन्दोक्तिः तस्य नलस्य कवीनां वन्दिनाञ्च वर्णनैः अहो निखिलराजकमवधूय त्वया स्वीकृतं लक्ष्म सर्वोत्तरोऽसीत्यादिस्तवैरपाकृता-न्यक्कृता वागपाकृतेति विरोधस्फुरणाद्विरोधाभासोऽलङ्कारः ॥३॥

अदोषतामिति। द्विषां सम्बन्धिन्यः शत्रुकृता इत्यर्थः। मृषादोषकणाधिरोपणाः अलीकदोषलवारोपाः सतां सज्जनानाम् अदोषतां निर्दोषतामेव विवृण्वते प्रकाशयन्ति सूर्ये कलङ्कारोपणवदित्यर्थः। सदोषे दोषारोपणं दोषमेव प्रकाशयन्तीत्याशङ्क्याह नेति। जातु कदाचिदपि सत्ये दूषणे सति अलीकम् असत्यम् अवद्यं दूषणम् अवद्यपण्येत्यादिना निपातः। आधातुम् आरोपयितुम् उद्यमः उद्योगो न भवेत् शशाङ्के कलङ्कारोपणवदिति भावः ॥४॥

विदर्भेति। अथ विदर्भराजो भीमोऽपि तनूजया दुहित्रा भैम्या समम् आत्मनोऽवरोधम् अन्तःपुरं हृष्यन् प्रविश्य जातरुचया इष्टवरलाभे

अथावदद्दूतमुखः स नैषधं कुलस्य बाला च ममानुकम्प्यताम् ।
स पल्लवत्वद्य मनोरथाङ्कुरं चिरेण नस्त्वच्चरणोदकैरिति ॥९॥
तथोदितं भीमवचःप्रतिध्वनिं निपीय दूतस्य स वक्त्रगह्वरात् ।
व्रजामि वन्दे चरणौ गुरोरिति ध्रुवम् प्रदाय प्रजिघाय तं वसु ॥१०

परिषत् अशीर्णं रक्षणैः समग्रैरित्यर्थः। ऋञ् गताविति धातोः कर्तरि क्तः स्वादिभ्य इति निष्ठानत्वं। गुणैः शुभग्रहवीक्षणादिभिरुपलक्षितमुहूर्ते विवाहलग्ने आमितवत्योऽस्तनिस्तुषं निर्दोषमग्रमेवांशकलग्ननवांशकं शशंस कथयामास तदा स भूपस्तनयां दातुं प्रचक्रमेऽन्वितर्वदित्यर्थः ॥ ८ ॥

अथेति। अथ स भीमो दूत एव मुखं यस्य स सन् मम कुलस्य बाला भैमी चानुकम्प्यता अनुग्राह्यता अद्य नोऽस्माकं मनोरथाङ्कुरः प्रागङ्कुरितो मनोरथः चिराय त्वच्चरणोदकैः पाद्योदकैः पल्लवेन सह वर्त्तत इति सपल्लवः स इवाचरतु सपल्लवतु उपप्लवः सपल्लव इवास्त्वित्यर्थः। सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यम् इति पल्लवशब्दादाचारे क्विबन्तौ धातोः प्रार्थनायां लोट्। इति नैषध नलमवदत् नलाह्वानाय दूत प्रेषितवानित्यर्थः ॥ ९ ॥

तथेति। स नलो दूतस्य वक्त्रमास्यमेव गह्वरं गुहा तस्मात्तथा उदित मुदितं भीमवचः प्रतिध्वनिं निपीय दूतमुखात् भीमवचनं श्रुत्वेत्यर्थः। व्रजामि गुरोः श्वशुरस्य चरणौ वन्दे स्वयमहम् आगच्छामि गुरुपादवन्दनायेति ध्रुवन् वसु वसुधनं प्रदाय पारितोषिकं दत्त्वा तं दूतं प्रजिघाय प्राहिणोत् हिगताविति धातोः लिटि हेरच इति कुत्वम् ॥ १० ॥

निपीतेति। स विदर्भभर्त्ता भीमो निपीतदूतालपितः श्रुत दूतवाक्यः सन् निगद्यमाने श्रुता ताम्नन्द्रवाक् कृकटकूजितं येन सः ककवाकुः स्यात्कुक्कुटः कृकवाकुश्चरणायुध इत्यमरः। रथाङ्गश्चक्रवाकः रथाङ्गाह्वय

निपीतदूतालपितस्ततो नलं विदर्भभर्त्ताऽऽगमयाम्बभूव सः।
निशावसाने श्रुतताम्रचूडवाग्यथा रथाङ्गस्तपनं धृतादरः ॥११॥
क्वचित्तदालेपनदानपण्डिता क्षमप्यहङ्कारमगात्पुरस्कृता।
अलम्भि तुङ्गासनसन्निवेशनादपूपनिर्म्माणविदग्धयादरः ॥१२॥
मुखानि मुक्तामणितोरणात्तदा मरीचिभिः पान्थविलासमाश्रितैः
पुरस्य तस्याखिलवेश्मनामपि प्रमोदहासच्छुरितानि रेजिरे॥१३

नामकः इति रथाङ्गपर्य्यायाणां चक्रवाकनामत्वाभिधानात् पुंलिङ्गता। तपनं यथ सूर्य्यमिवेति श्रुतोपमा। इव वत् वा यथाशब्दानां प्रयोगे श्रौतीति लक्षणात्। धृतादरः सन् नलमागमयाम्बभूव। नलागमनं प्रतीक्षितवानित्यर्थः। तादृगुपमासामर्थ्यादिति ॥११॥

क्वचिदिति। तदा तत्काले आलेपनदानपण्डिता सुधालेपनादिक्रियादक्षा काचित् आलेपनकर्म्मणि पुरस्कृता प्राधान्येन नियुक्ता सती कमप्यवाच्यं अहङ्कारं गर्वमगात। अपूपानां भक्ष्यभेदानां निर्माणे विदग्धया कयाचित्तुङ्गासने सन्निवेशनादुपवेशनादादरः आत्मन्यभिमानोऽलम्भि प्रापि लब्ध इत्यनुसङ्गमः ॥१२॥

मुखानीति। तदा तत्काले तस्य पुरस्य सम्बन्धिनामखिलवेश्मनामपि मुखानि द्वाराणि वक्त्राणि च मुक्तामणितोरणात् तत्र बहिर्द्वारादुपादानात् तोरणोऽस्त्री बहिर्द्वारमित्यमरः। पान्थविलासमित्य पथिकविभ्रमं आश्रितैः निर्गतैरित्यर्थः। मरीचिभिः मयूखैः किरणैः मरीचिः स्त्रीपुंसयोरित्यमरः। प्रमोदहासच्छुरितानि रेजिरे अट्टहासमव्याप्तानीव रेजिरे इत्यर्थः। मुखत्वाच्छुभ्रत्वाच्च इयमुत्प्रेक्षा-व्यञ्जकाप्रयोगे ज्ञेया ॥१३॥

पद्ममिति। तथा तेन प्रकारेण अधिवासनाद्युपकारादिभिः अधिवासितत्वान्मधुव्रतानां मधुलिहामपि दत्तविभ्रमः कृतभ्रान्तय इति भ्रान्तिमदलङ्कारः। आतपनिर्भया आतपेऽप्यम्लाना इत्यर्थः। पटीकृदा

पथामनीयन्त तथाधिवासनान्मधुव्रतानामपि दत्तविभ्रमाः ।
वितानतामातपनिर्भयास्तदा पटच्छिदाकालिव पुष्पजाः स्रजः ॥१४

विभूषणैः कञ्चुकिता बभुः प्रजा विचित्रचित्रैः स्नपितत्विषोऽट्टजाः ।
बभूव तस्मिन्मणिकुट्टिमैः पुरे वपुः स्वमुर्व्याः परिवर्तितोपमम् ॥१५

तदा निसस्वानतमां घनं घनं ननाद तस्मिन्नितरान्ततं ततम् ।
अवापुरन्यैः सुषिराणि राणितामसानमानद्धमियत्तया ध्वनीत् ॥१६

पटकर्तनेन कृतानि यान्यग्राणिकान्यग्राणि द्रुयानि पुष्पाणि तेभ्यो जाता स्रजः स्रजो मालिकाः पथां नगरमार्गाणां वितानता मल्लोचनताम् अस्त्रि-वितान मुल्लोच इत्यमरः । अनीयन्त नीता नयतेर्द्विकर्मकात् प्रधाने कर्मणि लङ् प्रधानकर्मण्याख्येये लादीनाहु द्विकर्मणामिति वचनात् । पुष्पवितानध्यालिता कपटविधानात् सर्वत्र बद्धा इत्यर्थः ॥ १४ ॥

विभूषणैरिति । तस्मिन् पुरे प्रजा जना जनो लोकः प्रजाः प्रोक्ता इति हलायुधः । विभूषणैः कञ्चुकिताः सञ्जातकञ्चुकाः सर्वाङ्गीणाभरणा बभुः अट्टजाः विचित्रचित्रैर्विविधालेख्यैः स्नपितत्विषो व्याप्तकान्तयो बभुः प्रजाः स्न यनुपसर्गात् ज्ञातनेरनुपसर्गस्य मित्यविकल्प हस्वत्वम्-उर्व्यास्तत्व्यभूमेः स्व वपुर्निजस्वरूप मणीनां कुट्टिमैर्मणिबद्धप्रदेशैः कुट्टिमोऽस्त्री निबद्धा भूरिति स्वामी । परिवर्तितोपम निरस्तोपमानम् असदृश बभूव कुट्टन बद्धेन निर्वृत्त कुट्टिम भावप्रत्ययान्तादिमनिज्-वक्तव्यम् ॥ १५ ॥

तदेति । तदा तस्मिन् पुरे घन कांस्यतालादिवाद्यं घनं निरन्तर निसस्वानतमामतिशयेन सस्वान किमे त्तङव्ययघ दामित्यादिना आमु प्रत्यय । तत वीणादिकं वाद्यं नितरामतिशयिक अव्ययघादामुप्रत्ययः । तत विस्तृत यथा तथा ननाद । आनद्ध मुरजादिवाद्य सुपर्जातिकं वंशादिकन्तु सुषिरं कास्य तालादिक इयत्तया केनचित्प्रमाणेनासानं मान-रहितं यथा तथा अध्वनीत् दध्वान ध्वनतेर्लुङ् अतो हलादेर्लघो-

विपञ्चिराच्छादि न वेणुभिर्न ते प्रणीतगीतैर्न च तेऽपि झर्झरैः।
न ते हुडुक्केन न सोऽपि ढक्कया न मर्द्दलैः सापि न तेऽपि ढक्कया॥१७

विचित्रवादित्रनिनादमूर्च्छितः सुदूरचारी जनतामुखारवः।
ममौ न कर्णेषु दिगन्तदन्तिनां पयोधिपूरप्रतिनादमेदुरः॥१८॥

उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुण्यपि वेदिकोदरे।
यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम्॥१९

रिति विकल्पाद्वृद्धिप्रतिषेधः। सुषिराणि वंशादिवाद्यानि एभ्यस्तरां रणितं रागेण रणतेर्गत्यर्थत्वाद्भावे क्तः। यथाह: ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकन्तु सुषिरं कांस्यतालादिकं घनमिति सर्वत्राप्यमरः॥ १६॥

विपञ्चिरिति। विपञ्ची वीणादि विपञ्ची वल्लकी वीणेति वैजयन्ती। कृदिकारादक्तिन इत्यभावः। वेणुभिर्वेणुवाद्यैः नाच्छादि न च्छादिता छादयतेः कर्मणि लुङ्। ते वेणवः प्रणीतगीतैः प्रयुक्तगानैः गायकैरित्यर्थः। नाच्छाद्यत इति विपरिणामेनैव सर्वत्रापि योज्यं झर्झरादयो वाद्यविशेषाः॥ १७॥

विचित्रेति। विचित्राणि वादित्राणि च ततादि चतुर्विधं किट वाद्यं वादित्रातोद्यनामकमित्यमरः। तेषां निनादे समूर्च्छितः प्रवृद्धः सुदूरचारी अतिदूरव्यापी च जनतानां जनसमूहानां मुखारवः वल्लादकोलाहल पयोधीनां पूरेषु लहरीषु प्रतिनादेन प्रतिध्वनिना मेदुरो मेदस्वी प्रवृद्धः सन् भङ्गम समिदन्धुरन्। दिगन्तदन्तिनां दिग्गजानां कर्णेषु न ममौ न मातिस्मेति अतिशयोक्तिः। वधूमङ्गलस्नानार्थं मङ्गलं मङ्गलतूर्यघोषणमकार्षुरित्यर्थः॥ १८॥

उदस्येति। अथ मङ्गलतूर्यघोषणानन्तरं पुरन्ध्रीवर्गः सुवासिनीसमूहः शातकुम्भजाः सौवर्णीः कुम्भीः पूर्णकलशीः उदस्य उन्नमय्य अथ तदनन्तरं चतुष्केण चतुस्तम्भमण्डपेन चारुण्यपि अतिशयशोभे

विजित्य दास्यादिव वारिहारितामवापितास्तत्कुचयोर्द्वयेन ताः।
शिखामवापुः सहकारशाखिनस्त्रपाभरम्लानिमिवानतैर्मुखैः ॥२०॥
असौ मुहुर्जातजलाभिषेचना क्रमाद्दुकूलेन सितांशुनोज्ज्वला।
द्वयस्य वर्षाशरदां सदातनीं सनाभितां साधु बबन्ध सन्धया॥२१॥
असौ प्रभिन्नाम्बुददुर्दिनीकृतां निनिन्द चन्द्रद्युतिसुन्दरीं दिवम्।
शिरोरुहौघेण घनेन संयुता तथा दुकूलेन सितांशुनोज्ज्वला॥२२

वेदिकोदरे वेदिमध्ये यथाकुलाचार मनतिक्रम्य कुलाचारमित्यर्थः। तामवनीन्द्रजां भैमीं स्नपयां बभूव स्नानं कारयामास स्नातेर्विभाषा मित्वाद्ध्रस्वत्वम् ॥१९॥

विजित्येति। तत्कुचयोर्द्वयेन भैमीकुचद्वयेन विजित्य दास्याद्दासीकरणादिव वारिहारितां जलवाहित्वमवापिताः प्रापिताः आपे-र्ण्यन्तात् द्विकर्मकात् कर्मणि क्तः गत्यर्थे कर्तुश्च कर्मणि इति वचनात्। ताः कुम्भाः आनतैर्मुखैः द्वारैश्च आननैश्च सहकारशाखिनः शिखाङ्कुरपल्लवं त्रपाभरेण या म्लानिः म्लानता तामिव तामेव अवापुः। आपेर्लुङि सिचि नवदम्रजन्त्यादिना वृद्धिः ह्रेर्ङः पदो कः सितकत्वे इत्यस्मो-रिति पत्वं मिजभःस्तत्वादिना भर्भार अड़ागमः। लोके दासीकृताः स्त्रियो नतानना जलाहरणादिकं कुर्वन्तीति भावः। अत्र दास्यादि-वेति हेतूत्प्रेक्षा म्लानिमिवेति गुणस्वरूपोत्प्रेक्षा तयो रङ्गाङ्गिभावेन सजातीयसङ्करः ॥ २० ॥

असावियिति। असौ भैमी मुहुर्जातं जलाभिषेचनं यस्याः सा जलाभिषिक्ता सती क्रमात् सितांशुना शुभ्रतरेण दुकूलेन उज्ज्वला वर्षाशरदां द्वयस्य सन्धया सन्धिस्थानेन सदातनीं सनातनीं सनाभितां तुल्यत्वं साधु यथा तथा बबन्ध। दुपारं वर्षर्तुरपि जलाभिषिक्तः, शरच्च शीतांशुज्ज्वलो भवतीत्युपमा ॥ २१ ॥

असाविति। असौ भैमी प्रभिन्नैरम्बुदैर्दुर्दिनीकृता मभिव्रष्टा-मित्यर्थः। अथ चन्द्रद्युत्या चन्द्रकान्त्या सुन्दरीं दिवं नभःस्थलीं

विरेजिरे तच्चिकुरोत्कराः किराः क्षणं गलन्निर्मलवारिविप्रुषाम्।
तमःसुहृच्चामरनिर्जयार्जिताः सितावमन्तःखलुकीर्त्तिमौक्तिकाः॥२३॥
मदीयसा स्नानजलस्य वाससा प्रमार्ज्जनेनाधिकमुज्ज्वलीकृता।
अदभ्रमभ्राजत साऽश्मशाणनात् प्रकाशरोचिः प्रतिमेव हेमजा॥२४॥
तदा तदङ्गस्य बिभर्त्ति विभ्रमं विलेपनामोदमुचः स्फुरद्रुचः।
दरस्फुटत्काञ्चनकेतकीदलात् सुवर्णमभ्यस्यति सौरभं यदि॥२५॥

निनिन्द तदुपमाभूदित्यर्थः। कदर्थयती निन्दयतीति साहश्यवाच-
केष्टयाडो उपमालङ्कारः घनेन सान्द्रेन मेघेन च शिरोरुहौघेण
केशप शेनोपलक्षितेति वर्षासम्योक्तिः क्वचिदेकदेशे शितांशुना चन्द्रेण
च दुकूलेनोज्ज्वलेनेति शरत्समासोक्तिः॥२२॥

विरेजिर इति। क्षणं क्षणमात्र गलन्त्यो निर्मलाश्च या वारिविप्रु-
षो तोयबिन्दवस्तासां तद्योगात्कर्मणि षष्ठी। किरन्तीति किराः विक्षेप-
का इगु पधज्ञाप्रीकिर क इति क। तस्याः भैम्याश्चिकुरोत्कराः केशनिकरा
तमःसुहृद तमोनिभस्य चामरस्य लीलाचामरस्य निर्जयेनार्जिता
सम्पादिताः सिता मुक्ता एव मौक्तिका स्वभाविन्युं स्काश्चे तिकात्यर्थस्य
विकल्प टिकारः। कीर्तिरेव मौक्तिका वमन्तः उद्गिरन्त इवेत्युत्प्रेक्षा
व्यञ्जकाप्रयोगाद्गम्या। विरेजिरे रात् फणानाञ्च सप्तानामित्येत्वाभ्या
सलोपौ॥२३॥

मदीयसेति। मदीयसा मृदुतरेण वाससा स्नानजलस्याङ्गे
मर्द्दन प्रमार्जनेन अपाकरणेन अधिक मुज्ज्वलीकृता विमलीकृता सा
भैमी अश्मशाणनात् उत्तेजकोपलेन शाणनात उत्घर्षणात प्रकाशमुज्ज्वलं
रोचिर्दीप्तिर्यस्याः सा हेमजा हैमी प्रतिमेव अदभ्रं बहुलम अभ्राजत
अराजत॥२४॥

तदेति। सुवर्णं कर्त्तृ दरस्फुटतः ईषद्विकसतः ईषदर्थे दरोऽव्यय
मित्यमरः। काञ्चनकेतकीदलात् काञ्चनकेतकीपत्रात् व्याख्यातो
दयोग इत्यपादानत्वात्पञ्चमी। सौरभ मामोदमभ्यस्यति यदि अधीते

अवापितायाः शुचि वेदिकान्तरं कलासु तस्याः सकलासु पण्डिताः ।
क्षणेन सख्यश्चिरशिक्षणस्फुटं प्रति प्रतीकं प्रतिकर्म निर्ममुः ॥ २६ ॥
विनापि भूषामवधिः श्रियामियं व्यभूषि विज्ञाभिरदर्शि चाधिका ।
न भूषयैषाऽतिचकास्ति किन्तु साऽनयेति कस्यास्तु विचारचातुरी ॥ २७ ॥

चेत् तथा तर्हि विलेपनेनाङ्गरागेण य आमोदो मनोज्ञगन्धः स तं सुवर्णं तिरस्करोतीति तन्मुचः स्फुरद्रुचः स्फुरत्कान्तेः तदङ्गस्य विभ्रममिव विभ्रमं शोभां बिभर्ति विभ्रमः संशये भ्रान्तौ शोभायामिति वैजयन्ती । तथा च तदङ्गस्य सौरभगुणेन तद्रहितात् सुवर्णादाधिक्यकथनाद्व्यतिरेकालङ्कारभेदकः । यदिशब्देन सुवर्णस्य सौरभसम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेरतिशयोक्तिभेदः विभ्रममिव विभ्रममिति सादृश्याक्षेपादसम्बद्धवस्तुसम्बन्धरूपो निदर्शनाभेदः तदङ्गोपमानसुवर्णस्योपमेयत्वकल्पनात् प्रतीपालङ्कारः तेनचाङ्गिनाङ्गेन तेषां सङ्कर इति विवेकः ॥ २५ ॥

अवापितायाः इति । सकलासु कलासु शिल्पविद्यासु पण्डिताः कुशलाः कला शिल्पे कालभेदे इत्यमरः । सख्यः शुचि शुद्धं वेदिकान्तरं अन्तर्वेदिरन्यां वेदिमवापिताया: तस्याः दमयन्त्याः चिरशिक्षणेन चिराभ्यासेन स्फुटं सुश्लिष्टं प्रति प्रतीकं प्रत्यवयवम् अङ्गं प्रतीकोऽवयव इत्यमरः । प्रतिकर्म प्रसाधनं क्षणेन निर्ममुः चक्रुरित्यर्थः ॥ २६ ॥

विनेति । भूषां विना अलङ्कारमन्तरेणापि श्रियां शोभानामवधिः सीमा इयं भैमी विज्ञाभिः प्रयोगे निपुणाभिः विज्ञनिष्णातशिक्षित इत्यमरः । व्यभूषि विभूषिता तदा अधिका पूर्वावस्थातोऽप्युत्कृष्टा अदर्शि दृष्टा च तथा अमानीत्यर्थः । वस्तुतस्तु एषा भैमी भूषया नातिचकास्ति किन्तु सा भूषैवानया भैम्यातिचकास्तीति विचारचातुरी विमर्शनकौशलं कस्यास्तु न कस्यापीत्यर्थः । लोकदृष्ट्या भूषणे भूषात्वभ्रमादलङ्कृतः भूषणं भूष्यमिति तु न कश्चिदिति भावः ॥ २७ ॥

विधाय बन्धूकपयोजपूजनं कृतां विधोर्गन्धफलीबलिश्रियम् ।
निनिन्द लब्धाधरलोचनार्चनं मनःशिलाचित्रकमेत्य तन्मुखम् ॥२८॥

महीमघोनां मदनान्धतातमीतमःपटारम्भणतन्तुसन्ततिः ।
अबन्धि तन्मूर्द्धजपाशमञ्जरी कयापि धूपग्रहधूमकोमला ॥२९॥

पुनः पुनः काचन कुर्वती कचच्छटाधिया धूपजधूमसंयमम् ।
सखीस्मितैस्तर्किततन्निजभ्रमा बबन्ध तन्मूर्द्धजचामरं चिरात् ३०

विधायेति । लब्धमधरेण लोचनाभ्यां चार्चनं येन तदधरलोचनार्चित मित्यर्थः तन्मुखं कर्तृ मनःशिलया धातुविशेषेण चित्रकं तिलकमेत्य तम लपत्र तिलक चित्रकाणि विशेषक मित्यमरः । विधोश्चन्द्रस्य बन्धूकेन बन्धूजीवक कुसुमेन पयोजाभ्याञ्च यत्पूजनं तद्विधाय कृतां गन्धफल्यां चम्पक कलिकायां बलेः पूजनस्य श्रियं शोभां निनिन्द अथ च चाम्पेयश्चम्पको हेम-पुष्पकः एतस्य कलिका गन्धफलीत्यमरः । अधरादाञ्चित तन्मुखं बन्धू-काद्याञ्चितं चन्द्रबिम्बमिव बभावित्यर्थः ॥ २८ ॥

महीति । महीमघोनां भूदेवेन्द्राणां या मदनान्धता सैव तमी र-जनी रजनी यामिनी तमीत्यमरः । तस्यास्तम एव पटः तस्यारम्भणे तन्तु सन्ततिः तन्तुद्वयं तन्तुरूपसन्ततिरित्यर्थः । धूपग्रहेण धूपधूपेन यो धूमः तेन कोमला रम्या तन्मूर्द्धजपाशमञ्जरी तत्केशपाशवल्लरी कयापि सख्या-अबन्धि बद्धा ॥ २९ ॥

पुनः पुनरिति । काचन कचच्छटाधिया केशपाशभ्रान्त्या धूपज-धूमस्य संयमं बन्धनं पुनः पुनः कुर्वतीति भ्रान्तिमदलङ्कारः । सखीनां स्मितैः तर्कितः ऊहितः स पूर्वोक्तो निजभ्रमो यया सा सखी चिरात् तस्याः मूर्द्धजचामरमिव तद्बबन्ध ॥ ३० ॥

बन्धस्येति । या कालिन्दकन्या कालिन्दी यमुना बलभद्रस्य हलेन कृष्टेव अद्यापि कर्षणविभागेन धर्मनिरन्तरैर्भङ्गैः स्नुहैस्तरङ्गैर्भङ्गुरा अराला भाति तां कालिन्दीं तस्याः कुटिला वक्रा कचच्छटा केशपाशः तदा तत्काले

घनस्य कृष्टेव छलेन भाति या कलिन्दकन्या घनभङ्गभङ्गुरा ।
तदार्पितैस्तां करुणस्य कुड्मलैर्जहास तस्याः कुटिला कचच्छटा ॥३१॥
धृतैतया हाटकपट्टिकालिके बभूव केशाम्बुदविद्युदेव सा ।
मुखेन्दुसम्बन्धवशात् सुधाजुषः स्थिरत्वमूहे नियतं तदायुषः ॥३२॥
ललाटिकासीमनि चूर्णकुन्तला बभुस्तमां भीमनरेन्द्रजन्मनः ।
मनःशिलाचित्रकदीपसम्भवा भ्रमीभृतः कज्जलधूमवल्लयः ॥३३॥
अपाङ्गमालिङ्ग्य तदीयमुच्चकैरदीपि रेखा जनिताञ्जनेन या ।
अपाति सूत्रं तदिव द्वितीयया वयःश्रिया वर्द्धयितुं विलोचने ॥३४॥

अर्पितैर्न्यस्तैः करुणस्य वृक्षविशेषस्य करुणस्तु रसेवृक्ष इति विश्वः । कुड्मलैः जहास जहासेवेत्यर्थः व्यञ्जका प्रयोगाद्गम्योत्प्रेक्षा ॥ ३१ ॥

धृतेति । एतया भैम्या अलिके ललाटे धृता ललाटमलिकं गोधिरित्यमरः । सा हाटकपट्टिका सुवर्णपट्टः केश एवाम्बुदस्तस्य विद्युदेव बभूव विद्युच्चेत्कथं स्थिरत्व तत्राह । मुखेन्दुसम्बन्धवशात् सुधाजुषोऽमृतपायिन तस्या विद्युतः सम्बन्धिन आयुषः स्थिरत्वं चिराय स्थायित्वं नियतम् ऊहे ऊह्यते उत्प्रेक्षे उपसर्गादस्यत्यूह्योर्वा वचनमित्यात्मनेपदम् ॥३२॥

ललाटिकेति । भीमनरेन्द्राज्जन्म यस्या तस्या भैम्या अवर्ण्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनः । ललाटस्यालङ्कारो ललाटिका कर्णललाटात्कनलङ्कारे इति कन् प्रत्ययः । तस्याः सीमनि प्रान्ते चूर्णकुन्तलाः अलका मनःशिलाया धातुविशेषस्य चित्रकं तिलकं सएव दीपस्ततः सम्भवाः जाताः भ्रमीं भ्रमं बिभ्रतीति भ्रमीभृतो भ्रमन्त्यः कज्जलस्य धूमस्तत्सम्पादकधूमस्तस्य वल्लयो लता इवेत्युत्प्रेक्षा बभुस्तमां अतिशयेन बभुः तिङश्चादामुप्रत्यय ॥ ३३ ॥

अपाङ्गमिति । अञ्जनेन जनिता या लेखा तदीयं दमयन्तीयमपाङ्गमालिङ्ग्य स्पृष्ट्वा अदीपि आयतत्वान्नेत्रवृद्धिः प्रसारिता सतो रराज ।

अनङ्गलीलाभिरपाङ्गधाविनः कनीनिकानीलमणेः पुनः पुनः ।
तमिस्रवंशप्रभवेन रश्मिना स्वपद्धतिः सा किमरञ्जि नाञ्जनैः ॥३५॥

असेविषातां सुषमां विदर्भजादृशावपाप्याञ्जनरेखयान्वयम् ।
भुजद्वयज्याकिणपद्धतिस्पृशोः स्मरेण बाणीकृतयोः पयोजयोः ॥३६॥

तदक्षितत्कालतुलागमा नखं निखाय कूणस्य मृगस्य चक्षुषी ।
विधिर्यदुद्धर्त्तुमियेष तत्तयोरदूरवर्त्तिक्षतता स्म शंसति ॥३७॥

तत्र सुवेषित्यर्थः । विधेयसूत्रापेक्षया नपुंसकनिर्देशः । द्वितीयया वयःश्रिया यौवनसम्पदा विलोचने वर्द्धयितुं दैर्घ्यीकर्तुं सूत्रमपातीव पातितमि-त्युत्प्रेक्षा । [illegible] । एतावन्तौ नेत्रे इति निश्चित्य पातितं सीमासूत्रमिव स अञ्जनरेखा विराजते इत्यर्थः ॥ ३४ ॥

अनङ्गेति । अनङ्गलीलाभिः स्मरविलासैर्हेतुभिः पुनः पुनः अपाङ्ग-धाविनो नेत्रान्तगामिनः कनीनिका तारका सैव नीलमणिः इन्द्र-नीलोपलः तस्य सम्बन्धि तमिस्रवंशप्रभवेन तद्भवतमःकुलसम्भवेना-भिन्नेनेत्यर्थः । रश्मिना सा नेत्रान्तरूपा स्वपद्धतिः रश्मिमार्गः एवाञ्जैः रञ्जितम् किम् ? अञ्जनैः कज्जलैः न रञ्जितेति सापह्नवोत्प्रेक्षा ॥ ३५ ॥

असेविषातामिति । विदर्भजादृशौ वैदर्भीनेत्रे अञ्जनलेखया सहान्वयं सम्बन्धं प्राप्य भुजद्वये ये ज्याकिणपद्धती ज्याघातरेखे तत्स्पृ-शोस्तद्युक्तयोः एतेन स्मरस्य सव्यसाचित्वं गम्यते । स्मरेण बाणीकृतयोः पयोजयोः सरोजयोः सुषमामिव सुषमां तां परमशोभां असेविषातां प्राप्नुतां [illegible] निदर्शनामिदं स अञ्जनरेखे तद्दृशौ ज्या-घातरेखास्पृशौ स्मरसङ्गबाणसरोजे इव रेजतुरित्यर्थः ॥ ३६ ॥

तदिति । तस्याः अक्षिभ्यां सह तत्काले समाधानकाले तुला साम्य तेनैवागमः अपराधेन छेदना विधिना कूणस्य मृगस्य सारङ्गस्य चक्षुषी [illegible] निखाय [illegible] [illegible] इयेष ऐच्छदिति यत् तदेतन्नाम कर्म तयोर्मृगचक्षुषोरदूरवर्तिक्षतता निकटवर्तिक्षतत्वं शंसति

विलोचनाभ्यामतिमात्रपीडिते ऽवतंसनीलाम्बुरुहद्वयीं खलु ।
तयोः प्रतिद्वन्द्विधियाऽधिरोपयाम्बभूवतुर्भीमसुताश्रुती ततः ॥ ३८ ॥
धृतं वतंसोत्पलयुग्ममेतया व्यराजदस्यां पतिते दृशाविव ।
मनोभुवाभ्यङ्गमितस्य पश्यतः स्थिते लगित्वा रसिकस्य कस्यचित् ।
विदर्भसुभ्रूश्रवणावतंसिकामणीमहः किंशुककार्मुकोदरे ।
उदीतनेत्रोत्पलबाणसम्भृतिर्नलं परं लक्ष्यमवैक्षत स्मरः ॥ ४० ॥

संमतिस्म यथा स्तनस्य स्वाभाविके जगति पूर्वोक्तापराधप्रयुक्त विधिनखो-त्पाटनजातत्वमुत्प्रेक्ष्यते ॥ ३७ ॥

विलोचनाभ्यामिति । ततो भीमसुताश्रुती भैम्याः श्रोत्रे विलोचना-भ्यामतिमात्रं पीडिते सत्यौ अवतंसनीलाम्बुरुहद्वयीमवतंसनीलोत्पल-युगलं तयोर्विलोचनयोः प्रतिद्वन्द्विधिया प्रतिपक्षबुद्ध्या अधिरोपयाम्बभूव-तुः आरोपयामासतुः खल्वित्युत्प्रेक्षा बलिना पीडितस्तुल्यं प्रतिपक्ष-मन्विच्छत इति भावः ॥ ३८ ॥

धृतमिति । एतया भैम्या धृतमवतंसोत्पलयुग्ममस्यां भैम्यां पतिते सत्यौ तत्रैव लगित्वा आसज्य स्थिते पश्यतः सतो मनोभुवा कामेन अभ्य-ङ्गमितस्य तदेकासक्तीकृतस्य कस्यचिद्रसिकस्य रसवतो रागिण इत्यर्थः । अत इनिठनाविति ठन्प्रत्ययः । दृशाविव व्यराजीत् विरराजेत्युत्-प्रेक्षा ॥ ३९ ॥

विदर्भेति । विदर्भसुभ्रुवो वैदर्भ्याः श्रवणावतंसिका कर्णावतंसी-भूता या मणी स्फटिकादिविकारः । तस्य महः प्रभैव किंशुककार्मुकं पलाशकुसुमचापं तस्योदरे मध्ये उदीता उत्पन्ना नेत्रस्यैवोत्पलबाणस्य सम्भृतिः सम्भरणं यस्य स सन् स्मरो नलं परं नलमेव लक्ष्यमवैक्षत सर्वथा नलस्यायमीदृक् स्मरबाणो भविष्यतीति ॥ ४० ॥

स्वरेण वीणेत्यविशेषणं पुराऽस्फुरत्तदीया खलु कण्ठकन्दली ।
अवाप्य तन्त्रीरथ सप्त मौक्तिकासरानराजत् परिवादिनी स्फुटम् ॥४४॥

उपास्यमानाविव शिक्षितुं ततो मृदुत्वमप्रौढमृणालनालया ।
विरेजतुर्माङ्गलिकेन संयुतौ भुजौ मुदत्या वलयेन कम्बुनः ॥ ४५ ॥

पदद्वयेऽस्या नवयावरञ्जना जनैस्तदानीमुदनीयतार्पिता ।
चिराय पद्मौ परिरभ्य जाग्रती निशीव विश्लिष्य नवा रविद्युतिः ॥४६॥

यिका । धर्मादनिच् केवलात्मनो वस्तुत्वं ह्रियते इति प्रतिषेधाद्यनेभ्य इति ङीप् । तस्यां सुधासधर्मणि अमृतसदृश्यां तत्रैव तदीयाधरसीम्नैव निवस्तुं स्थातुमुत्सुक रराज अन्यथा कथम् अत्रैव लगेदित्युत्प्रेक्षा उत्-कृष्टस्थानलाभे चिरपरिचितमपि स्वस्थानमुत्सृजति नत्वौचित्यं गम्यते विशेषार्थिभिरिति भाव ॥ ४३ ॥

स्वरेणेति । तदीया दमयन्तीया कण्ठकन्दली कण्ठनालः पुरा पूर्वं स्वरेण ध्वनिना वीणेत्यविशेषणं निर्विशेषं यथा तथा अस्फु-रत् वीणेत्येवाबोधीत्यर्थः । अथ वीणेति स्फुरणानन्तरं सप्त मौक्तिकसरान् क्रमात्सारेव सप्ततन्त्रीरवाप्य परिवादिनी परिवादिन्याख्या वीणा सती अराजत् स्फुटमित्युत्प्रेक्षायां विपञ्ची सा तु तन्त्रीभि सप्तभिः परिवादिनीत्यमरः ॥ ४४ ॥

उपास्यमानाविति । ततः कण्ठभूषणानन्तरं माङ्गलिकेन मङ्गलार्थेन प्रयोगजनमिति ठक् । कम्बुनः शङ्खस्य वलयेन संयुतौ शङ्खः स्यात्कम्बुर-स्त्रिय मित्यमरः । मुदत्याः तस्या भुजौ अप्रौढमृणालनालया बालबिस-कालिदण्डेन मृदुत्वं मार्दवं शिक्षितु मभ्यसितु मुपास्यमानौ सेव्यमाना विव विरेजतु रित्युत्प्रेक्षा ॥ ४५ ॥

पदेति । तदानीं प्रसाधनकाले अस्या सैन्यः पदद्वये अर्पिता नवयावस्य नव लक्षस्य रञ्जना य वोऽलक्तो द्रुमामय इत्यमरः । निशि रात्रौ विश्लिष्य वियुज्य चिरं य प्रभाते पद्मौ पद्मे वा पुंसि पद्मं नलिन मित्य-

कृतापराधः सुतनोरनन्तरं विचिन्त्य कान्तेन समं समागमम्।
स्फुटं सिषेवे कुसुमेषुपावकः सरागचिह्नश्चरणौ न यावकः ४७॥
स्वयं तदङ्गेषु गतेषु चारुतां परस्परेणैव विभूषितेषु च।
किमूचिरेऽलङ्करणानि तानि तत् इहैव तेषां करणं बभूव यत् ४८
क्रमाधिकामुत्तरमुत्तरं श्रियं पुपोष यां भूषणवृन्दनैरियम्।
पुरः पुरस्तस्यपि रामणीयके तया वबाधेऽवधिबुद्धिधारिणः ४९

मरः। परिरभ्य प्राप्य जायती प्रकाशमाना नवा प्रत्यग्रा रविद्युतिरिव बालार्कप्रभेव स्थितेति जनैरुदनायत उत्प्रेक्षितेत्यर्थः ॥ ४६ ॥

कृतेति। सुतनोर्भैम्याः कृतापराधः पूर्वं विरहकाले सापराधः कुसुमेषुपावकः कामाग्निः अनन्तरं कान्तेन समं नलेन सह समागमं विचिन्त्य सरागचिह्नो रक्तचिह्नसहितः सन् अन्यथा त्वयं एष राग इति भावः। चरणौ सिषेवे स्फुटं यावकः एष यावकोऽलक्तकस्तु नेति मा-पह्नवोत्प्रेक्षा यावादिभ्यः कान्निति स्वार्थे कन्प्रत्ययः ॥ ४७ ।

स्वयमिति। स्वयं स्वभावत एव चारुताङ्गतेषु परस्परेण इतरेतरेणैव विभूषितेषु च परस्परमेलनात् प्रत्यवयवं कस्यचित्क्रमनीय-विशेषस्य च स्फुरणादिति भावः। तदङ्गेषु भैम्यङ्गेषु तया प्रयोक्त्रहेमपट्टादीनां करणमर्पणं इहैव बभूवेति यत्तद्धात्स्या अलङ्करणानि कर्तृणि ऊचिरे किम् उक्तिः सम्भावितेत्युत्प्रेक्षा ॥ ४८ ॥

क्रमेति। इयं दमयन्ती भूषणवृन्दैराभरणसमूहैः उत्तरमुत्तरमुपर्युपरि उत्तरं उत्तरमत्युत्तरः स्यादित्यमरः। क्रमेणाधिकां यां श्रियं शोभां पुपोष तदा श्रिया रामणीयके कमनीयत्वे मनोज्ञादित्वाद्वुञ्प्रत्ययः। पुरोऽग्रे तस्यापि स्थिते सति अवधिबुद्धिधारिणोऽवधिरियत्ताधी-परम्परा वबाधे बाधिता इयत्तारहिता सा शोभा तस्याः स्थितेरिति भावः। धोरणिपङ्क्तिः पङ्क्तिर्द्वैर्ग्य इति सम्प्रदायः ॥ ४९ ॥

मणीमनाभौ मुकुरस्य मण्डले बभौ निजास्यप्रतिबिम्बदर्शिनी ।
विधोरदूरं स्वमुखं विधाय सा निरूपयन्तीव विशेषमेतयोः ॥ ५० ॥
जितस्तदास्येन कलानिधिर्दधे द्विचन्द्रधीमाक्षिकमायकायताम् ।
तथापि जिग्ये युगपत्सखीयुगप्रदर्शितादर्शबहूभविष्णुना ॥ ५१ ॥
क्रमालियुग्मार्पितदर्पणद्वये तदास्यमेकं बहु चान्यदब्जजम् ।
हिमेषु निर्वाप्य निशासमाधिभिस्तदास्यमालोक्यमितं व्यलोक्यत ॥ ५२ ॥

मणीति । मणीमनाभौ रत्नप्रख्ये मुकुरस्य मण्डले दर्पणतले निजास्यप्रतिबिम्बदर्शिनी सा भैमी स्वमुखं विधोश्चन्द्रमसोऽदूरं समीपगतं विधाय एतयोः स्वमुखचन्द्रयोर्विशेषं तारतम्यं निरूपयन्ती परीक्षमाणेव बभौ परीक्षका ह्युभयमेकत्रावस्थाप्य परीक्षन्त इति भावः ॥ ५० ॥

जित इति । कलानिधिश्चन्द्रः शिल्पे कला विधोरंश इत्यभिधानात् । तदास्येन भैमीमुखेन जितः सन् द्वौ चन्द्राविति धीरेव कार्यभूता साक्षी प्रमाणं यस्याः सा तत्साक्षिका माया कारणभूता यस्य स समायः कायो यस्य तस्य भावस्तत्तां दधे दधार इति एकाकिना तन्मुखस्य दुर्जयत्वादेकोऽपि चन्द्रो मायया द्वौ बभूवेत्यर्थः । तत्र खलु स्वयमपि कपटादेव द्वित्वमापद्य पुनस्तज्जिगीषयेत्याह तथापि द्विभूतोऽपि युगपत्सखीयुगेन प्रदर्शिताभ्यामादर्शाभ्यां दर्पणाभ्यां तद्गतप्रतिबिम्बद्वयवशेनेत्यर्थः । दर्पणे मुकुरादर्शौ इत्यमरः । बहूभविष्णुना ताच्छील्येन बहुभवित्रा प्रतिबिम्बद्वयेनात्मना च त्रित्वमापन्नेन तन्मुखेनेत्यर्थः । भुवश्चेति इष्णुच्प्रत्ययः । जिग्ये जितः । त्रिभिर्द्वौ सुजयाविति भावः ॥ ५१ ॥

क्रमिति । आलीयुग्मेन सखीद्वयेन अर्पिते दर्पणद्वये तदास्यं भैम्यास्यम् एकमनेकार्कप्रतिबिम्बितार्कवदनेकाविद्याप्रतिबिम्बितब्रह्मवदेवेति भावः । ब्रह्म चैकम् अन्यत् तत्र स्वसदृशं चाब्जजं पद्मं निशासु समाधिभिस्तत्र ध्यानैः मुकुलभावलक्षणैरुपलक्षितं सत् हिमेषु निर्वाप्य मृत्वा मृत्वा च तदास्यस्य भैमीमुखस्य आलोकेन दर्शनेन सह वर्तत इति

पलाशदामेति मिलच्छिलीमुखैर्वृता विभूषामणिरश्मिमण्डलैः ।
अलक्षि लक्षैर्धनुषामसौ तदा रतीशसर्वस्वतयाभिरक्षिता ॥५३॥
विशेषतीर्थैरिव जह्नुनन्दना गुणैरिवाजानिकरागभूमिका ।
जगाम भाग्यैरिव नीतिरुज्ज्वलैर्विभूषणैस्तत्सुषमा महार्घताम् ॥५४॥

सालोकम् तस्य भाव सालोक्यम लोकनीयत्वं रम्यत्वमिति यावत् तदाननसालोक्यं तदानन समानालोकत्वञ्च इतम्प्राप्तं सत् इण. कर्तरि क्तः व्यलोक्यत किम् ? दृष्टं किमित्युत्प्रेक्षा । निर्वाणकाले यां देवतां ध्यायन्ति तत्सालोक्यं लभन्त इत्यागम. । निशि हिमोपघातात्सङ्कुचलीभावाच्च तत्साम्यकथैव नास्ति दिवा तदभाव तदा समानालोकैर्वा कथञ्चित्तत्साम्यं लभते पद्ममिति तात्पर्यम् ॥ ५२ ॥

पलाशेति । पलाशदाम किंशुकमालेति मिलन्तः शिलीमुखा यलयो बाणाश्च येषु तैरिति भ्रान्तिमदलङ्कारः । विभूषामणिरश्मिमण्डलैराभरणरत्नकान्तिपटलैर्वृता असौ भैमी तदा रतीशस्य कामस्य सर्वस्वतया सर्वधनत्वेन धनुषां लक्षैः शतसहस्रैरभिरक्षिता अलक्ष्यत्यर्थः । व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा राजधनं शस्त्रिभिरभिरक्ष्यत इति भावः ॥ ५३ ॥

विशेषेति । विशेषतः तीर्थैर्मनःप्रमुखैः जह्नुनन्दना जाह्नवीव नन्द्यादित्वाल्ल्युप्रत्यये टाप् । गुणैर्विद्याविनयादिभिः अजानिक सहजः शोभिकश्चेत्यर्थ । तस्य रागस्य प्रेम्णो भूमिरेव भूमिका आस्पदं पुत्रादिभिरिव भाग्यैर्दैवानुकूल्यैः नीतिरिव उज्ज्वलैर्विभूषणैः तस्याः सुषमा परमा शोभा कान्तिर्महार्घतां महामूल्यतां सत्यन्तोत्कृष्टतां जगाम जाह्नव्या इव पावनत्वमुत्कर्षः पुत्रादेः परमप्रेमास्पदत्वं नीतेः फलप्राप्तिः सुषमायास्तु लोकोत्तरचमत्कारकारित्वमिति विवेकः ॥ ५४ ॥

नलात् स्ववैधव्यमनाप्नुमानता नृपस्त्रियो भीममहोत्सवागताः।
तदङ्घ्रिलाक्षामदधन्त मङ्गलं शिरःसु सिन्दूरमिव प्रियायुषे ॥५५॥

अमोघभावेन सनाभितां गताः प्रसन्नगीर्वाणवराक्षरस्रजाम्।
ततः प्रणम्याधिजगाम सा ह्रिया गुरुर्गुरुब्रह्मपतिव्रताशिषः॥५६॥

तथैव तत्कालमथानुजीविभिः प्रसाधनारम्भणशिल्पपारगैः।
निजस्य पाणिग्रहणक्षणोचिता कृता नलस्यापि विभोर्विभूषणा॥५७॥

नलादिति। नलात्सकाशात् स्वस्य वैश्वस्त्यं वैधव्यं विश्वस्ता विधवे समे इत्यमरः। अनाप्नुमनाप्नुमानताः अन्यथा नलः स्वभर्तॄन् वैराय-माणान् हनिष्यतीति भयात् भैमीं प्रणता भीमस्य महोत्सवे भैमीविवाह इति आगता नृपस्त्रियः राज्ञस्तद्राजकान्ताः प्रियायुषे न केवलं प्रणमन्तु मङ्गलाचरणादपि स्वभर्तृजीवनाय मङ्गलं सिन्दूरमिव तस्या भैम्या अङ्घ्रेः लाक्षां प्रणामात्स्वमस्तके शिरःस्वदधन्त अधारयन् दधधा-रणे इति धातोः लङि तङ्। स्त्रीणां सिन्दूरधारणं पतिमत्त्वा इत्यागमः॥५५॥

अमोघेति। ततः प्रसाधनान्तरं ह्रिया गुरुः देवतातिभारा सा भैमी प्रणम्य गुर्वादीनभिवाद्य अमोघभावेन अवैफल्यगुणेन प्रस-न्नानां गीर्वाणाना मिन्द्रादिदेवतानां वराक्षरस्रजां वरदानवाग्गु-म्फानां सनाभितां सादृश्यं गतास्तद्वदमोघाः गुरूणां पित्रादीनां ब्रह्मणां ब्राह्मणानां पतिव्रतानां च आशिष आशीर्वादानधिजगाम लेभे॥५६॥

तथैवेति। अथास्मिन्नवसरे स एव कालो यस्मिन् कर्मणि तद्विल-म्बित मित्यर्थः। तथैव तथा भैम्यास्तथैव प्रसाधनारम्भण प्रसाधनाकरणं तदेव शिल्पं विद्याविशेषः तस्य पारगैः पारदर्शिभिः अन्तात्यन्तेत्यादिना डप्रत्ययः। अनुजीविभिः सेवकैः निजास्यात्मीयस्य विभोः स्वामिनो नल-स्यापि पाणिग्रहणक्षणोचिता विवाहकालोचिता विभूषणा प्रसाधना कृता॥५७॥

नृपस्य तत्राधिकृताः पुनः पुन-
र्विचार्य्य तान् बन्धमवापयन् कचान्।
कलापलीलोपनिधिर्गरुत्त्यजः
स यैरपालापि कलापिसंसदः॥ ५८ ॥

पतत्त्रिणां द्राघिमशालिना धनु-
र्गुणेन संयोगजुषां मनोभुवः।
कचेन तस्यार्जितमार्जनश्रिया
समेत्य सौभाग्यमलम्भि कुड्मलैः॥ ५९॥

नृपस्येति। तत्र प्रसाधने अधिकृताः नियुक्ताः तान् वक्ष्यमाणान् नृपस्य नलस्य कचान् केशान् विचार्य्य अपराध मनुचिन्त्य पुनः पुनः बन्धमवापयन् प्रापितवन्तः ध्यापर्णो चङ् इति यस्मात्कचोद्भिमौख यत्तदोर्नित्यसम्बन्धात् यैः कचैर्गरुतः पक्षांस्त्यजतीति त्यजः त्यजन्त्या स्तस्याः कलापिसंसदो मयूरसङ्घस्य कलापस्य बर्हभारस्य लीला विलासः स एवोपनिधिन्यास बर्हमोचनकालकृतो निक्षेप इत्यर्थः। प्रमानुपनिधि न्यास इत्यमरः। अपालापि अपलपितः पुन बर्होद्गमेऽपि न प्रत्यर्पित इत्यर्थः। अतो बन्धनमुचितमिति भावः॥ ५८॥

पतत्त्रिणामिति। कुड्मलैरर्धविकसितकुसुमैः कर्त्तृभि द्राघिमशालिना दैर्घ्यशोभिना प्रियस्थिरेत्यादिना दीर्घशब्दस्य द्राघादेशः। अर्जित मार्जनश्रिया सम्पादितभङ्गादिसंस्कारसम्पदा तस्य कचेन केशपाशेन समेत्य मिलित्वा द्राघिमशालिना अर्जितमार्जनश्रिया सम्पादितोत्तेजन-सम्पदा धनुर्गुणेनाधिमालाकर्षेण संयोगजुषा सन्धानभाजां मनोभुवः कुसुमेषोः पतत्त्रिणां बाणानां सौभाग्यमिव सौभाग्य सौन्दर्य मलम्भि लब्धमिति निदर्शनाभेदः॥ ५९॥

अनर्घ्यरत्नौघमयेन मण्डितो
रराज राजा मुकुटेन मूर्द्धनि ।
वनीयकानां स हि कल्पभूरुह-
स्ततो विमुञ्चन्निव मञ्जुमञ्जरीम् ॥ ६० ॥

नलस्य भाले मणिवीरपट्टिका-
निभेन लग्नः परिधिर्विधोर्बभौ ।
तदा शशाङ्काधिकरूपतां गते
तदानने मातुमशक्तिमुद्वहन् ॥ ६१ ॥

बभूव भैम्याः खलु मानसौकसम्
जिघांसतो धैर्य्यभरं मनोभवः

अनर्घ्येति । हि यस्मात् स राजा नलः वनीयकानामर्थिनां कल्पभूरुहः कल्पवृक्षः वनीयको याचनको मार्गणो याचकार्थिनौ इत्यमरः । ततोऽर्थिकल्पवृक्षत्वादनर्घ्यरत्नौघमयेन अमूल्यमणिनिचयप्रचुरेण मुकुटेन मूर्द्धनि मण्डितोऽलङ्कृतः सन् मञ्जुं फलदां मञ्जरीं सकलिकां बालशाखां मुञ्चन्नर्थिनां त्यजन्निव रराजेत्युत्प्रेक्षा ॥ ६० ॥

नलस्येति । विधोरिन्दोः परिधिः परिवेषो नलस्य भाले ललाटे मणिवीरपट्टिकानिभेन मणिमयवीरोचितपट्टमिषेण लग्नः सन् ततः शशाङ्कादधिकं रूपं स्वरूपं सौन्दर्य्यं वा यस्य तस्य भावस्तत्तां गते तदानने नलमुखे मातुमभिव्याप्तुमशक्तिमुद्वहन् बभौ यः परिवेषश्चन्द्रं परिवेष्ट्य शोभते इति लोकैकदेशवर्त्तित्वादाधाराधेययोरानुरूप्यादधिकालङ्कारः । आधाराधेययोरानुरूप्याभावोऽधिको मत इति लक्षणात् ॥ ६१ ॥

बभूवेति । भैम्या मानसं स्वान्तं सरोविशेषश्च मानसं स्वान्तमिति विश्वः । तदोकः स्थानं यस्य तं मनोनिष्ठं हंसं चक्राङ्गा मानसौकस इत्यमरः । धैर्य्यभरं धैर्य्यातिशयं धैर्य्यधनं जिघांसतो हन्तुमिच्छतः

नृपः पृथासूनुरिवाधिरूढवान्
स जन्ययानं मुदितः किरीटवान् ॥ ७२ ॥

विदर्भनाम्नस्त्रिदिवस्य वीक्षितुम्
रसोदयादप्सरसः समुज्ज्वलम् ।
स्वकात् स्वकादेत्य कृतप्रसाधना
व्यराजयन् राजपथानथाधिकम् ॥ ७३ ॥

अजानती कापि विलोकनोत्सुका
समीरधूतार्द्धमपि स्तनांशुकम् ।
कुचेन तस्मै चलतेऽकरोत् पुरः
पुराङ्गना मङ्गलकुम्भसम्भृतिम् ॥ ७४ ॥

किरीटवानिति प्रसिद्धः स नृपो नलः पृथासूनुरर्जुन इव वार्ष्णेयो वार्ष्णेयनामा अन्यत्र वृष्णेरपत्यं पुमान् वार्ष्णेयः कृष्णश्च इतश्चानिञ् इति ढक्। स नियन्ता सारथिर्यस्य स वार्ष्णेयनियन्तृकः नद्यृतश्चेति कप्। रथमधिरूढवान् अध्यारोहत शिष्टविशेषणेय पूर्णेमा ॥ ७२ ॥

विदर्भेति। अथ विदर्भनाम्नो विदर्भदेशाख्यस्य त्रिदिवस्य स्वर्गस्य सम्बन्धिन्योऽप्सरसः तत्रत्याः पौराङ्गना उज्ज्वलं दीप्यमानं नलं वीक्षितुं रसोदयाद्रागातिरेकात् कृतं प्रसाधनं याभिस्ता अलङ्कृताः सत्यो स्वकात् स्वकात् वीप्सायां द्विर्भावः। एत्यागत्य राजपथान् राजमार्गान् अधिकं व्यराजयन्नशोभयन् ॥ ७३ ॥

अथ वाराङ्गनानां तात्कालिकीः शृङ्गारचेष्टा नवभिर्वर्णयति अजानतीत्यादि। कापि पुराङ्गना विलोकनोत्सुका नलदर्शनलम्पटा अतएव समीरेण धूतमर्धं यस्य अर्धापसृतमपि स्तनांशुकमजानती व्यासङ्गादपि-कृतेन अस्तांशुकेन कुचकुम्भेन चलते स्वकार्यमभिगच्छते तस्मै नलाय पुरोऽग्रे मङ्गलकुम्भसम्भृतिं मङ्गलार्थं पूर्णकुम्भसम्भरणमकरोत् प्रवेशोत्सवेषु नानावस्त्रवेष्टितं पूर्णकलशमग्रे स्थापयेदित्याचारः ॥ ७४ ॥

करस्थताम्बूलजिघत्सुरेकिका
विलोकनैकाग्रविलोचनोत्पला।
मुखे निचिक्षेप मुखद्विराजता-
रुषेव लीलाकमलं विलासिनी॥ ७७॥

कयापि वीक्षाविमनस्कलोचने
समाज एवोपपतेः समीयुषः।
घनं सविघ्नं परिरम्भमाहृते-
स्तदा तदालोकनमन्वभूयत॥ ७८॥

दिदृक्षुरन्या विनिमेषवीक्षणा
नृणामयोग्यां दधती तनुश्रियम्।

करस्थेति। करस्थताम्बूलं अत्तुमिच्छुर्जिघत्सुः घसादेशात् सन्नन्तादुप्रत्ययः। एकैवैकिका विलोकनैकाग्रे तदेकासक्ते विलोचनोत्पले यस्याः सा मत्तो कापि विलासिनी मुखस्य द्वितीयो राजा द्विराजः वृत्तिविषये सङ्ख्याशब्दस्यापूरणार्थत्वं विभागेत्यादिवद्द्विराजः। द्विराजस्य भावो द्विराजता तया रुषा रोषेणेवेत्युत्प्रेक्षा। लीलाकमलं मुखे निचिक्षेप विदधे एतेन विभ्रमाख्य चेष्टानुभाव उक्तः विभ्रम स्त्वरयाऽकाले भूषास्थान विपर्य्यय इति लक्षणात्॥ ७७॥

कयापीति। कयापि कान्तया विनिमेषवीक्षया नल दर्शनलालसेन विमनस्के विमुखे विषयान्तर विमुखे लोचने यस्य तस्य तस्मिन् समाजे जनसमूह एव समीयुषः समेतस्योपपतेर्जारस्य घनं गाढ़ यथा तथा परिरम्भाहृतेरालिङ्गनसाहसकस्य तदा तत्काले नलविलोकनं सविघ्नं यथा तथा अन्वभूयत अनुभूतं कामान्धाः किं न कुर्वन्तीति भावः॥ ७८॥

दिदृक्षुरिति। दिदृक्षुर्नलं द्रष्टुमिच्छुः अतएव विनिमेषवीक्षणा अनिमेषदृष्टिः नृणामयोग्याम मानुषीं तनुश्रिय मङ्गसौन्दर्यं दधती

पदाग्रमात्रेण यदस्पृशन्महीम्
न तावता केवलमप्सरोऽभवत् ॥ ७९ ॥

विभूषणस्रंसनसंसनार्पितैः
करप्रहारैरपि धूननैरपि।
समान्तमन्तः प्रसभं पुरा परा
सखीषु सम्भापयतीव सम्मदम् ॥ ८० ॥

वतंसनीलाम्बुरुहेण किं दृशा
विलोकमाने विमनीबभूवतुः।
अपि श्रुती दर्शनसक्तचेतसाम्
न ते न ते शुश्रुवतुर्मृगीदृशाम् ॥ ८१ ॥

अन्या पदाग्रमात्रेण महीं यदस्पृशत् तावता केवलं महीतलस्पर्शेनैव अप्सरोऽभवत् अन्यथाप्सरसोऽस्याः को भेद इति भावः। अत्र मही-मस्पृशदित्युपमेयस्योपमानादाधिक्यकथनेन भेदप्रधानसाधर्म्योक्त्या व्य-तिरेकालङ्कारभेदः। भेदप्रधानं साधर्म्यमुपमानोपमेययोः। आधि-क्याल्पत्वकरणाद् व्यतिरेकः स उच्यत इति लक्षणात् ॥ ७९ ॥

विभूषणेति। परान्या काचित् सखीष्वन्तरन्तःशरीरे अमान्तम-त्याधिक्यं दुर्वहन्तं सम्मदं हर्षं विभूषणानां स्रंसनस्य स्रंसनाय यथास्थाना-भिवेशनाय अर्पितैः प्रयत्नैः करप्रहारैः पाणिघातैरपि तथा धूननैरपि प्रसभं बलात् पुरा संभापयतीव सम्पादयामासेवेत्यर्थः वा यावत्पुरानि-पातयोर्लड्डितिभूते लट्। यदा तत्कुचादिस्थापनाय प्रस्तादिकं सुहृद्भि-र्वर्षन्ति धुन्वन्ति च तद्वदिति भावः ॥ ८० ॥

वतंसेति। दर्शनसक्तचेतसां नलविलोकनासक्तचित्तानां मृगीदृशां स्त्रीणां श्रुती कर्णौ वतंसनीलाम्बुरुहेण कर्णावतंसोत्पलेन दृशा चक्षुषेव

काश्चिन्निर्माय चक्षुःप्रसृतिचुलुकितं तास्वौहन्त कान्ता
मौग्ध्यादाचूडमोषैर्निचुलितमिव तं भूषणानां मणीनाम्।
साहस्रीभिर्निमेषाकृतमतिभिरयं दृग्भिरालिङ्गितः किम्
ज्योतिष्टोमादियज्ञश्रुतफलजगतीसार्वभौमभ्रमेण ॥ ८२ ॥

भवन् सुद्युम्नः स्त्री नरपतिरभूद्यस्य जननी
तमूर्वश्याः प्राणानपि विजयमानस्तनुरुचा।

रूपकं विलोकमाने नलं पश्यन्त्यौ अयिमनसौ विमनसौ बभूवतुः दुःखिते किमित्युत्प्रेक्षा अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्चेति च्विप्रत्ययः स लोपश्च अस्य च्वावितीकारः। तेन विमनीभावेन ते न शुशुभतुः अन्यथा कथं पथि करणानां स्वविषयग्रहणमिति भावः ॥८१॥

काश्चिदिति। तासु पौरकान्तासु मध्ये काचित्कान्ता भूषणानां सम्बन्धिनां मणीनामोषैः आचूडमाशिखण्डकम् अभिविधावव्ययीभावः। निचुलितं छादितमिव स्थितं तं नलं चक्षुर्भ्यामिव प्रसृतिभ्यां निकुब्जपाणिभ्यां पाणिर्निकुब्जः प्रसृतिरित्यमरः। चुलुकितं निर्माय गृहीतं कृत्वा अधिकहृष्टेत्यर्थः। मौग्ध्यान्मोहादौहन्त बहुप्रकारमेवाह अयं पुमान् ज्योतिष्टोमादियज्ञानां श्रुतं ज्योतिष्टोमादिवाक्यावगतं फलं फलभूता जगती लोकः स्वर्गस्तस्याः सार्वभौमः सर्वभूमेरीश्वरः इन्द्रः सर्वभूमिपृथिवीभ्यामणञाविति अण्प्रत्ययः। इति भ्रमेण भ्रान्त्या निमेष मस्तकनिमिषकृतबुद्धिभिः अनिमेषाभिरित्यर्थः। साहस्रीभिः सहस्रसङ्ख्याकाभिः अण्चेति मत्वर्थीयोऽण् प्रत्ययः। दृग्भिर्नेत्रैरालिङ्गितः किमित्यौहन्तेत्येकान्वयो वा मणिभूषितमेनं दृष्ट्वा पौरकान्ता अस्मिन् इन्द्रभ्रान्त्या नेत्रसहस्रमेनं प्राप्तं किमित्युत्प्रेक्षितवत्य इत्यर्थः। भ्रान्तिमत्सङ्कीर्णेयमुत्प्रेक्षा ॥ ८२ ॥

भवन्निति। सुद्युम्नो नाम राजा स्त्री भवन्नीश्वरशापात् सन् यस्य पुरूरवसो जननी माताभूत् उर्वश्याः प्राणान् प्राणभूत मधुरो

हरारब्धक्रोधेन्धनमदनसिंहासनमसा-
वलङ्कर्मीणश्रीरुदभवदलङ्कर्तुमधुना ॥ ८३ ॥

अर्थी सर्वसुपर्वणां पतिरसावेतस्य यूनः कृते
पर्य्यत्याजि विदर्भराजसुतया युक्तं विशेषज्ञया ।
अस्मिन्नाम तया वृते सुमनसः सन्तोऽपि यन्निर्ज्जरा
जाता दुर्मनसो न सोढुमुचितास्तेषां तु सानौचिती ॥ ८४ ॥

मनोहारिरूप मित्यर्थः । तस्यां मिलायां बुधादुत्पन्न मैलं पुरूरवस मैलं तनुरुचा अङ्गलावण्येन विजयमानो अतिशयानोऽसौ नलः हरे-णारब्धस्याविर्षितस्य क्रोधस्य क्रोधाग्नेरिन्धनस्य दाह्यस्य मदनस्य सिंहासन मलङ्कर्तुम् अधिष्ठातु मलङ्कर्मणि अलङ्कर्मीणः कर्मक्षमोऽलङ्कर्मीण इत्यमरः । अषडक्षेत्यादिना खप्रत्ययः । सा श्रीर्यस्य सः मदन राज्याभिषेकार्हः सन्नधुना उदभवत् ततोऽपि सुन्दर इत्यर्थः । अत्र सुद्युम्नो नाम राजा मृगयासक्तो हिमवत्पार्श्वे पार्वतीवनं प्रविष्टः ईश्वर-शापात् स्त्रीत्वं प्राप्य बुधात्पुरूरवसमतिसुन्दरमिन्दुवंशप्रवर्तकं अजनया-मासेति पौराणिकी कथानुसन्धेया ॥ ८३ ॥

अर्थीति । अर्थित्वं प्राप्तोऽसौ प्रसिद्धः सर्वसुपर्वणां पतिर्देवेन्द्र एतस्य यूनः कृते यन्नलार्थं विशेषज्ञया विदर्भराजसुतया वैदर्भ्या पर्य-त्याजि परित्यक्तस्त्यक्तः युक्तम् अन्यथा अज्ञत्व स्यादिति भावः । किन्तु अस्मिन्नले तया वैदर्भ्या वृते सति निर्जरा देवा इन्द्रादयः सुष्ठु मन्यन्ते जानन्तीति सुमनसः सुप्तोऽजाणादिकोऽसुन्प्रत्ययः । शोभनचित्ताश्च स-न्तोऽपि दुर्मनसो दूनमनसो जाता नामेति यत् नामेति सम्भावनायां तेषां देवानां सा तु दुर्मनीकरणन्तु विधेयप्राधान्यात् स्त्रीलिङ्गनिर्देशः । अनौ-चिती अनौचित्यं सोढुं नोचिता विशेषज्ञाना सत्कृष्टवस्तुस्वीकरण मुचितमेव किन्तु देवतादिवशीकरणं सोढुमनुचित मिति भाव. ॥८४॥

अस्योत्कण्ठितकण्ठलोठिवरणस्रक्साक्षिभिर्दिग्धवैः
स्वं वक्षः स्वयमस्फुटन्न किमदः शस्त्रादपि स्फोटितम् ।
व्याव्रत्त्योपनतेन हा शतमखेनास्य प्रसाद्या कथम्
भैम्या व्यर्थमनोरथेन च शची साचीकृतास्याम्बुजा ॥ ८५
मा जानीत विदर्भजामविदुषीं कीर्त्तिं मुदः श्रेयसीम्
सेयं भद्रमचीकरन्मघवता न स्वं द्वितीयां शचीम् ।
कः शच्या रचयाञ्चकार चरितं काव्यं स नः कथ्यता
मेतस्यास्तु करिष्यते रसधुनीपात्रे चरित्रे न कैः ॥ ८६ ॥

अस्येति । अस्य नलस्योत्कण्ठिते कण्ठे लुठतीति लोठिन्या वरणस्रजः साक्षिभिर्दिग्धवैः स्वयं स्वतः स्फुटदपि त्रुटदपि इदं स्वं वक्षः शस्त्रादपि किं न स्फोटितं तत्र यावद्विस्फोटितव्य मेवेत्यर्थः । किञ्चास्य भैम्यां व्यर्थमनोरथेन व्याव्रत्त्योपनतेन प्रत्यावृत्तेन शतमखेनेन्द्रेण साचीकृतं तिर्य्यक्कृतम् आस्याम्बुजं यस्याः सा पराङ्मुखी शची कथं प्रसाद्या प्रसादयितव्या न कथञ्चिदित्यर्थः. हा विषादे ॥८५॥

सेति । विदर्भजां वैदर्भीमविदुषीम विशेषज्ञां मा जानीत मन्यध्वं देवानन्दं विहाय मानुषानन्दे प्रवृत्तेः कथमविदुषीशङ्कां निरस्यति । मुदः आनन्दात्कीर्त्तिं श्रेयसीं प्रशस्ततरां ततः किं तत्राह सेयं दमयन्ती प्रयोजिका मघवता इन्द्रेण प्रयोज्येन स्वमात्मानं द्वितीयां शचीं भद्रमचीकरत् नकारितवती नेन्द्र यत्र इत्यर्थः । करोतेर्णौ चङ्युपधाया ह्रस्वः चङीति द्विर्भावे सन्वद्भावे सन्वत इत्यभ्यासस्येत्वे दीर्घे लघोरिति दीर्घः । भद्रम् इन्द्रस्यावरणं साधु कीर्त्तिकरत्वादित्यर्थः । ८५ पुशचीमेवाह कः कविः शच्याश्चरिते काव्यं रचयाञ्चकार स कविर्नोऽस्माभ्यं कथ्यतां न कोऽपीत्यर्थः । एवं स दमयन्त्याः सम्बन्धिनी रसधुनी रसवती तटिनी ह्रादिनी धुनीत्यमरः । तस्याः पात्रे कूलद्वयमध्ये

वैदर्भीविबुधजन्मनिर्मिततपःशिल्पेन देहश्रिया
नेत्राभ्यां स्वदते युवायमवनीवासः प्रसूनायुधः ।
गीर्वाणालयसार्वभौमसुकृतप्राग्भारदुष्प्रापया
योगं भीमजयानुभूय भजतामद्वैतमद्य त्विषाम् ॥ ८७ ॥

स्त्रीपुंसव्यतिषञ्जनं जनयतः पत्युः प्रजानामभू-
दभ्यासः परिपाकिमः किमनयोर्दाम्पत्यसम्पत्तये ।
आसंसारपुरन्ध्रिपूरुषमिथःप्रेमार्पणक्रीडया-
प्येतज्जम्पतिगाढरागरचनात् प्राकर्षि चेतोभुवः ॥ ८८ ॥

प्रवाहस्थान इत्यर्थः । पात्रं तु भजने योग्ये चित्ते कूलद्वयान्तरे इति वैजयन्ती । चरित्रे के कवयो न करिष्यन्ते मयापि स्वत एवेत्यर्थः । स्वय मेव दृष्टान्त इति कवेर्भावात्यर्थः तस्मात्कीर्तिकरत्वादेतदेव भद्र मिति भावः ॥ ८६ ॥

वैदर्भीति । अवन्यां वासो यस्य भूलोकमन्मथोऽयं युवा नलो वैदर्भ्या दमयन्त्या विबुधजन्मसु निर्मितेन तपसा शिल्पेन निर्माणेन दमयन्ती-तपःफलेनेत्यर्थः । देहश्रिया कायकान्त्या नेत्राभ्यां स्वदते रोचते नेत्रानन्दं करोतीत्यर्थः । रुच्यर्थानां प्रीयमाणत्वात् चतुर्थी । तस्मादयं गीर्वाणालयसार्वभौमसुकृतप्राग्भारैर्नाकनायकसुकृतराशिभिरपि दुष्प्रापया इन्द्रादिदुर्लभयेत्यर्थः । भीमजया भैम्याः योगमनुभूय अद्य त्विषां कान्तीनामद्वैतमद्वितीयत्वमसाधारणत्वं भजतां गच्छतु ॥ ८७ ॥

स्त्रीपुंसेति । स्त्री च पुमांश्च स्त्रीपुंसौ अचतुरादिना निपातनात् साधु । तद्व्यतिषञ्जनं जनयतः सङ्घटनं कुर्वतः प्रजानां पत्युः स्रष्टुः परिपाकेन निर्वृत्तः परिपाकिमः परिपक्व इत्यर्थः । भावप्रत्ययान्तादिमनिज्वक्तव्यः । अभ्यासः अनयोर्दमयन्तीनलयोर्दाम्पत्यस्य जायापतित्वस्य सम्पत्तये सम्पादनाय अभूत् किं नोचेत्कथमीदृगनुरूपसङ्घटकत्व मिति भावः ।

ताभिर्दृश्यत एष यान् पथि महाज्यैष्ठीमहे मन्महे
यद्दृग्भिः पुरुषोत्तमः परिचितः प्राग्मञ्चमञ्चत्कृतः ।
सा स्त्रीराट् पतयालुभिः शितिसितैः स्यादस्य दृक्चामरैः
सस्ने माघमघाभिघातियमुनागङ्गौघयोगे यया ॥८९॥

किञ्च चेतोभुवः कामस्यापि आ संसारं संसारमारभ्य अभिविधौ अव्ययी-भावः । पुरन्ध्रीपूरुषयोः स्त्रीपुंसयोः मिथोऽन्योन्यं मार्गणार्पणमनुरागो-त्पादनमेव क्रीडा तथापि एतज्जम्पत्योर्यो गाढो रागः प्रेमा तस्य रचनात् सम्पादनात् प्राकर्षि प्रकर्षं गमित इत्यर्थः । तदभ्यासं विना कथमीदृ-गन्योन्यानुरागजननचातुरीभावः । कर्मण्यत्वात्कर्मणि लुङ् । दम्पती जम्पती जायापती इत्यमरः । जायाशब्दस्य दम्भावो जम्भावश्च निपातितः ॥ ८८ ॥

ताभिरिति । ताभिः स्त्रीभिरेष नलः पथि राजपथे यान् गच्छन् यातेर्लटः शत्रादेशः । दृश्यते याभिः पूर्वस्मिन् जन्मनि ज्येष्ठया नक्षत्रेण युक्ता पौर्णमासी नक्षत्रेण युक्तः काल इति ङीप् । सा महती चासौ ज्येष्ठी तस्यां यो मह उत्सवः तस्मिन् मञ्चपर्य्यङ्कं मञ्चन् मञ्चस्थ इत्यर्थः । शयनं मञ्चपर्य्यङ्कपल्यङ्काः खट्वया समा इत्यमरः । पुरुषोत्तमः परि-चितः कृतः उपासित इत्यर्थः । तादृक् सुकृतं विना कथमीदृङ्महाभाग-दर्शनं लभ्यत इति भावः । यथाहुः । दोलारूढञ्च गोविन्दं मञ्चस्थं मधुसूदनम् । रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते । सा स्त्री पतया-लुभिः परिपातुकैः स्पृहिगृहिपतीत्यादिना चौरादिकात्पतेरालुचि अया-न्ताल्वाय्यादिना णेरयादेशः । शितिभिः सितैश्चास्य नलस्य दृग्भिः दृष्टि-भिरेव स्त्रीणां राट् स्त्रीराट् सत्सूद्विषेत्यादिना क्विप् । राज-चिह्नत्वात् चामराणामिति भावः । यया स्त्रिया अघान्यतिहन्तीत्यघाति-घाती पापविनाशी ताच्छील्ये णिनिः हो हन्तेरिति कुत्वं हनस्तोऽचिण्ण-लोरिति नकारस्य तकारः । तस्मिन्यमुनागङ्गयोरोघयोगे समीपे गङ्गा-यमुनासङ्गमे प्रयाग इत्यर्थः । सामीप्ये अव्ययीभावः तृतीयासप्तम्यो

आत्मानं त्रिदशप्रसादफलतां पत्ये विधायानया
व्रीडारोपापयशः कथानवसरः सृष्टः सुराणामपि ॥ ८१ ॥
इत्यालेपुरनुप्रतीकनिलयालङ्कारसारश्रियाः
लङ्कुर्वन्ततुरामणीयकममूर्रालोक्य पौरस्त्रियः ।
सानन्दं कुरुविन्दसुन्दरकरस्यानन्दनं स्यन्दनम्
तस्याध्यास्य यतः शतक्रतुहरित्क्रीडाद्रिमिन्दोरिव ॥ ८२ ॥

अ सुर भमिति । राज्ञां भूभुजां राजव्रजे स्वयम्बरगतराजसमाजे ताटस्थ्येन नलाद्यर्थं यदभिगमनं स्वयम्बरप्रवेशनं तस्यानुरोधेऽनु-वर्तनमेव परं प्रधानं यस्या स्तया नलैकपरया भैम्या आसुत्राम मिन्द्रप-र्यन्त मभिविधावव्ययीभावः अनश्चेति समासान्त टच् । मखभुजां देवानाम प्राशनात्प्रतिषेधाद्धेतोः लज्जया त्रजा प्रमार्जन युक्ता येष्येव.जि र्वर्जिता आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेदिति न्यायादिति भावः । अनया भैम्या त्रिदशप्रसादेन फलित सफलमात्मानं पत्ये धारय न्नलाय दत्त्वा सुराणां व्रीडारोपायशसां सम्प्रतिषेधप्रसक्तानां कथाया अप्यनवसरः सृष्टः अनवकाशः कृतः तदनुरूपेव प्रकृतेन कश्चिद्यौवकाश इत्यर्थः ॥ ८१ ॥

इतीति । कुरुविन्दः पद्मरागः कुरुविन्दस्तु मुस्तायां कुल्माषव्रीहि-भेदयोः । हिङ्गुले पद्मरागेऽपि मुकुरेऽपि समीरित इति विश्वः । तद्वत्-सुन्दरौ करौ हस्तौ अन्यत्र सुन्दराः कराः अंशवो यस्य तस्य आनन्दय-तीत्यानन्दनम् आनन्दकरं नन्द्यादित्व ल्युः । स्यन्दनं रथमध्यास्य अधिष्ठाय यतो गच्छत इत्योलटः शत्रादेशः । तस्य नलस्य शतक्रतुहरितः प्राच्याः क्रीडाद्रि मुदयाद्रिं त मध्यास्य यतो गच्छत इन्दोरिव अनुप्रतीक-निलयानां प्रत्यवयवसंश्रयाणाम् अलङ्कारसाराणाम् आभरणश्रेष्ठानां श्रिया शोभासाधनेनैः.लङ्कुर्वन्त्या आत्मानं प्रसादयन्त्या स्तनोर्मूर्तेः राम-णीयकं रमणीयत्वं योगोपधाद्गुरूपोत्तमाद्वुञ् । आलोक्य सानन्दमम

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मा मल्लदेवी च यम्।
यातः पञ्चदशः कृशेतररसस्वादाविहायं महा-
काव्ये तस्य हि वैरिसेनिचरिते सर्गोनिसर्गोज्ज्वलः॥ ९३॥

---

पौरस्त्रिय इति पूर्वसम्भोगोक्तरीत्या आलेपुरालपन् आलपेर्लिट्। अतएव एत्वाभ्यासलोपौ॥ ९२॥

श्रीहर्षमिति। कृशेतरेणाकृशेन निर्भरेण रसेन शृङ्गारेण स्वादौ रुचिरे तस्य कृतौ काव्ये पञ्चदशानां पूरणः पञ्चदशः तस्य पूरणेऽप्। सर्गो यातो गतः समाप्त इति यावत्॥ ९३॥

इति पदवाक्यप्रमाणपारावारपारीण श्रीमहोपाध्यायकोलाचल-मल्लिनाथसूरिविरचितायां नैषधव्याख्यायां जीवातुसमाख्यायां पञ्चदशः सर्गः॥ १५॥

# नैषधचरितम् ।

## षोड़शः सर्गः ।

वृतः प्रतस्थे स रथैरथो रथी
गृहान् विदर्भाधिपतेर्धराधिपः ।
पुरोधसं गौतममात्मवित्तमम्
द्विधा पुरस्कृत्य गृहीतमङ्गलः ॥ १ ॥

स्वभूषणांशुप्रतिबिम्बितैः स्फुटम्
भृशावदातैः स्वनिवासिभिर्गुणैः ।
मृगेक्षणानां समुपासि चामरै-
र्विधूयमानैः स विधुप्रभैः प्रभुः ॥ २ ॥

वृत इति । अथो प्रस्थानानन्तरम् रथोऽस्यास्तीति रथी रथिकः स धराधिपो नलः अतिशयेनात्मवित्तमम् आत्मतत्त्वज्ञानिनं गौतमं गौतमाख्यमृषिं पुरोधसं पुरोहितं द्विधा पुरस्कृत्य पूजयित्वाग्रे कृत्वा च पुरस्कृतः पूजितेऽभियुक्तेऽग्रतः कृत इत्यमरः । गृहीतमङ्गलः स्वीकृतमङ्गलाचारः सन् तथैव रथैर्वृतो विदर्भाधिपतेर्भीमस्य गृहान् प्रति प्रतस्थे प्रस्थितः समवप्रविभ्यः स्थ इत्यात्मनेपदम् ॥ १ ॥

स्वेति । स प्रभुर्नलः स्वभूषणानामंशुषु मणिषु प्रतिबिम्बितैर्भृशमवदातैः स्वच्छैर्विधूयमानैः कम्प्यमानैः विधोः प्रभेव प्रभा येषां तैर्मृगेक्षणानां चामरग्राहिणीनां सम्बन्धिभिश्चामरैः चामरव्यजनेनेत्यर्थः । भृशावदातैः स्वनिवासिभिः स्वनिष्ठैर्गुणैः श्रुतिशीलादिगुणैरेव समुपासि

परार्ध्यवेषाभरणैः पुरःसरैः
सहाधिरूढे निषधावनीभृति।
दधे सुनासीरपदाभिधेयताम्
स रूढिमात्रादपि वृत्रजाववः॥ ३

नलस्य नासीरसृजो महीभुजाम्
किरीटरत्नैः पुनरुक्तदीपया।
अदीपि रात्रौ वरयात्रया तया
चमूरजोमिश्रतमिस्रसम्पदा॥ ४॥

उपासितः स्फुटं प्रतिबिम्बितचामरैः स्वामिसेवार्थं माविर्भूत चामर-
गुणत्व मुत्प्रेक्षते॥ २॥

परार्ध्येति। निषधावनीभृति नले पराध्र्यानि श्रेष्ठानि परा-
वराधरोत्तम पूर्वार्ध्येति यत्प्रत्यय। तानि वेषा आकल्पा वस्त्रा-
भरणादि शोभाः आकल्पवेषो नेपथ्य मित्यमर। ते च आभ-
रणानि कटकमकुटादीनि च येषां तैः पुरःसरैः सुनासीरैः सहा-
धिरूढे गते सति स प्रसिद्धो वृत्रशात्रव इन्द्र सु पूजायाम्बु सुर इति
यदिति स्वामी। सुः शोभना नासीरा यस्य सः सुनासीरः तस्य पदस्या-
भिधेयतां वाच्यत्वं रूढिमात्रादश्वकर्णादिवत् समुदाय प्रतीतिमात्राद्
दधे यदि न तु नलवरणपदार्थयोगाद्यथा युक्त मित्यर्थः। एतत्सासीर
दर्शनामयमेव सुनासीर इन्द्र इति प्रतीयत इति भाव॥ ३॥

नलस्येति। चमूरजोमिश्रास्तमिस्रसम्पदो यस्यां तया चमूरजो
मेवनाद्गाढान्धकारयेत्यर्थः। तथापि नलस्य नासीरसृजाम् अग्रे
सरसम्पादकानां महीभृतां राज्ञां किरीटगतैः पुनरुक्ता दीपा यस्यां
तया प्रकृतया वरस्य वोढुर्यात्रया विवाहैकसम्बन्धयात्रया रात्रावपि
अदीपि दीप्तं भावे लुङ्। दीप प्रकाशेन सा यात्रा गाढान्धकारेऽपि
दीपवदिति इत्यर्थः॥ ४॥

विदर्भराजः क्षितिपाननुक्षणम्
शुभक्षणासन्नतरत्वसत्वरः ।
दिदेश दूतान् पथि यान् यथोत्तरम्
चमूममुष्योपचिकाय तच्चयः ॥ ५ ॥

हरिद्विपद्वीपिभिरङ्कनैर्नभो-
नभस्वदाध्मापनपीनितैरभूत् ।
तरस्वदश्वध्वजिनीध्वजैर्वनम्
विचित्रचीनांशुकवल्लिवेल्लितम् ॥ ६ ॥

भुवाऽऽह्वयन्तीं निजतोरणस्रजा
गजालिकर्णानिलखेलया ततः ।

विदर्भेति। विदर्भराजो भीमः शुभक्षणस्य विवाहमुहूर्तस्य आसन्नतरत्वेन सत्वरः सन् अनुक्षणं ये क्षितिपास्तानेव दूतान् उत्तरोत्तरं यथार्थे वीप्सायामव्ययीभावः। दिदेश तच्चयस्तेषां प्रेषितानां राज्ञां समूहः पथि मार्गे अमुष्य नलस्य चमूमुपचिकाय वर्धयामास झटिति कृत्यं। तावन्तः प्रेषणा इति लग्नातिक्रमभीरोरत्र त्वरातिशयोक्तिः ॥ ५ ॥

हरीति। विचित्राणि चीनांशुकानि पट्टवस्त्राणि तैरेव वल्लिभिर्वेल्लितं नभोऽन्तरिक्षं नभस्वतो वायोराध्मापनेन पूरणेन पीनितैः स्थूलितैः पीनित स्थूल पीवर इत्यमरः। हरिद्विपद्वीपिभिः सिंहराजव्याघ्रैः तदाकारैरित्यर्थः। शार्दूलद्वीपिनौ व्याघ्रे इत्यमरः। अंशुकैरंशुकनिर्मितैः तरस्विनां वेगवतामश्वानां ध्वजिनीषु सेनासु ध्वजैर्वनमभूत् वनकल्पमभूदित्यर्थः ॥ ६ ॥

भुवेति। स महीपतिर्नलः गजालीनां गजघटानां कर्णानिलैः खेलया निजया तोरणस्रजा तोरणमालयैव भुवा आह्वयन्तीं ग्राम

ददर्श दूतीमिव भीमजन्मनः
स तत्प्रतीहारमहीं महीपतिः ॥ ७ ॥
श्लथैर्दलैस्तम्भयुगस्य रम्भयो-
श्चकास्ति चण्डातकमण्डिता स्म सा ।
प्रियासखीवास्य मनःस्थितिस्फुरत्-
सुखागतप्रश्नतूर्यनिस्वना ॥ ८ ॥
विनेतृभर्तृद्वयभीतिदान्तयोः ।
परस्परस्मादनवाप्तसंगमः ।
अजायत द्वारि नरेन्द्रसेनयोः
समागमः स्फारमुखारवोद्गमः ॥ ९ ॥

मागच्छेति आह्वयन्तीं भीमजन्मनो भैम्या दूतीमिवेत्युत्प्रेक्षा तस्य भीमस्य प्रतीहारमहीं ददर्श स्त्री द्वाद्वारं प्रतीहारः इत्यमरः ॥ ७ ॥

श्लथैरिति । रम्भयोः स्तम्भयुगस्य द्वारशोभार्थं प्रस्थापितकदलिस्तम्भयुगलस्य श्लथैः पर्णैः चण्डातकेन अर्द्धोरुकेण मण्डिता भूषिता अर्द्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकं इत्यमरः । सा द्वारमही मनसि स्थित्या मनोगतत्वेन स्फुरन् वलन् निर्गच्छन् स सुखागतप्रश्नः प्रश्नो-क्रतः करोतेर्णयन्त कर्मणि क्त । तूर्यनिस्वनो यया सा सती अस्य नलस्य प्रिया सखी भैमीसखीव चकास्ति स्म चकासामास कदलादलतूर्यनिस्वनयोगात् सुखसना स्वागतं पृच्छन्ती भैमीसखीव बभासेत्युत्प्रेक्षा ॥ ८ ॥

विनेत्रेति । विनेत्रोर्नियामकयोर्भर्त्रोः स्वामिनोर्द्वयोर्भीत्या दान्तयोर्नरेन्द्रसेनयोर्भीमनलसेनयोः परस्मादन्योन्यस्मादनवाप्तं संगमं मिलनं यस्मिन् स्फारः स्फारो मुखारवोद्गमः कलकलोदयो वा यस्मिन् स समागमो मेलनं द्वारि राजभवनद्वारे अजायत जातः ॥ ९ ॥

निवेश्य बन्धूनिति वृत्त्युदीरितम्
दमेन गत्वार्धपथे कृतार्हणम्।
विनीतमाद्वारत एव पद्गताम्
गतं तमैक्षिष्ट मुदा विदर्भराट्॥ १०॥

अथायमुत्थाय विमार्ग्य दोर्युगम्
मुदा प्रतीयेष तमात्मजन्मनः।
सुरस्रवन्त्या इव पात्रमागतम्
धृताभितो वीचिगतिः सरित्पतिः॥ ११॥

यथावदस्मै पुरुषोत्तमाय ताम्
स साधुलक्ष्मीं वसुवाहिनीश्वरः।

निवेश्येति। दमेन भीमजात्मजेन बन्धून् जामातृ बन्धून् निवेश्य उपवेश्य गत्वा प्रत्युद्गत इति इत्युदीरितम् इत्यागमन मेषधार्य्यतामिति प्रार्थितं अर्धपदे अर्धमार्गे कृतार्हणं कृतपूजां विनीत मनुगतम् आद्वारतो द्वारमारभ्य पादाभ्यां गच्छति पद्गः तत्तां पद्गतां पादचारित्व गतं पादस्य पदाज्यातिगोपहतेष्विति पादस्य पदादेशः। त नलं विदर्भराट् भीमो मुदा ऐक्षिष्ट अद्राक्षीत्॥ १०॥

अथेति। अथ नलेक्षणानन्तरम् अयं विदर्भराडुत्थाय दोर्युगं प्रसार्य्य आत्मजन्मनः आत्मजायाः भैम्याः पात्र योग्य मभ्यागत नलं धृता अभितोवीचिगतिरुभयतस्तरङ्गप्रसारो यस्य स सरित्पतिः समुद्रः सुरस्रवन्त्या भागीरथ्या इव अस्या गत पात्रं तीर्थद्वयान्तरमिव मुदा हर्षेण प्रतीयेष प्रत्यच्छत् आलिलिङ्गेत्यर्थः। ॥ ११॥

यथा वदेति। अथ वरप्रत्युद्गमनानन्तरं वसुवाहिनीश्वरः वसुसेनाधीश्वरः महीभृतां राज्ञां पतिर्राजराजः स भीमः पुरुषोत्तमाय

शिवामथ स्वस्य शिवाय नन्दिनाम्
ददे पतिः सर्व्वविदे महीभृताम् ॥ १२ ॥

असिस्वदद्यन्मधुपर्कमर्पितम्
स तद्व्यधात्तर्कमुदर्कदर्शिनाम्।
यदेष पास्यन्मधु भीमजाधरम्
मिषेण पुण्याहविधिं तदा कृतम् ॥ १३ ॥

---

पुरुषश्रेष्ठाय शिवाय भद्रमूर्त्तये सर्वविदे सर्वज्ञाय अस्मै नलाय साधु-लक्ष्मीं समीचीनशोभां शिवां भद्रमूर्त्तिं स्वस्य नन्दनां दुहितरं तां दम-यन्तीं यथावद्यथार्हं विधिवदित्यर्थः। तदर्हमिति वतिप्रत्ययः। ददे दत्तवान् अन्यत्र वाहिनीश्वरो नदीपतिः समुद्रः पुरुषोत्तमाय विष्णवे लक्ष्मीं ददे ददौ तथा महीभृतां पर्वतानां पतिर्हिमवान् स्वनन्दनां शिवां गौरीं शिवाय शम्भवे ददौ च अर्थान्तरं प्रति विशेषणविशेष्ययो-रपि श्लिष्टत्वादभिधायाः प्रकृतार्थोपक्षीणत्वात् ह्यप्रकृतार्थानुपपत्त्याभावो-पलक्षणात् ध्वनिरेवोपम्यपर्यवसायी। शिवं भद्रं शिवः शम्भुः शिवा गौरी शिवा भर्येति सर्वत्र शाश्वतः ॥ १२ ॥

असिस्वददिति। स नलः अर्पितं दत्तं मधुपर्कं दधिमधुघृतात्मकं त्रिमधुरमसिस्वदत् स्वादितवानिति यत् स्वादेर्णौ चङ्युपधाह्रस्वः तन्मधुपर्कस्वादनम् उदर्कदर्शिनामागामिफलज्ञानां मुदर्कफलमुत्तरमित्यमरः। तर्कं कश्चिदूहस्य व्यधादकार्षीत् तं तर्कमेवाह एष नलः भीमजाया भैम्या अधरमेव मधु माक्षिकं पास्यन् धास्यन् मिषेण मधु-पर्कपानव्याजेन पुण्याहविधिं कर्मादौ कर्त्तव्यं पुण्याहकर्ममेव चका-रेति सापह्नवोत्प्रेक्षा इति यत्तत् तर्कमिति पूर्वेण सम्बन्धः. मङ्गल्यकृत्ये-ष्वादौ पुण्याहक्रिया प्रसिद्धैव ॥ १३ ॥

वरस्येति। वरस्य नलस्य पाणिः परम तत्कौतुकी यत्नबद्ध लम्पटः परिहासानुपय बधू करः पङ्कजकालीमाश्चर्य योग्य तदनुकृतो

वरस्य पाणिः परघातकौतुकी
वधूकरः पङ्कजकान्तितस्करः ।
सुराज्ञि तौ तत्र विदर्भमण्डले
ततो निबद्धौ किमु कर्कशैः कुशैः ॥ १४ ॥

विदर्भजायाः करवारिजेन यत्
नलस्य पाणेरुपरि स्थितं किल ।
विशङ्क्य सूत्रं पुरुषायितस्य तद्
भविष्यतोऽस्मायि तदा तदालिभिः ॥ १५ ॥

सखा यदस्मै किल भीमसंज्ञया
स यक्षसख्याधिगतं ददौ भवः ।

रित्यादिना सुट् तलोपौ । तत. पूर्वापराधाद्धेतो स्तौ वधूवरौ शोभनो राजा यस्य तस्मिन् सुराज्ञि विदर्भमण्डले विदर्भराज्ये कर्कशैः कुशै-र्निबद्धौ संयतौ किमु ? धार्मिकराज्ये दुष्टा बध्यन्त इति भावः । वधूवरयोः कुशसूत्रेण करबन्धनं केषाञ्चिदाचारप्राप्तस्य बन्धनस्य अपराधहेतुकत्वमु-त्प्रेक्ष्यते ॥ १४ ॥

विदर्भजाया इति । विदर्भजायाः वैदर्भ्याः करवारिजेन कर-कमलेन नलस्य पाणेरुपरि स्थितं किलेति यद्भावे क्तः । सूत्र्यते अनेनेति सूत्रं भविष्यतः पुरुषायितस्य पुरुषवदाचरितस्य सूचकसूत्रत्वात्तत्तरं विशङ्क्य विभाव्य तदा तदालिभिर्भैमीसखीभिः अस्मायि मन्दमहासि स्मयतेर्भावे लुङ् चिण्वदिड्वायादेश. । हस्तेन करस्योपरि स्थित्या पुंभाव सूत्रं व्यव-स्थितं कृतम् इत्यर्थ. ॥ १५ ॥

अथैकविंशतिश्लोक्या यौतकदानं वर्णयति सखेत्यादि । स प्रसिद्धो भगवान् ईश्वरो यक्षसख्याधिगत कुबेरमभिलक्ष्य कुबेरालब्धमित्यर्थः । यक्षः कपिङ्गलविलेत्यमरः । यश्चिन्तामणिदामः भीम इति संज्ञया नाम्ना सखा सन् स्वनामधारणात्प्रीतः सन्नित्यर्थः । व्योमकेशो भवो भीमः इत्यमरः । अस्मै भीमरूपाय ददौ स्वनामकरण पारितोषिकत्वेनेतिभाव. ।

— ।

ददे तदेष श्वशुरः सुरोचितम्
नलाय चिन्तामणिदाम कामदम् ॥ १६ ॥

बहोर्दुरापस्य वराय वस्तुन-
श्चितस्य दातुं प्रतिबिम्बकैतवात् ।
बभौतरामन्तरवस्थितं दधद्
यदर्थमभ्यर्थितदेयमर्थिने ॥ १७ ॥

असिं भवान्याः हतकासुरासुरम्
वराय भीमः स्म ददाति भासुरम् ।

ददे तत् सुरोचितं देवतायोग्यं कामदुघं चिन्तामणीनां दाम मालिकां श्वशुरः पत्न्याः पिता भीमभूपतिः वराय जामात्रे ददौ ॥ १६ ॥

तन्मणिदामैव वर्णयति । बहोरिति तद्दाम वराय दातुं चितस्य राशीकृतस्य दुरापस्य दुर्लभस्य बहोरनेकस्य भाषितपुंस्कत्वात् पुंव-द्भावः । वस्तुनः पदार्थजातस्य प्रतिबिम्बस्य कैतवान्मिषादन्तरभ्यन्तरे स्थितम् अर्थिने याचकाय अभ्यर्थितो याचितः सन् देयो देयत्वेन निश्चितः तमभ्यर्थितं तद्देयमर्थं वस्तुजातं तदेतच्चिन्तामणिदाम स्वयं दातृत्वादर्थि-देयवस्तुजातं पूर्वोक्तप्रतिबिम्बव्याजादन्तर्धानमिवेति सापह्नवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या बभौतराम् अतिशयेन बभौ तिङन्तादाम् प्रत्ययः ॥ १७ ॥

असिमिति । भीमः हतकासुरासुरं हतमहिषासुरं कासरो म-हिषो वाहद्विषत्कासरसैरिभा इत्यमरः । भासुरं भास्वरं भवान्या-दुर्गाया असिं दत्तमित्यर्थः । वराय नलाय ददाति स्म स्वयम्बरस्य रा-ङ्गणगया दुर्गया अस्मै दत्त इत्याह यश्च सम्भोग निमग्नया महिषादि-मर्दनानन्तर निहत्तरणरागया केवल सुरत सुखासक्तया तया दुर्गया भवस्य स्वप्रियस्य गम्भीनामधारिण्येति [illegible] पक्षः । प्रियः पतिर्भर्ते-त्यमरः । तस्मै भीमभूभुजे सोऽसिः ददे दत्तः [illegible] ददातेः कर्मणि लिट् ॥ १८ ॥

ददे हि तस्मै भवनानधारिणे
स यस्य सम्भोगनिमग्नयाऽनया ॥ १८ ॥
अधारि यः प्राङ्महिषासुरद्विषा
कृपाणमस्मै तमदत्त कूकुदः ।
अहायि तस्या हि धवार्द्धभञ्जिना
स दक्षिणार्द्धेन पराङ्गदारणः ॥ १९ ॥
उवाह यः सान्द्रतराङ्ककाननः
स्वशौर्य्यसूर्य्योदयपर्व्वतव्रतम् ।
सनिर्झरः शाणनधौतधारया
समूढमन्ध्यः स्तनयत्नुजाम्बुजा ॥ २० ॥

अधारीति । यः कृपाणः प्राक् पूर्व्वं महिषासुरद्विषा दुर्गया अधारि धृतः तं कृपाणम् असिं कूकः कन्या कूक रित्युच्यते कन्या इति स्मरणात् तां ददातीति कूकुदः कन्याप्रदो भीमः सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुद इत्यमरः । अस्मै नलाय दत्तवान् दाने कारणान्तर माह तस्या दुर्गायाः सर्व्वभिना धवस्य प्रियस्यार्द्धे वामार्द्धे भजतीति तन्मज्जिना दक्षिणार्द्धेन कर्त्रा यः कृपाणधारीति भावः । परेषां सर्व्वर्गणाम् अङ्ग-दारणो न त्वविदारणः अहायि अत्याजि खलु अन्यथा स्वप्रिया-ङ्गदारण प्रसक्तादिति भावः । हातेः कर्म्मणि लुङ् चिणि युग गम ॥१९॥

उवाहेति । सान्द्रतरा निरन्तरा अङ्काः कलङ्काख्यानि चिह्नान्येव काननानि यस्य स शाणनेनोत्तजनेन धौतया निर्मलया धारया अस्या आसारेण सनिर्झरः सप्रवाहः स्तनेषु मङ्गलेषु यत्नषु जातं तज्जलेन स्वजा रक्तेन समूढा धृता सन्ध्या येन स यः कृपाणः स्वशौर्य्यमेव सूर्य्य-स्तोदयपर्वतस्य व्रतं सूर्य्योदयनियम सुवाह वहतिस्म इति रूपका-लङ्कारः ॥ २० ॥

यमेन जिह्वा प्रहितेव या निजा
तमात्मजां याचितुमर्थिना भृशम् ।
स तां ददेऽस्मै परिवारशोभिनीम्
करग्रहार्हामसिपुत्रिकामपि ॥ २१ ॥

यदङ्गभूमीबभतुः स्वयोपिता-
मुरोजपत्रावलिनेत्रकज्जले ।
रणस्थलस्थखड्गतच्छायिताध्वने
गृहीतदीर्घैरिव दक्षिणीकृते ॥ २२ ॥

पुरैव तस्मिन् समदर्शि तत्सुता-
भिकेन यः सौहृदनाटिनाग्निना ।

यमेनेति । या निजा असिपुत्रिका भृशमत्यर्थं मर्थिना याचकेन यमे-नात्मजेन तं भीम मात्मजा भैमीं याचितुं प्रेषिता प्रहिता स्थितेत्युत्प्रेक्षा स भीमः परिवारेण कोषेण परिजनेन च शोभिनीं परिवारः परिजने खड्गकोषे परिच्छदे इति विश्वः । करग्रहस्य हस्तधारणस्य चार्हां तामसिपुत्रिकां छुरिकां स भीमो भूपतिरस्मै ददे गस्त्रीपुत्रिकयोः प्रकृ-तत्वात् केवलप्रकृत श्लेषः ॥ २१ ॥

यदिति । यस्या असिपुत्रिकाया अङ्गभूमौ प्रान्तदेशौ रणस्थल मेव स्थण्डिलमनात्मृतभः तत्र शेरत इति तच्छायिन व्रत इति णिनिः । तच्छायितेव व्रत तत्र गृहीतदीक्षैः दक्षिणीकृते असिपुत्रिकायै तत् कान्तिश्चक्ष दक्षिणीकृते इत्यर्थः । स्वयोपितामुरोजयोः पत्रावलिः, स्तनपत्राङ्कः, नेत्र कज्जले इव बभतुर्विरेजतुः इत्युत्प्रेक्षा भावे लिटि ष्यनुबादेशः ॥ २२ ॥

पुरेति । तत्सुताभिकेन भैमीकामुकेन कंसः कामयिताभीकः इत्यमरः । कमितेति निपातनात्साधु । अतएव सुहृदयस्य भावः सौहृद सौहार्दं युवादित्य दण् सुहृदादिना सुहृदनेत्यादिनोभयपदवृद्धिः

नलाय विश्राणयति स्म तं रथम्
नृपः कुलक्ष्माद्रिसमुद्रकापथम् ॥ २३ ॥
प्रसूतवत्ता नलकूवरान्वय-
प्रकाशितस्यापि महारथस्य यत् ।
कुबेरदृष्टान्तबलेन पुष्पक-
प्रकृष्टतैतस्य ततोऽनुमीयते ॥ २४ ॥
महेन्द्रमुच्चैःश्रवसा प्रतार्य्य य-
न्निजेन पश्चात्कृत सिन्धुरन्धिनम् ।

---

अतएव सौहृदशब्दादपि हृद्भावादिति वामनः । तद्घाटयति यस्तेन सौहृदनाटिना अग्निना यो रथः पूर्वं स्वयम्बरात्प्रागेव तस्मिन् भीमे समर्प्य सन्दिष्टः दत्त इत्यर्थः । कुलक्ष्माः कुलपर्वता अद्रयः समुद्राः कापथाः अन्ये कुत्सितपथाश्च यस्य तं कापथ्यक्षयोरिति कोः कदादेशः । तमग्निदत्तं रथं नलाय भूपो भीमो विश्राणयति स्म ददावित्यर्थः । विश्राणनं वितरणम् इत्यमरः ॥ २३ ॥

प्रसूतवत्तेति । यद्यस्मादस्यापि कुबेरवदितिभावः महारथस्य महतो रथस्य अन्यत्र महान् रथो यस्य तस्य रथिकविशेषस्य प्रसूतवत्ता प्रकृष्टसारथिवत्ता सूतः क्षत्ता च सारथिः इत्यमरः । मत्वन्तत्वात्तल्प्रत्ययः । अन्यत्र सूतवत्ता प्रजनितता प्रपूर्वात् सूते क्तान्तत्वात्तल्प्रत्ययः । अनलेन अग्निना दात्रा कुबेरेण पुत्रेण चान्वयाद्योगात्प्रकाशित इति तत्प्रकाशितस्य भावस्तत्ता । अतः कारणादेतस्य महारथस्य कुबेर एव दृष्टान्तो निदर्शनं तद्बलेन पुष्पकप्रकृष्टता अनुमीयते अयं महारथः पुष्पकप्रकृष्टो भवितुमर्हति प्रसूतवत्तादिधर्मयोगान्महारथत्वात् कुबेरवदिति अनुमातुं शक्यत्वादित्यर्थः । अतएवानुमानालङ्कारः साध्यसाधननिर्देशस्त्वनुमानमुदीरितम् इति लक्षणात् । रूपहेतुत्वेन तर्कानुमानेन वैलक्षण्यं रूपकस्य प्रसूतवत्तादिप्रकाशितैः तत्प्रकाशितेति श्लिष्टरूपकं द्रष्टव्यम् ॥ २४ ॥

स तद्दृढोऽस्मै हयरत्नमर्पितम्
पुरानुबद्धुं वरुणेन बन्धुताम् ॥ २५ ॥
जवादवारीकृतदूरदृक्पथ-
स्तथाग्नियुग्माय ददे मुदं नयः।
ददद्दिगन्तादरदासतां यथा
तथैव तत्पांशुलकण्ठनालताम् ॥ २६ ॥
दिवस्पतेरादरदर्शिनादरा-
ददौकि यस्तस्मति विश्वकर्मणा।

महेन्द्रमिति। विभ्यः समुद्रः उच्चैःश्रवसा महेन्द्रं प्रतार्य वञ्चयित्वा यद्धयरत्नं मुच्चैःश्रवसोऽपि श्रेष्ठमित्यर्थः। निजेन पत्या स्वामिना वरुणेन अन्वितमकृत तस्मै ददौ इत्यर्थः। पुरा स्वयम्वरात्पूर्वं बन्धुतां बान्धवतम् अनुबद्धुं प्रवर्त्तयितुं वरुणेनार्पितं दत्तं हयरत्नं स भीम तस्मै नलाय ददे दत्तवान् ॥ २५ ॥

जवादिति। अग्नि युग्माय दृष्टहृदियुगलाय दिदृक्षायां दर्शनेच्छायाम् आदरः अस्या तस्य दासतां विधेयतां ददत् अत्यन्तदिदृक्षामेव कुर्वन् यो हयो जवाद्वेगात्तथा तेन प्रकारेण अवारीकृतोऽवाकृतो प्राग दूरीकृत इति यावत् निजलोकृतश्च गम्यते पारावारे परार्वार्चीत्यमरः। स दूरदृक्पथो येन स तथा मुदमग्निं न दधे किन्तु तृष्णामेव वर्धयति अवारि कृतमार्गत्वादिति भावः तथा तेन प्रकारेण तत्तस्य पूर्वोक्ता अवारि करणतष्णा अकारि अहितो. पांशुल. पांशुमान् शुष्कश्च कण्ठनालो यस्य तस्य भावस्तत्तान्दर्शमुदं न दधे कण्ठशोषकारो कथं मुदं दद्यादितिभावः अग्नियुग्मस्य पांशुलकण्ठनालत्वं नाम दूरीकृतधर्मा धर्मप्राप्तत्वञ्च उत्कण्ठाचरितत्वम् अजस्रदर्शनीयवेगोऽयमश्व इति तात्पर्यम् अवारि करणाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेः रतिशयोक्तिः ॥२६॥

दिवस्पतेरिति। दिवस्पतेरिन्द्रस्य दमयन्तीरागिण इति भावः कस्मादपि आदरात् अनुकूलत्वे। आदरदर्शिना आदरेन विश्वकर्मणा देव

तमेकमाणिक्यमयं महोन्नतम्
पतद्ग्रहं ग्राहितवान्नलेन सः ॥ २७ ॥

नलेन ताम्बूलविलासिनोज्झितै-
र्मुखस्य यः पूगकणैर्भृतो न वा ।
इति व्यवेचि स्वमयूखमण्डला-
दुदञ्चदुच्चैररुणाचरणाश्चिरात् ॥ २८ ॥

मयेन भीमं भगवन्तमर्चता
नृपेऽपि पूजा प्रभुनाम्नि या कृता ।
अदत्त भीमोऽपि स नैषधाय ताम्
हरिन्मणेर्भोजनभाजनं महत् ॥ २९ ॥

शिल्पिनः यः पतद्ग्रहः तं भीम मय दरात् अढौकि प्रापितः ढौकते-र्ण्यर्थे यन्नात्कर्मणि लुङ् । तं विश्वकर्मदत्तमेकमाणिक्यमयमेकपद्मरागोपलविकारं महतीं उन्नतिर्यस्य तमत्युन्नतं पतद्गृह्यते अनेनेति ग्रहः पततोग्रहः निष्ठ्यूतताम्बूलभाजनं पतद्ग्राहः पतद्ग्रहः इत्यमरः । विभाषाग्रह इति णप्रत्ययाभावः पक्षे ग्रहवृदनिश्चिगमश्चेति अप्रत्ययः । तं स भीमो नलेन ग्राहितवान् अग्राहयत् नलाय ददावित्यर्थः ॥ २७ ॥

नलेनेति । यः पतद्ग्राहः उदञ्चदुच्चैरुच्छ्रितः उच्चादुन्नतादरुणाद्रक्तवर्णात् स्वमयूखमण्डलाद्धेतोश्चाकणः, ताम्बूलविलासिना ताम्बूलयोगिना नलेनोज्झितैः निष्ठ्यूतैर्मुखस्य सम्बन्धिभिः पूगकणैः क्रमुकशकलैर्भृतः पूर्णो न वेति सन्देह्यौतियोषः चिराद्व्यवेचि विविक्तः निश्चयान्तः सन्देहालङ्कारः ॥ २८ ॥

मयेनेति । भगवन्तं भीममीश्वरम् अर्चता अर्चते भैर्वादिकाङ्गः यकादेशः । मयेन दैत्यशिल्पिना प्रभोर्नायकस्य तस्मिन् प्रभुनाम्नि स्वामिनामधारिणि नृपे भीमे या पूजा कृता स भीमोऽपि हरिन्मणेर्गारुत्मतमणेः सम्बन्धि तन्मय महद्भोजनपात्रं भोजनभाजनं भोजनपात्ररूपान्तां पूजां नैषधाय नलाय ददौ ॥ २९ ॥

छदेऽपि देव छविमस्य बिभ्रतां
न केकिनां सर्पविषं प्रसर्पति।
न नीलकण्ठत्वमधास्यदत्र चेत्
स कालकूटं भगवानभोक्ष्यत॥ ३०॥

विरोध्य दुर्वाससमस्य वल्लभः
स्रजं त्यजन्नस्य किमिन्द्रसिन्धुरः।
अदत्त तस्मै स मदच्छलात् सदा
यमभ्रमातङ्गतयैव वर्षुकम्॥ ३१॥

मदान्मदग्रे भवताथवा भिया
परं दिगन्तादपि यात जीवत।

छद इति। अस्य गारुत्मतभाजनस्य छविं कान्तिं सदा सर्वथैव छदे पक्षे बिभ्रतां केकिनां बर्हिणां सर्पविषं न विसर्पति न व्याप्नोति स भगवानीश्वरोऽपि अत्र गारुत्मतभाजने कालकूटमभोक्ष्यत चेत् भुञ्जीत यदि नीलकण्ठत्वं नाधास्यत् तदभावात्कालकूटविषस्य कण्ठस्थाप्य नीलकण्ठत्वमस्येत्यर्थः। यस्यावयवात् केकिनो निर्विषास्तत्पात्रे भोजने किं वक्तव्यमित्यर्थः॥ ३०॥

विरोध्येति। अभ्रमातङ्गतया मेघरूपगजत्वेन हेतुना मदच्छला-न्मदस्रावनिभात् वर्षुकं वर्षणशीलमिवस्थितम् इति सापह्नवोत्प्रेक्षा। लषपतेत्यादिना उकञ् प्रत्ययः। यमिन्द्रसिन्धुरं स भीमोऽस्मै नलाय अदत्त दत्तवान् स नलस्तत्सिन्धुरो दुर्वाससं विरोध्य विरुध्य अस्य दुर्वाससः सम्बन्धिनीं तद्दत्तामित्यर्थः। स्रजं त्यजन् क्षिपन् इन्द्रसिन्धुर ऐरावत इव दिवः स्वर्गादस्खलत्किम्? स्वदत्तस्रगनादरार्थनिमित्ता दुर्वाससः शापादिव च्युत ऐरावत एवायं किमित्युत्प्रेक्षा॥ ३१॥

मदादिति। यो गजो हे दिक्करिणः। दिग्गजाः! मदान्मदगर्व-स्मदग्रे ममाग्र एव भवत तिष्ठत अथवा भिया दिगन्तादपि परं दूरं

इति स्म यो दिक्करिणः ! स्वकर्णयो-
र्विनाह्व वर्णस्रजमागतैर्जनैः ॥ ३२ ॥
अधत्त बीजं निजकीर्त्तये रदौ
द्विषामकीर्त्त्यै खलु दानविप्रुषः ।
अवः श्रमैः कुम्भकुचां शिरः श्रियम्
मुदे मदखेदवतीमुपास्त यः ॥ ३३ ॥
न तेन वाहेषु विवाहदक्षिणी-
कृतेषु सङ्ख्यानुभवेऽभवत् क्षमः ।
न शातकुम्भेषु न मत्तकुम्भिषु
प्रयत्नवान् कोऽपि न रत्नराशिषु ॥ ३४ ॥

दूराह्वानाद्दोत्तमाः परेत्यमरः । यात गच्छत आवत यथा कथञ्चित्प्रापयानु धारयत इति इत्थं मत्कारस्रजं वर्णपङ्क्तिं विनैव वाग्दृष्टिं मन्त्ररेणेत्यर्थः । किन्तु स्वकर्णयोः आगतागतैर्यातायातैः खेटाभिरेव आहूय ब्रूते स्म वेत्यर्थः गम्योत्प्रेक्षा लट् स्म इति भूते लट् ब्रुवः पञ्चादित्यादिना णलाह्वादेशौ ॥ ३२ ॥

अधत्तेति । यो गजो निजकीर्त्तये तत्प्ररोहायेत्यर्थः । रदौ दन्तावेव बीजमधत्त द्विषामकीर्त्तये तत्प्ररोहाय दानविप्रुषो मदबिन्दूनेव बीजमधत्त कीर्त्त्यकीर्त्त्योः सितासितकारित्वात्सित सितयोरेव दन्तदानयोर्बीजत्वेनोत्प्रेक्षा । किञ्च कुम्भावेव कुचौ यस्याः तां मदेन खेदवतीमिति सात्विकोक्तिः शिरः श्रियं शिरः शोभामेव अवशोः श्रमैः व्यापारैः कर्णतालैरेव व्यजनवातैरिति भावः मुदे हर्षाय उपास्त असेवतेत्युत्प्रेक्षात्रयस्य संसृष्टिः ॥ ३३ ॥

नेति । तेन भीमेन विवाहे दक्षिणीकृतेषु वरायाङ्गीकृते त्वित्यर्थः । वाहेषु वाजिषु विषयवाजि वाहार्वगन्धर्व इत्यमरः । प्रयत्नवानुद्योगवानपि सङ्ख्यानुभवे इयत्तापरिच्छेदे क्षमो नाभवत् शात-कुम्भेषु स्वर्णेषु तपनीयं शातकुम्भमित्यमरः । मत्तकुम्भिषु मदगजेषु

करग्रहे वाम्यमधत्त यस्तयोः
प्रसाद्य भैम्या न च दक्षिणीकृतः।
कृतः पुरस्कृत्य ततो नलेन स
प्रदक्षिणस्तत्क्षणमाशुशुक्षणिः॥ ३५॥
स्थिरा त्वमश्मेव भवेति मन्त्रवा-
गनेऽग्रदाश्मास्य किमाशु तां ह्रिया।

वत्स्वगादिषु न सर्वत्र सङ्ख्यानुभवे सम इत्यनुषङ्गः। विवाहादिषु सङ्ख्या सम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिभेदः॥ ३४॥

करेति। यः आशुशुक्षणिः शोषितुमिच्छतीत्याशुशुक्षणि-रग्निः शिखावानाशुशुक्षणिरित्यमरः। आङ्पूर्वात् शुषेः सन्नन्ता-दाङ्पूर्वाच्छुषे धातोः सन्नन्तादुप्रत्ययः भाषायामपीष्यते। तयोर्भैमी-नलयोः करग्रहे पाणिग्रहे वाम्यं वक्रतां वामभागवर्त्तित्वम् अथच वाम्यं सव्ये प्रतीपञ्चेति विश्वः। अनु वाम्यानन्तरं भैम्या प्रसाद्य प्रसन्नी-कृत्य दक्षिणीकृतश्च दक्षिणभागवर्त्तीकृतश्च दक्षिणः स नलो वामपरः छन्दानुवर्त्तीत्यपि विश्वः। नलेन स आशुशुक्षणिस्तत्क्षणं सपद्य क्षणो यस्मिन् तत्क्षणमिति क्रियाविशेषणं स चासौ क्षणश्चेति तत्पुरुषे वात्यन्तसंयोगे द्वितीया। पुरस्कृत्य अग्रतः कृत्वा च प्रदक्षिणोऽत्यन्ता-नुकूलो दक्षिणभागवर्त्ती च कृतः पूर्वं प्रतिकूलोऽप्यग्नि प्रार्थनया अनु-कूलित इत्येकोऽर्थः अग्निप्रदक्षिणी कृतेत्यादि शास्त्रार्थोऽनुष्ठित इत्य-परार्थः॥ ३५॥

स्थिरेति। अश्मेव स्थिरा भवेति मन्त्र वाक् तां दमयन्तीम्-अश्मास्य आकारं प्रकाश्य सार्थकं शिलावदचला भवेति एवं कृपा हृदीय ह्रिया कोपमाकरणेतुकमन्यदा इवेत्युत्प्रेक्षा आशु सपदि अनेकदृढतां गता उच्चारितमन्त्रस्थित्यादिति भावः। मन्त्रोक्ति पुषा-दिवादाक् नियमश्योरलिङ्गेयं वक्तव्यम्। कोपोपमावं त्यनक्ति

शिला चलेत् प्रेरणया नृणामपि
स्थिरास्तु नाचालि विडौजसापि सा ॥ ३६ ॥
प्रियांशुकग्रन्थिनिबद्धवाससम्
तदा पुरोधा विदधे विदर्भजाम् ।
जगाद विच्छिद्य पटं प्रयास्यतो
नलादविश्वासमिवैष विश्ववित् ॥ ३७ ॥
भ्रुवावलोकाय तदुन्मुखभ्रुवा
निदिश्य पत्याभिदधे विदर्भजा ।

शिला अश्मा नृणां मनुष्याणाम् अपि प्रेरणया चलेत् सा दमयन्ती विडौजसा देवेन्द्रेणापि स्थितेः पतिव्रताकाष्ठायाः नाचालि न चालिता चलेर्ण्यन्तात्कर्मणि लुङ् । अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुकत्वात्काव्यलिङ्गमलङ्कारः ॥ ३६ ॥

प्रियेति । तदा तत्काले विदर्भजां वैदर्भीं प्रियस्य नलस्यांशुके ग्रन्थिना वस्त्रविशेषेण निबद्धवाससं ग्रन्थितांशुकं विदधत् कुर्वन् देशाचारप्राप्तत्वादिति भावः विश्ववित्सर्वज्ञ एष पूर्वोक्तः पुरोधाः गौतमः पटं विच्छिद्य द्वेधा विपाट्य प्रयास्यतः परित्यज्य गमिष्यतो नलादविश्वासं जगादेव व्याजस्यार्थस्यापनार्थं मित्रानयोर्वस्त्राञ्चलद्वयं जगन्थेति उत्प्रेक्षा अत्रारण्यपर्वणि नलोपाख्याने श्लोकः । ततोऽर्धं वाससः छित्त्वा त्यक्त्वा च परं तप !। सुप्तामुत्सृज्य वैदर्भीं प्राद्रवन्नष्टचेतन इति ॥ ३७ ॥

भ्रुवेति । विदर्भजा वैदर्भी भ्रुवावलोकाय ध्रुवमरुन्धतीं च यं दर्शयति शास्त्रात् । तदुन्मुखभ्रुवा भ्रुवाभिमुखा भ्रूर्यस्य तेन पत्या नलेन निर्दिश्य पश्येत्यादि अभिदधे अभिहिता कर्मणि लिट् । किं तदाह अस्य ध्रुवस्य अणिमा अणुत्वम् अजिह्माणी चक्षुः प्रमाणको न स्यात्किञ्चनुपा न लक्ष्यते किमित्यर्थः । तथापि चक्षुषा अणुतावगमेऽपि आगमोदितो ज्योतिःशास्त्रोक्तो महिमा महत्त्वं तथ्यः प्रामाणिकः अणुत्वपाहि

किमस्य न स्यादणिमाणिमाधिक-
स्तथापि तथ्यो महिमाऽऽगमोदितः ॥ ३८ ॥

धवेन सादर्शि वधूररुन्धतीम्
सतीमिमां पश्य गतामिवाणुताम् ।
कृतस्य पूर्वं हृदि भूपतेः कृते
तृणीकृतस्वर्गपतेर्जनादिति ॥ ३९ ॥

प्रसूनता तत्करपल्लवस्थिते-
रुडुच्छविव्योम्नि विहारिभिः पथि ।
मुखाऽमराणामनले रदावले-
रभाजि लाजैरनयोज्झितैर्द्युतिः ॥ ४० ॥

मत्यत्वस्य दूरत्वदोषदुष्करत्वेन दुर्ज्ञत्वादिति भावः महदपि दूरादणु प्रतीयत इति प्रसिद्धम् ॥ ३८ ॥

धवेनेति । पूर्वं विवाहात्प्रागेव हृदि कृतस्य पतित्वेन मनसि निश्चितस्य भूपतेः स्वस्य नलस्य कृते तदर्थमित्यर्थः । तादर्थ्येऽव्ययं तृणीकृतस्वर्गपतेरगणितमहेन्द्राज्जनात्स्वतः पञ्चमी विभक्त इति पञ्चमी । अणुतां सूक्ष्मतां पातिव्रत्यगुणेन न्यूनताम् गतामिव स्थितां सतीं साध्वीमरुन्धतीं सा वधूर्नवोढा भैमी धवेन भर्त्रा नलेन इमां पश्येत्युक्त्वा इतिशेषः अदर्शि दृशेर्ण्यन्तादात्मनेपदिनः कर्मणि क्तः । अभिवादिदृशोरात्मनेपद इति वाच्यम् अणि कर्मत्वं णयन्ते कर्तुश्च कर्मण इति अनभिहितकर्मत्वं वोढव्यस्यानित्वात्तृणीकृतान्तःपुरः स्वात्मत्वं दुष्करमित्युक्तम् अरुन्धत्या सङ्कुचितत्वमिति भावः ॥ ३९ ॥

प्रसूनेति । तत्करपल्लवस्थितेः कौमार्थं तस्याः पाणिपल्लवघृतेरित्यर्थः । लाजैः भ्रष्टशालिभिः परिवापापरपर्यायैः लाजाः पुंभूम्नि परिवापक इति वैजयन्ती । प्रसूनता पुष्पत्वमभाजि तत्संबन्धात्प्राप्तमित्यर्थः । भजतेः कर्मणि लुङ् । अथानया वध्वा उज्झितैस्त्यक्तैरनय

तया प्रतिष्ठाहुतिधूमपद्धति-
र्गता कपोले मृगनाभिशोभिताम् ।
ययौ दृशोरञ्जनतां श्रुतौ श्रिता
तमाललीलामलिकेऽलकायिता ॥ ४१ ॥

अपह्नुतः स्वेदभरः करे तयो-
स्त्रपाजुषोर्दानजलैर्मिलन्मुहुः ।
दृशोरपि प्रस्तुतमश्रु सात्त्विकम्
घनैः समाधीयत धूमलङ्घनैः ॥ ४२ ॥

पथि मध्ये मार्गे व्योमचारिभिः खेचरैः सङ्क्रन्दनचक्षुषि नेत्रलकान्तिरभाजि तथा अमराणां मुखे आस्यभूते अनले अग्निमुखा वै देवा इति श्रुतेः । इदावलेर्दन्तपङ्क्तौ द्युतिरभाजि अन्नैकस्य लाजद्रव्यस्य क्रमेण करपल्लवाद्य-नेकाधारसम्बन्धकथनात्पर्यायभेदस्तावत् तदुपमेन लाजानां प्रसूनदन्त-ग्रोम्नश्च दृश्याविदर्शनाभेद इत्यनयो रङ्गाङ्गिभावेन सङ्करः ॥ ४० ॥

तयेति । तया वध्वा प्रतिज्ञा स्वीकृता आहुतेर्लाजाहुते धूमपद्धति धूमरेखा कपोले मृगनाभिः कस्तूरीव शोभन इति तच्छोभिताङ्कता दृशो रञ्जनतां ययौ तत्कादृश्यं गतेत्यर्थः । श्रुतौ श्रोत्रे तमालस्य तमा-लावतंसस्य लीलां विलासं श्रिता अलिके ललाटे ललाटं भालिकं गोधी-त्यमरः । अलकायिता अलकवदाचरिता उपमानादाचारेक्यन्तात्क-र्मणि क्तः । अत्राप्येकस्यैव धूमस्य क्रमादनेकाधारसम्बन्धात् पर्यायस्तदुप-जीविना मुत्तरेषां यथायोग मुपमा निदर्शनाभ्यां पूर्ववत्सङ्करः ॥ ४१ ॥

अथानयोस्त्रिभिः सात्त्विकोदयमाह अपह्नुत इत्यादिना । त्रपा-जुषोर्लज्जाभाजोस्तयोर्वधूवरयोः करे स्वेदभरो मुहुर्दानजलैः स्तत्कालो-चितदानजलैर्मिलन्मिश्रीभवन्नपह्नुतः आच्छादितः दृशो रक्ष्णोः प्रस्तुतं गलितं सात्त्विकं सत्वसमुद्भूत मश्रु घनैः सान्द्रैर्धूमलङ्घनैः धूमपीडनैः

बहूनि भीमस्य वसूनि दक्षिणाम्
प्रयच्छतः सत्त्वमवेक्ष्य तत्क्षणम्।
जनेषु रोमाञ्चमितेषु मिश्रताम्
ययुस्तयोः कण्टककुड्मलश्रियः॥ ४३ ॥

बभूव न स्तम्भविजित्वरी तयोः
श्रुतिक्रियारम्भपरम्परात्वरा।
न कम्पसम्पत्तिमलम्भदग्रतः
स्थितोऽपि वह्निः समिधा समेधितः॥ ४४ ॥

समाधीयत समाच्छितः परिष्कृतः इति यावत्। अत्र स्वेदाश्रुणोः सहजयोरागन्तुकदानोदकधर्माभ्यां तिरोधानान्मीलनभेदः। मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनमिति लक्षणात्॥ ४२ ॥

बहूनीति। तयोर्वधूवरयोः कण्टककुड्मलश्रियः पुलकाङ्कुरसम्पदः बहूनि वसूनि धनान्येव दक्षिणां तत्कालदानं प्रयच्छतो ददतो भीमस्य सत्त्वमुत्साहमवेक्ष्य तत्क्षणं तत्काले अत्यन्तसंयोगे द्वितीया। रोमाञ्चमितेषु गतेषु जनेषु मिश्रतां मेलनं ययुस्तेन रोमाञ्चे सति तिरोहिता इत्यर्थः। पूर्ववदलङ्कारः॥ ४३ ॥

बभूवेति। तयोर्वधूवरयोः श्रुतिक्रियाणां श्रुत्युक्तकर्मणामारम्भपरम्परायां त्वरा प्रयोगाविच्छेदत्वरा सम्भ्रमः स्तम्भस्य निष्क्रियाङ्गत्वलक्षणस्य सात्त्विकस्य विजित्वरी विजेत्री इण्नशजिसर्तिभ्यः क्वरप्। टिड्ढाणञित्यादिना ङीप्। न बभूव नापक्रान्तमेवेत्यर्थः। समिधा इन्धनेन समेधितः प्रदीपितः अग्रतः स्थितो वह्निरपि कम्पसम्पत्तिं वेपथुकं नाप स्वविरोधिबाधकादित्यर्थः। गाढानुरागविकाराणां दुर्वारवेगत्वादिति भावः। अत्र सर्वत्वरासमिद्वर्द्धकप्रकारसामग्र्येऽपि स्तम्भकम्पनिवृत्तिरूपकार्यानुत्पत्ते विशेषोक्तिरलङ्कारः। तत्र मध्या महत्त्वा विशेषोक्तिरित्याख्यानात्॥ ४४ ॥

दमस्वसुः पाणिममुष्य गृह्णतः
पुरोधसा संविदधेतरां विधेः ।
महर्षिणेवाङ्गिरसेन साङ्गता
पुलोमजामुद्वहतः शतक्रतोः ॥ ४५ ॥

स कौतुकागारमगात् पुरन्ध्रिभिः
सहस्वरन्ध्रीकृतमीक्षितुं ततः ।
अधात् सहस्राक्षतनुत्रमित्रता-
मधिष्ठितं यत् खलु जिष्णुनामुना ॥ ४६ ॥

तथागताया निरगोपि नो ह्रिया
स सख्यगालीकि परस्परक्रिया ।

दमस्वसुरिति । दमस्वसुः पाणिं गृह्णतः तामुद्वहत इत्यर्थः । अमुष्य नलस्य पुलोमजां शचीम् उद्वहतः शतक्रतोरिन्द्रस्य महर्षिणा आङ्गिरसेन बृहस्पतिना पुरोधसा गौतमेन विधेरनुष्ठानस्य साङ्गता साङ्गुण्यं संविदधेतरां अतिशयेन सम्पादिता तिङव्ययघादाम्-प्रत्ययः ॥ ४५ ॥

स इति । ततो होमानन्तरं स नलो वीक्षितुं सर्वेषां विस्मयवीक्षणार्थं सहस्वरन्ध्रीकृतं अनेकगवाक्षीकृतं बहुगवाक्षावभूत तद्भावेभिः । कौतुकागारं मङ्गलसद्म पुरन्ध्रिभिः सह इद्धो यनेति ज्ञापकात्सहार्थयोगे सहार्थे तृतीया । अगात् प्राविशत् यदागारं जिष्णुना जयशीलेन इन्द्रेण चामुना नलेनाधिष्ठितं तं सहस्राक्षतनुत्र मित्रतामिन्द्रकवच-तुल्यतामधात् ॥ ४६ ॥

तथेति । अथ वरेण वध्वा च यथाविधि यथा शास्त्रं त्र्यह निरिदनम् अत्यन्त संयोगे द्वितीया । तद्धितार्थेत्यादिना समाहारे द्विगुः राजाहः सखिभ्य इत्य द्विगुरेकवचनं रात्राह्नाहाः पुंसि इति पुंलिङ्गता । अथ-

विमुक्तसम्भोगमथापि सस्पृहम्
वरेण वध्वा च यथाविधि त्र्यहम् ॥ ४७ ॥
कटाक्षणाज्जन्यजनैर्निजप्रजाः
क्वचित् परीहासमचीकरत्कराम्।
धराप्सरोभिर्वरयात्रयागता-
नभोजयद्भोजकुलाङ्कुरः क्वचित् ॥ ४८ ॥
स कश्चिदूचे रचयन् स्मितं मनो-
पक्षारमसाङ्ग ! रुचेर्यथोचितम्।

नाया बुभुक्षा तु क्षुधेति पिपासा थॆप्सित निपातनात्साधु। क्रिया न निरोधेन तावत्पर्याप्य सम्भोगि इत्यर्थः। परस्परक्रिया अन्योन्यचेष्टा सम्यग्येक्ष नालोकि न शोभिता तथा विमुक्तसम्भोगं यथा तथा सस्पृहं साभिलाषमेव क्षणोऽपि शयितं भावे क्तः। यथाह आपस्तम्बः त्रिरात्रं सभयोरधःशय्या ब्रह्मचर्यं सक्षारलवणवर्जितं च तयोः शय्यामन्तरेण दण्डोपनिषत्वाससा सूत्रेण परिवीतस्तिष्ठतीति ॥ ४७ ॥

कटाक्षणादिति। भोजकुलाङ्कुरो भोजकुलकुमारो दमः निजाः प्रजाः स्वजनान् प्रजा स्यात्सन्ततौ जने इत्यमरः। कटाक्षणात्कटाक्षकरणात्तत्-क्षित इत्यर्थः कटाक्षयते तत्करोतीति णिजन्ताद्भावे ल्युट्। जन्यजनैः सह जन्याः स्निग्धाः वरस्येत्यमरः। परीहास सद्र्यमिति याचत इव केला परीहास इत्यमरः। उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः। क्वचित्प्र-देशे अचीकरत्कारयामास करोतेर्णौ चङ् सन्वद्भावादभ्या-सस्य दीर्घः तिङ् चाटाम् प्रत्ययः। तदा क्वचित् प्रदेशान्तरे वरस्य यात्रया सह आगतान् जनान् धराप्सरोभिः क्षितिसुन्दरीभिः अभोज-यद्भोजयामास तत्कार्ये परिहासकरणभोजयोरिति भावः। निगरण-चलनार्थेभ्यश्चेति परस्मैपदं गति बुद्धीत्यादिना अणिकर्तुः कर्मत्वम् ॥४८॥

पिपासतः काञ्चन सर्वतोमुखम्
तवार्पयन्तामपि काममोदनम् ॥ ४९ ॥
सुखेन तेऽत्रोपविशत्वसाविति
प्रयाच्य दृष्टानुमतिं खलाहृत् ।
वराङ्गभागः स्वमुखं मतोऽमुना
स हि स्फुटं येन किलोपविश्यते ॥ ५० ॥

तात्कालिकमेव परीहासं बहुधा बहुधा वर्णयति स इत्यादि । स दृष्टः कश्चिज्जन्यजनमूचे उवाच किमिति अङ्ग ! भो ! अत्र प्रदेशे पिपासतः उन्मृषतः पिबतेः सनन्तात् शतरि ङीप् । सर्वतोमुखम् उदकं पुष्करं सर्वतोमुखमित्यमरः । यथा तव काञ्चन स्त्रियः इत्येतृषाया यथोचितं यथार्हन्तेमनस्य निश्चानापर स्वस्य चोष्यद्रवस्य उपहारं समर्पणं स्त्रेमनस्य निदानमित्यमरः । रचयन्तु यथा कुर्वन्तु काममोदनमसं न चार्पयन्तां प्रयच्छन्त्विति अस्य पिपासतो मुखपाने कौतुकरचेः स्वाङ्गसौन्दर्यादिहेतोः मनो अपहरतीति मनोऽपहारं मनोहरं कर्मण्यण् । सुखमास्यं सर्वतः समन्तादर्पयन्तां कामस्य मोदनं समर्पणं रचयन्तु रमयन्तामिति चेत्यर्थः । इत्युचे इत्यन्वयः अत्रोभयोरप्यर्थयोर्विवक्षितत्वेन प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ ४९ ॥

सुखेनेति । हे जन्य ! अत्र पङ्क्त्यावसौ ते तव सुखेन स्वास्थ्येन वक्त्रेण च अधिकरणे साधनत्वनिर्देशः सुख इत्यर्थः । उपविशत्विति प्रार्थनायां लोट् । प्रयाच्य प्रार्थ्य दृष्टानुमतिं कृताङ्गीकारं जन्यस्वमा काचिद्दूती अपहसत् परिजहास किमिति अमुना जन्येन स वराङ्गभागो अस्याः गोप्यप्रदेशः वराङ्गं मूर्ध गुह्ययोरित्यमरः । स्फुटं यथा तथा स्वमुखं मतो हि स्ववक्त्रत्वेन अनुमत इत्यर्थः । येन वराङ्गेन उपविश्यते किल सुखोपवेशनाङ्गीकारो नान्तरीयकः सिद्ध इति भावः ॥ ५० ॥

पुनस्तमुत्थाप्य निजासितेर्वदा-
ऽहसच्च पश्चात् कृतपुच्छतत्प्रदा ॥ ५३ ॥
स्वयं कथाभिर्वरपक्षसुभ्रुवः
स्थिरीकृतायाः पदयुग्ममन्तरा ।
परेण पश्चान्निभृतं न्यधापयत्
ददर्श चादर्शतलं हसन् खलः ॥ ५४ ॥
अथोपचारोद्धुरचारुलोचना-
विलासनिर्वासितधैर्यसम्पदः ।

पुरस्थेति। खला काचिद्धूर्त्ता हसीमासनं मुनीनामासनं हसीत्यमरः। पुरस्थलात् पुरोभागस्थलमुच्चं यथा तथा अदाहृत्तवान् ददातेर्लुङि गातिस्थादिना सिचो लुक्। तत्र तस्यां ऋजुर्मुग्धो वरस्य सम्बन्धि द्विजः उपाविशत् उपविष्टः निजासितेः स्वासनस्य वदतीति अज्ञानात्कृतमिति वदतीत्यर्थः। पचाद्यच् वदा वदो वदावदो वक्ता इत्यमरः। पुनस्तं द्विजं उत्थाप्य पश्चात् कृतपुच्छां तां हसीं प्रददातीति तत्प्रदा सती प्रदेति प्रपूर्वाद्ददातेः कर्मोपपदे कप्रत्ययः। अहसत् जहास च पुच्छस्य पुरोपस्थाने द्विजस्य प्रकाशमेहनत्वप्रतीतेः पृष्ठत उपस्थाने पशुत्वप्रतीतेश्चेति भावः। कूर्मादिपीठसृष्टौ पुच्छव्यपदेशः ॥ ५२ ॥

स्वयमिति। खलो धूर्त्तः स्वयं स्वेन कथाभिरिष्टालापैः स्थिरीकृतायाः निश्चलीकृतायाः वरपक्षे सुभ्रुवः स्त्रियाः पदयुग्मं अन्तरा पादयुगलस्यान्तराले अन्तरान्तरेण युक्ते इति द्वितीया। परेण पुरुषान्तरेण पश्चात् पृष्ठतो निगूढं यथा तथा आदर्शतलं दर्पणस्वरूपं न्यधापयत् निधापयामास स हसन् ददर्श च वराङ्गप्रतिबिम्बदर्शनाद्धासः ॥ ५४ ॥

अथेति। अथोपचारेषु उद्धुरा उद्गूढभारा तत्परा इत्यर्थः। ऋक्पूरित्यादिना समासान्तः। तासां चारुलोचनानां स्त्रीणां विलासैः साधने

स्मरस्य शिल्पं वरवर्गविक्रिया-
विलोककं लोकमहासयन्मुहुः ॥ ५५ ॥

तिरोवलद्वक्रसरोजनालया
स्मिते स्मितं यत् खलु यूनि बालया ।
तया तदीये हृदये निखाय तद्-
व्यधीयतामुष्य खलु त्रिवेधिता ॥ ५६ ॥

कृतं यदन्यत्करणोचितत्यजा
दिदृक्षु चक्षुर्यदवारि बालया ।
हृदस्तदीयस्य तदेव कामुके
जगाद वार्त्तामखिलां खले खलु ॥ ५७ ॥

---

निर्वार्णिता निष्कासिता धैर्यसम्पत्त्येन तस्य स्मरस्य शिल्पं स्फूर्तिः स्मरकृता इत्यर्थः । वरवर्गस्य जन्यजनस्य विक्रिया वक्ष्यमाणविकाराः कर्त्र्यः विलोककं द्रष्टारं जनं मुहुरहासयन् परिचारिकाविलासदर्शनादेव जन्यजनस्य जनहासकरः स्मरविकारोऽजात इत्यर्थः ॥ ५५ ॥

तिर इति । तिरोवलत् तिर्यग्वलत् वक्रसरोजनालं कण्ठो यस्यास्तया वलितकन्धरया बालया युवत्या यूनि तरुणे स्मिते स्मितवति सति कर्त्तरि क्तः । यत् स्मितं किल स्मितं खलु भावे क्तः, तया बालया तदीये युवसम्बन्धिनि हृदये तस्मिन् तस्मिन् गाढं प्रवेश्य असमञ्जसमनभिमुख्य यत्र्यं तद्वेधिता तद्वेधित्वं व्यधीयत विहिता तत् स्मितं तस्य तिरश्चीन-वक्त्रवधो स्मरोऽजात इत्यर्थः ॥ ५६ ॥

कृतमिति । करणोचितं क्रियार्हं अन्यज्जहातीति तत्त्यजा तत् कर्त्तव्य-मकुर्वतेत्यर्थः । त्यजेः क्विप् । तादृश्या बालया तरुण्या अन्यत्कर्त्तव्यं यत्कृतं दिदृक्षु दर्शनोत्सुकं चक्षुः स्वहृदि यदवारि वारितं तदेव कार्य-करणं दिदृक्षितादर्शनद्वयमेव तदीयस्य वार्त्तामखिलां हृदो हृदय-स्याखिलां वार्त्तां वृत्तान्तं खले धूर्त्ते कामुके जगाद खलु तस्मै जगादे-

जलं ददत्याः कलितानतेर्मुखम्
व्यवस्यता साहसिकेन चुम्बितुम् ।
पदे पतद्वारिणि मन्दपाणिना
प्रतीक्षितोऽन्यैस्तृणवस्तुनस्तृणः ॥ ५८ ॥

युवानमालोक्य विदग्धशीलया
स्वपाणिपाथोरुहनालनिर्मितः ।
श्लथोऽपि सख्या परिधिः कलानिधौ
दधावहो तं प्रति गाढबन्धताम् ॥ ५९ ॥

त्यर्थः । तत्र क्रियाद्वयस्य सान्द्ररागगारवस्य मदर्शनोत्सुकं चक्षुः स्वदृष्टिः यद्वारि प्रणयकोपस्य सूचितेत्यर्थः ॥ ५७ ॥

जलमिति । जलं ददत्या आवर्जयन्त्या अतएव कलिता आनतिर्यया तस्या नम्रमुख्या इत्यर्थः । मुखं चुम्बितुं व्यवस्यता उद्युञ्जानेन अवस्यतेर्लटः शत्रादेशः । अतएव मन्दपाणिना अयहस्तेन सहसा बलात्कारेण वर्त्तते यस्तेन सह साहसिकेन केनचित् ओजःसहोऽम्भसां वर्त्तत इति ठक् । पदे स्त्रीचरणे पतद्वारि यस्मिन् तस्मिन् सति चुम्बनव्यसनाज्जलपानमप्यविगणय्येत्यर्थः । अन्येषां तृणवत्तुच्छः परहस्तवत्तुच्छमयः प्रतीक्षितः आकाङ्क्षित इत्यर्थः । कामान्धाः किं न कुर्व्वन्तीति भावः ॥ ५८ ॥

युवानमिति । विदग्धशीलया प्रगल्भस्वभावया कयाचित् युवानमालोक्य कलानिधौ कलाशिल्पाकरे चन्द्रे कला शिल्पे विधोरंश इत्यभिधानात् । सख्या स्वपाणिपाथोरुहनालाभ्यां निजभुजाभ्यां निर्मितः निजभावसूचनार्थं कृतः परिधिः परिवेषरूपत्वात् परिरम्भः परिवेषः चन्द्रे तत्सम्भावनुयेति भावः । श्लथोऽपि सन् तं युवानं प्रति तत्कालमित्यर्थः । गाढबन्धतां दधौ गाढालिङ्गनसुखं तस्मादभूदित्यर्थः । अहो कार्यकारणयोरस्याहितकार्य्योत्पादात् अ पथ्यं अतएवाद्भुतमिति विष-

नतभ्रुवः स्वच्छनखानुबिम्बन-
छलेन कोऽपि स्फुटकम्पकण्टकः ।
पयो ददत्याश्चरणे भयं नतः
स्मरस्य बाणैः शरणे न्यविक्षत ॥ ६० ॥

मुखं यदस्मायि विभज्य सुभ्रुवा
ह्रियं यदालम्ब्य नतास्यमासितम् ।
अवादि वा यन्मृदु गद्गदं युवा
तदेव जग्राह तदाप्तिलग्नकम् ॥ ६१ ॥

मालङ्काराः संसृष्टाः कार्य्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः । विरुद्धकार्य्यस्योत्पत्तिरिति च लक्षणात् । अत्र रतिरङ्गस्योक्तिः चमत्कृतापि प्रियपक्षां विविधविभ्रम तनुता । भावादङ्गगतं विपुमाविकृति कुर्वति श्रुते ॥ ५८ ॥

नतेति । स्मरस्य बाणैर्भयं गतः अतएव स्फुटौ कम्पकण्टकौ वेपथुरोमाञ्चौ सात्त्विकौ शृङ्गाररसात्त्विकौ च यस्य सः रोमाञ्चेऽपि च कण्टक इत्यमरः । कोऽपि युवा पयो ददत्या नतभ्रुवः स्त्रियः स्वच्छनखेष्वनुबिम्बनच्छलेन प्रतिबिम्बव्याजेन चरणे पाद एव शरणे रक्षितरि न्यविक्षत निविष्ट इति सापह्नवोत्प्रेक्षा व्यञ्जकाप्रयोगाद् गम्या नेर्विश इति लङि तङ् इगुपधादनिटः इति क्सादेशः ॥ ६० ॥

मुखमिति । सुभ्रुवा कयाचिद्योषिता मुखं विभज्य दृष्टीकृत्य किञ्चिद्विवृत्येत्यर्थः । यदस्मायि विस्मितं स्मयतेर्भावे लुङि चिणि वृद्ध्यादेशः, ह्रियमालम्ब्य च नतास्यं नम्रमुखं यथा तथा आसितम् आसेर्भावे क्तः । मृदु गद्गदं अवादि वा उदितम् वदेः कर्मणि लुङ् । युवा तदेव तत्त्रितयमेव तदाप्तौ तस्याः प्राप्तौ लग्नकं प्रतिभुवं जग्राह गाढानुरागानुभावत्वात् तस्येति भावः ॥ ६१ ॥

विलोक्य यूना व्यजनं विधुन्वती-
मवाप्तसत्त्वेन भृशं प्रसिष्विदे ।
उदस्तकण्ठेन नृपाङ्गनाटिना
विजित्य लज्जां ददृशे तदाननम् ॥ ६२ ॥

स तत्कुचस्पृष्टकचेष्टदोर्लता-
चलद्दलाभव्यजनानिलाकुलः ।
अवाप नानानलनालशृङ्खला-
निबद्धनीडोद्भवविभ्रमं युवा ॥ ६३ ॥

विलोक्येति । व्यजनं तालवृन्तकं विधुन्वतीं चालयन्तीं काञ्चिद्विलोक्य अवाप्तसत्त्वेन उद्रिक्तसत्त्वगुणेन यूना भृशं प्रसिष्विदे स्विन्नं सञ्जातसात्त्विकोऽभूदित्यर्थः । स्विद्यतेर्भावे लिट् । नृपाङ्गनाटिना नाटकेन उदस्तकण्ठेन उदग्रीवेण सता तेन लज्जां विजित्य विहायेत्यर्थः । तदाननं तस्याः आननं ददृशे दृष्टं व्यजनपवनापेक्षयेति भावः । दृशेः कर्मणि लिट् । अत्रागन्तुकेन घर्मखेदेन सहजसात्त्विकस्वेदेन ग्रहणान्मीलनालङ्कारः । मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनमिति लक्षणात् ॥ ६२ ॥

स इति । स प्रयोक्ता युवा तस्या व्यजनकर्त्र्याः कुचयोः स्पृष्टमेव स्पृष्टकं घर्षणं तदेव चेष्टा यस्याः तस्याः दोर्लतायाश्चलद्दल इवाभातीति तदाभं इत्युत्प्रेक्षा लतायाः पत्रेण भवितव्यमिति भाव । तस्य व्यजनस्यानिलेन आकुलः सम्भ्रान्तः सन् तत्कुचस्पृष्टवाहस्पर्शाहेन किञ्चित् । नानानलनालो नानाविधलक्षणकाष्ठ एव शृङ्खला निगडस्तया निबद्धस्य नीडोद्भवस्य पक्षिणो विभ्रमं विलासं अवाप उपरि उद्धार्यमाण बालव्यजनवर्त्तिसुखनिश्चलाङ्गः पञ्जरबद्धपक्षीव तद्भावित्यर्थः । नीडोद्भवा गरुत्मन्तः इत्यमरः ॥ ६३ ॥

आवक्कटा कापि कटाक्षणस्य सा
तथैव भङ्गी वचनस्य काचन।
यया युवभ्यामनुनाथने मिथः
कयोरपि दूतस्य न शेषितः श्रमः॥ ६४॥
पपौ न कश्चित् क्षणमास्यमीलितम्
जलस्य गण्डूषमुदीतसम्मदः।
चुचुम्ब तत्र प्रतिबिम्बितं मुखम्
पुरः स्फुरन्त्याः स्मरकार्मुकभ्रुवः॥ ६५॥
हरिन्मणेर्भोजनभाजनेऽर्पिते
गताः प्रकोपं किल वारयात्रिकाः।

आवक्कटेति। सा तात्कालिकी रौचवाच्या कटाक्षणस्य कटाक्षोपयोगस्य तत्करोतीति गयन्ता कृट्। आवक्कटा भङ्गी तथैव वचनस्य काचनभङ्गी जातेति विशेषः। यया कटाक्षवचनभङ्ग्या युवभ्यां युवत्या यूना च च पुमान् स्त्रियेत्येकशेषः। मिथोऽनुनाथने परस्परप्रार्थने नाथतेर्याचार्थत्वाल्ल्युट्। कयोरप्यन्यो दूतस्य श्रमः प्रयासो न शेषितः स्वयमेव तत्कार्यकारित्वान्नावशिष्ट इत्यर्थः॥ ६४॥

पपाविति। उदीतसम्मदः उत्पन्नकौतुकः कश्चिद्युवा पुरः स्फुरन्त्याः पुरोवर्त्तिन्याः स्मरस्य कार्मुके कार्मुकभूते भ्रुवौ यस्याः तस्यास्तरुण्या आस्येन मीलितं मिश्रितं सङ्क्रान्तं प्रतिबिम्बं जलस्य गण्डूषं गण्डूषितजलमित्यर्थः तत्र गण्डूषपानाय मुखसंयुक्ता च चिरधृतमिति दृष्टव्यम् अन्यथा प्रतिबिम्बादिकार्यायोगादिति भावः। क्षणं क्षणमात्रं न पपौ किन्तु तत्र जले प्रतिबिम्बितं मुखं चुचुम्ब॥ ६५॥

हरिदिति। हरिन्मणेर्मरकतोपलस्य सम्बन्धिनि तस्मिन् भोजनभाजने भोजनपात्रे अर्पिते सति प्रकोपमतिरोषयुक्ताः पत्रभाजन भा-

इदं न शाकैः प्रवितीर्णमस्ति व-
स्त्विषेदमेवं हरितेति बोधिताः ॥ ६६ ॥
ध्रुवं विनीतः स्मितपूर्ववाग् युवा
किमप्यपृच्छन्न विलोकयन्मुखम् ।
स्थितां पुरः स्फाटिककुट्टिमे वधूम्
तदङ्घ्रियुग्मावनिमध्यबद्धदृक् ॥ ६७ ॥
अमी लसद्बाष्पमखण्डिताखिलम्
वियुक्तमन्यान्यमयुक्तमार्दवम् ।

न्येति भावः । वरयात्रा प्रयोजनमेषामस्तीति वारयात्रिकाः वरेण सह भोक्तारः प्रयोजनमिति ठक् । इदं वो युष्माकं प्रवितीर्णं दत्तं भाजनं शाकैः शाकतरुपत्रैः शाके पृथक्छदाविति वैजयन्ती । अतद्भूतं नास्ति न भवति किन्तु हरिता हरितया पालाशो हरितो हरिदित्यमरः । त्विषा स्वकान्त्या एव मयं वा भ्रान्तिः कथमिति बोधिताः । अत्र कल्पितसादृश्यान्मरकतभाजनेषु पत्रभाजनभ्रान्तिनिबन्धनाद्भ्रान्तिमदलङ्कारः ॥ ६६ ॥

ध्रुवमिति । युवा कोऽपि तरुणः पुरोऽग्रे स्फाटिके स्फटिकमये कुट्टिमे निबद्धभूमौ स्थितां वधूं तस्याङ्घ्रियुग्मस्य अवनिमध्ये अन्तरालभूमध्ये बद्धदृग्दत्तदृष्टिः सन् तत्सङ्क्रान्ततद्वराङ्गप्रतिविम्बाकृष्टः सन्नित्यर्थः । मुखं न विलोकयन् न पश्यन् नञर्थस्य नशब्दस्य सुप्सुपेति समासः । ध्रुवं मन्ये विनीतः साधुः किल स्मितपूर्वा वाग्यस्य स सन् किमपि यत्किञ्चिदपृच्छत् अत्र यूनस्त्रीसम्भाषणे पादावलोकनेन मुखावलोकनादिति धर्मयोगाद्विनीतत्वोत्प्रेक्षा ॥ ६७ ॥

अमी इति । अमी जना जन्यजना लसन् बाष्पो यस्य तमखण्डितमखिलं स्वरूपं यस्य तदखण्डिताखिलमित्यर्थः । अन्योन्यं वियुक्तमसंश्लिष्टं

रसोत्तरं गौरमपीवरं रसा-
दभुञ्जतामोदनमोदनं जनाः ॥ ६८ ॥

वयोवशास्तोकविकस्वरस्तनीम्
तिरस्तिरश्चक्षति सुन्दरे दृशा ।
स्वयं किल स्रस्तमुरस्यमम्बरम्
गुरुस्तनी ह्रीणतराऽपराऽऽदधे ॥ ६९ ॥

यदादिहेतुः सुरभिः समुद्भवे
भवेत्तदाज्यं सुरभि ध्रुवं ततः ।
वधूभिरेभ्यः प्रवितीर्य्य पायसम्
तदोघकुल्यातटसैकतं कृतम् ॥ ७० ॥

तथाप्यसूक्ष्ममार्दवमकठिनं रसोत्तरं स्वादुमयिष्ठं गौरं शुभ्रमपीवरमस्थूलं आमोदनमन्नमभुञ्जत मार्थकविशेषत्वात्परिकरः ॥ ६८ ॥

वय इति । सुन्दरे रूपसम्पन्ने पुंसि वयोवशेन स्तोकविकस्वरस्तनीं दिने दिने किञ्चित्किञ्चिद्वर्द्धमानकुचां काञ्चित् तिरस्तिरोदृशा तिर्य्यग्दृष्ट्या चक्षति पश्यति सति अपरा पृथुस्तनी स्त्री स्वयं किल वृथैवेति भावः । अतिशयेन ह्रीणा लज्जिता ह्रीणतरा सती ह्रीधातोः क्तान्तात्तरप् तुदविदेत्यादिना पक्षे निष्ठानत्वम् ... इति पुंवद्भावः । स्रस्तमुरस्यमम्बरमुत्तरीयमादधे यथा स्थानं निदधे कैमुत्यन्यायदर्शनसम्भवनाभिमानादिति भावः ॥ ६९ ॥

यदिति । यद्यस्मात् कारणात् समुद्भवे उत्पत्तौ सुरभिर्गौः सुगन्धश्च सुरभिर्वाच्यवत् सौम्ये सुगन्धौ स्त्रीगवोरपीति यादवः । आदिहेतुर्मूलकारणं ततः कारणाद् यदाज्यं सुरभि सुगन्धि भवेत् सुरभिस्तस्य सुरभिजत्वं युक्तमिति भावः । ध्रुवमित्युत्प्रेक्षायां वधूभिः परिवेषिकाभिः एभ्यो जन्यजनेभ्यः पयसि संस्कृतं पायसं परमान्नं पायसमित्यमरः ।

यद्यप्यपीता वसुधालयैः सुधा
तदप्यदः स्वादु ततोऽनुमीयते ।
अपि क्रतूपर्बुधदग्धगन्धिने
स्पृहां यदस्मै दधते सुधान्धसः ॥ ७१ ॥

अबोधि नो ह्रीनिभृतं मदिङ्गितम्
प्रतीत्य वा नादृतवत्यसाविति ।
लुनाति यूनः स्म धियं कियद्गता
निवृत्य बालादरदर्शनेषुणा ॥ ७२ ॥

मत्वर्थे भिक्षादिभ्य इत्यण् प्रत्ययः । प्रवितीर्य दत्त्वा तस्य सुरभ्यान्धसः ओघः प्रवाहः स एव कुल्या कृत्रिमसरित् तस्याः तटे सैकतं सिकतामय पुलिनं कर्तुमिति रूपकं देवे लुचचौ चिण् प्रत्ययः ॥ ७० ॥

यद्यपीति । यदपि यद्यपि सुधा वसुधालयैः भूनिलयैरपि अपीता न पीता तथाप्यदः आज्यं ततः सुधातोऽपि स्वादुनुमीयते यतः सुधैव अन्धोऽन्नं येषां ते सुधान्धसो देव्यः क्रतूपर्बुधदग्धगन्धिने यज्ञाग्निदग्ध गन्धवति अस्मै आज्याय स्पृहामिच्छां दधते स्पृहेरीप्सित इति सम्प्रदान-त्वाच्चतुर्थी । अस्माकमुभयानुभवाभावेऽपि तद्गतप्रवृत्तिलिङ्गेन तदुभयर-सतारतम्यानुमानं सुकरमित्यर्थः ॥ ७१ ॥

अबोधीति । असौ बाला युवतिः ह्रीनिभृतं निगूढं मदिङ्गित मदभिप्रायं नो अबोधि नाबोधिष्ट बुध्यतेः कर्त्तरि लुङि तङ् टोपजने-त्यादिना चिण्चिणादेशः । प्रतीत्य बुद्ध्वापि नादृतवती न गणितवतीत्येवं रूपां यूनोधियं संशयबुद्धिं कियत् कानिचित्पदानि गता निवृत्य आदर-दर्शन सरागदृष्टिः किञ्चिद्दर्शनमसकलदृष्टिरिति व्याचक्षते ईषदर्थे-दरोऽव्यय मित्यमरः । तेनैवेषुणा शस्त्रेण लुनाति स्म । एतावतैव यूनो विषमानुरागशङ्काशङ्कुरुद्धृत इति भावः ॥ ७२ ॥

न राजिकाराद्धमभोजि तत्र कै-
र्मुखेन सीत्कारकृता दधद्दधि।
धुतोत्तमाङ्गैः कटुभावपाटवा-
दकाण्डकण्डूयितमूर्धतालुभिः ॥ ७३ ॥

वियोगिदाहाय कटुर्भवद्विष-
स्तुषारभानोरिव खण्डमाहृतम्।
सितं मृदु प्रागथ दाहदायि तत्
खलः सुहृत्पूर्वमिवाहितस्ततः ॥ ७४ ॥

नवौ युवानौ निजभावगोपिना-
वभूमिषु प्राक्परिहृतभ्रमिक्रमम्।

---

नेति। तत्र भोजने कैर्जनैः दधद्दधि दधिवद्धृत्वा संस्कृतमित्यर्थः। राजिकाराद्धं राजसर्षपनिष्पन्नं तत्पिष्टमयं व्यञ्जनमित्यर्थः। अथो राजसर्षपेऽथ क्षुताभिजननः त्वाष्ट्रिका राजिकेति यादवः। कटुभावपाटवात् कटुसामर्थ्यात् धुतोत्तमाङ्गैः कम्पितमस्तकैः यथा अकाण्डे असमये कण्डूयितं मूर्धतालु मूर्धानस्तालूनि च यैस्तैः सद्भिः सीत्कारकृता सीत्कारेण मुखेन यत्तु न नाभोजि अपि तु सर्वैरेव कम्पद्भिरेव अभोजि स्वभावोक्तिरलङ्कारः ॥ ७३ ॥

वियोगीति। वियोगिनां दाहाय कटुर्भवद्विषस्तीक्ष्णीभवद्विषं यस्य तस्य तुषारभानोश्चन्द्रस्य खण्डमिव स्थितमित्युत्प्रेक्षा। सितं शुभ्रं तद्राजसर्षपमिश्रं व्यञ्जनं पूर्वमादौ मृदु स्वादुः ततः पश्चात् कार्यकाले कटुत्वाद् दाहप्रदः खल इवोपमा प्रागादौ मृदु पश्चाद् दाहदायी-ति दाहकाले बभूवेति शेषः ॥ ७४ ॥

नवाविति। नवावपूर्वौ युवानौ युवतिश्च युवा च पुमान् स्त्रियेत्येकशेषः। निजभावगोपिनौ स्वाभिप्रायवञ्चकौ सन्तौ अत एव प्राक् प्रथम-मभूमिषु अविषयेषु नञर्थेन नञ् समासः। परिहृतभ्रमिक्रमं सततसञ्चार-

दृशोर्विधत्तः स्म यदृच्छया किल
त्रिभागमन्योन्यमुखे पुनः पुनः ॥ ७५ ॥

व्यधुस्तमां ते मृदुमांससाधितम्
रसाद्‌ग्रसित्वा मृदु तेमनं मनः।
निशाधवोत्सङ्गकुरङ्गजैरदः
पलैः सपीयूषपलैः किमस्त्वपि ॥ ७६ ॥

परस्पराकूतजदूतकृत्ययो-
रनङ्गमाराद्धुमपि क्षणं प्रति।

प्रकार इत स्ततः प्रवर्त्तित मित्यर्थः। दृशोस्त्रिभागं तृतीयभागमपाङ्गमि-त्यर्थः। वृत्तिविषये भागशब्दस्य पूरणार्थत्वमिति कैयटः। पुनः पुनरन्यो-न्यस्य मुखे यदृच्छया किल अनिच्छयेव विधत्तः स्म आदौ ह्रिया विषया-न्तरदर्शनव्याजादेव अन्योन्यमुखमपाङ्गदृष्ट्या ददृशतुरिति चक्षुः प्री-त्याख्या प्रथमा वस्थैका ॥ ७५ ॥

व्यधुस्तमामिति। ते जन्याः मृदुना अकठिनेन मांसेन साधितं निष्पादितं तेमनं निष्ठानापराख्यं चाय्यविशेषः स्यात्तेमनं तु निष्ठानं इत्यमरः। रसाद्रागाद्‌ग्रसित्वा आस्वाद्य अद इदन्तेमनं निशाधवस्येन्दो रुत्सङ्गे यः कुरङ्ग स्तज्जैः तत एव पीयूषरसैः अमृतद्रवमिश्रितैः पलै-र्मासैरप्यपि किमपावि किं? श्रितैः पाकर्थेत्वागदन्तात्कर्मणि लुङ् घटादि मित्वाद्धस्वः। इति मनोमतिं व्यधुस्तमाम् अतिशयेन विदधु-रित्युत्प्रेक्षितवन्त इत्यर्थः। दधातेर्लुङि तिङ्‌धादाम् प्रत्ययः ॥ ७६ ॥

परस्परेति। परस्पराकूतजम् अन्योन्याभिलाषजन्यं दूतकृत्यं दूतव्यापारो नयनादिचेष्टारूपो ययो स्तयोः संज्ञाभिरेव कृतसमागम-निश्चययो रित्यर्थः। यूनो स्तरुणयोः स्त्रीपुंसयो रनङ्गमाराद्धुं सेवितु मपि रन्तुमपीत्यर्थः। क्षणं कालं प्रति निर्णयः प्रत्ययः समागमक ल-निश्चयोऽपि इत्यर्थः। जनेषु जनमध्य एव कियच्चिरादपि किञ्चिच्चिरा-

निमेषणेनैव कियच्चिरायुषा
जनेषु यूनोरुदपादि निर्णयः॥ ७७॥
अहर्निशा वेति रताय पृच्छति
क्रमोष्णशीतात्मकरार्पणाद्विटे।
ह्रिया विदग्धा किल तन्निषेधिनी
न्यधत्त सन्ध्यामधुरेऽधरेऽङ्गुलीम्॥ ७८॥
कियत् त्यजन्नोदनमानयन् कियत्
करस्य पप्रच्छ गतागतेन याम्।
अहं किमेष्यामि किमेष्यतीति मा
व्यधत्त नम्रं किल लज्जयाननम्॥ ७९॥

वस्थायिना निमेषणेन निमीलनेनैव उदपादि उत्पन्नः उत्पद्यते कर्त्तरि लुङ् चिणुते पदः। परेषु निर्दिष्टेष्वाययोः समागम इति काल निश्चयोऽपि सम्यगेव कृत इत्यर्थः॥ ७७॥

अहरिति। विटे क्रमेण उष्णशीतयोः अन्ययोः करार्पणात् सूचनात् रताय अहर्निशा वेति पृच्छति सति विदग्धा चतुरा ह्रिया किल तत्कालद्वयं निषेधतीति तन्निषेधिनी सती सन्ध्यामधुरे सन्ध्यासवर्णे अधरे अङ्गुलिं न्यधत्त सन्ध्यासवर्णाधरस्पर्शेन आवयोः सन्ध्यासमये समागम इति सूचयामासेत्यर्थः। ह्रिया स्त्रीभिरङ्गुल्याधरं माच्छाद्यत इति प्रसिद्धम्॥ ७८॥

कियदिति। कियदोदनन्त्यजन् अपसारयन् कियदानयन् आकर्षन् करस्य गतागतेन यात यातात्र्यां विप्रतिपन्नान्यानधिकरणवाचि इति वैभाषिको द्वन्द्व एकवद्भावः। किमहमेष्यामि किं त्वमेष्यसि वेति याम्य प्रश्ने सा स्त्री लज्जया किल आननं नम्रं व्यधत्त शिरोऽवनतिभेदेन त्व[illegible]त्यर्थः॥ ७९॥

यथामिषे जग्मुरनामिषभ्रमम्
निरामिषे चामिषमोहमूचिरे ।
तथा विदग्धैः परिकर्मनिर्मितम्
विचित्रमेते परिहस्य भोजिताः ॥ ८० ॥

नखेन कृत्वाधरसन्निभां निभाद्
युवा मृदुव्यञ्जनमांसफालिकाम् ।
ददंश दन्तैः प्रशशंस तद्रसम्
विहस्य पश्यन् परिवेषिकाधरम् ॥ ८१ ॥

अनेकसंयोजनया तदा कृत-
निरूत्य निष्पिष्य च तादृगर्जनात् ।
अमी कृताकालिकवस्तुविस्मयम्
जना बहु व्यञ्जनमभ्यवाहरन् ॥ ८२ ॥

यथेति । ते जन्याः यथा आमिषे मांसे अनामिषमिति भ्रमं जग्मुः यथा निरामिषे अनामिषे आमिषमोहं मांसभ्रमं चोहिरे वहन्ति स्म तथा तेन प्रकारेण विदग्धैः कुशलपाचकैः परिकर्मणा संस्कारेण निर्मितम् अतएव विचित्रं भोज्यवस्तु परिहस्य विहस्य भोजिताः सर्वे सर्वज्ञत्वमादिताः इत्यर्थः ॥ ८० ॥

नखेनेति । युवा मृदोर्व्यञ्जनमांसस्य फालिकां खण्डिकां निभात् सञ्छिद्य भक्षणव्याजात् नखेनाधरसन्निभां परिवेषिकाधराकारां कृत्वा विहस्य परिवेषिकायाः भोज्यप्रदात्र्या अधरं पश्यन् दन्तैर्ददंश दष्टवान् तस्य रसं स्वादुं प्रशंसच अहो अमृतकल्पमिति तुष्टाव चेत्यर्थः । तदधरवत्स्वादुरिति भावः ॥ ८१ ॥

अनेकेति । तदा भोजनकाले अमी जना भोक्तारः अनेकेषां संस्कारद्रव्याणां संयोजनया मेलनेन तदा निरूत्य स्थित्वा निष्पिष्य पिष्ट्वा च अर्ज-

प्रलेहजस्ने ह्यस्ततासुबिम्बनाम्
चुचुम्ब कोऽपि स्मितभोजनस्थलः ।
मुहुः परिस्पृश्य कराङ्गुलीमुखै-
स्ततोऽनुरक्तैः स्वमवापितैर्मुखम् ॥ ८५ ॥

अराधि यन्मीनमृगाजपत्रिजैः
पलैर्मृदु स्वादु सुगन्धि तेमनम् ।
अशाकि लोकैः कुत एव जेमितुम्
न तत्तु सङ्ख्यातुमपि स्म शक्यते ॥ ८६ ॥

कृतार्थनस्वादुभिरिङ्गितैः परा
परामि यः किंस्विनकुञ्चितभ्रुवा ।

बिम्बनां प्राप्तप्रतिबिम्बां कान्ता मितिशेषः । मुहुः परिस्पृश्य ततः स्पर्शादनन्तरं स्वमुखमवापितैरास्यं प्रापितैर्चुम्बितै रित्यर्थः । अतएव अनुरक्तैः सस्नेहैः कराङ्गुली रुसेराङ्गुल्यग्रैश्चुचुम्ब मुहुर्लेह्यलेहनव्याजेन कान्ताप्रतिबिम्बानुस्पृष्टाङ्गुलिमुखचुम्बनादेव तत्प्रतिबिम्बचुम्बनात् सुख-मन्वभूदित्यर्थः ॥ ८५ ॥

अराधीति । मीना मत्स्या मृगाः शशादयः अजाश्छागाः पत्त्रिणः पक्षिणश्चटकादयः तेभ्यो जातैस्तज्जैः पलैर्मांसैः पललं जाङ्गलं मांसं पललं क्रव्यमामिषम् इति हलायुधः । मृदु मनोहरं स्वादु रसवत् सुगन्धि सुरभि यत्तेमनं लेह्यमराधि अपाचि तत्तेमनं लोकैर्भोक्तृजनैः सङ्ख्यातु गण-यितुम् अपि न शक्यते स जेमितु भक्षितुं कुत एवाशाकि सङ्कुलत्वाच्चेति भावः पाके राध्यते रध्यतिजेमत्यक्ति चमतीति भट्टमल्ल ॥ ८६ ॥

कृतेति । स्वादुभिर्मनोहरैः इङ्गितैर्मयनादिचेष्टितैः कृतार्थनो देहीति कृतार्थनो यो युवा किं न किंस्विनकुञ्चितभ्रुवा कयाचिदथवा स्त्रिया पुरा पूर्वं परामि पर्यहारि स युवा भोजनलीलया भोजन-व्यापारेण तद्व्याजेनेत्यर्थः । मुखे अङ्गुलिं क्षिपन् प्रसन्नाननया तया

क्षिपन्मुखे भोजनलीलयाङ्गुली:
पुन: प्रसन्नाननयाऽन्वकम्पि स: ॥ ८७ ॥

अकारि नीहारनिभं प्रभञ्जना-
दधूपि यच्चागुरुसारदारुभि:।
निपीय भृङ्गारकसङ्गि तच्च ते-
रवर्षि वारि प्रतिवारमीदृशम् ॥ ८८ ॥

त्वया विधातर्यदकारि चामृतम्
कृतञ्च यज्जीवनमस्य साधु तत्।
द्वयेदमारम्भि तु सर्वतोमुखम्
तथोचित: कर्त्तुमिदं पिबस्तव ॥ ८९ ॥

पुनरन्वकम्पि अनुकम्पित: कार्य्यकातरो हृष्टाङ्गुलि: कृपापात्रं भवतीति भाव ॥ ८७ ॥

अकारीति। यद्वारि प्रभञ्जनाद्वायो र्वायुसञ्चारादित्यर्थ:। पवमान: प्रभञ्जन इत्यमर:। नीहारनिभं हिमकल्प तद्वच्छीतल मित्यर्थ:। अकारि कृतम् अगुरुसारदारुभि: धूपकाष्ठैरधूपि धूपितं वासितं चेत्यर्थ: ईदृशमीदृग्गुणं भृङ्गारकसङ्गि कनकालुकान्तर्गत भृङ्गारः कनकालुके-त्यमर। वारि निपीय प्रतिवारं प्रतिपानं तत्र तस्मिन्देशे काले वा तैर्भोक्तृभिरवर्षि वर्णितम् ॥ ८८ ॥

त्वयेति। हे विधात: ! त्वया अस्य अमृतस्य अमृतनामकं पीयूषस्य यदकारि तदा जीवनं जीवनसंज्ञिकस्य यत्कृतं तदुभय साधु सफलं सर्वतो मुखानि प्रवाहवक्त्राणि च यस्य तत्तथा कृत मिति यावत् द्वयेनारम्भि अकारि पेयस्य सुखवैयर्थ्यादिति भाव:। किन्तु तव अस्यास्त्मन: पिबतीति इदं पिब: पाता इदमभिभोजनस्तु पाघ्रादिना शप्रत्यय। तथा सर्वतोमुख: कर्त्तुमुचित: तस्य तदुपयोगादिति भाव: पुष्करं सर्वतो मुख मित्यमर ॥ ८९ ॥

सरोजकोशाभिनयेन पाणिना
स्थितेऽपि कूरे मुहुरेव याचते ।
सखि ! त्वमस्मै वितर त्वमित्युभे
मिथो न वादाद्ददतुः किलौदनम् ॥ ९० ॥

इयं कियच्चारुकुचेति पश्यते
पयःप्रदायाहृदयं समावृतम् ।
ध्रुवं मनोज्ञा व्यतरद्यदुत्तरम्
मिषेण भृङ्गारधृतेः करद्वयी ॥ ९१ ॥

अमीभिराकण्ठमभोजि तद्गृहे
तुषारधाराम्रदितेव शर्करा ।

सरोजेति । कूरे ओदने स्थितेऽपि अन्धः कूरं भक्तमन्नमोदन भक्ष्मेति हलायुधः । सरोजकोशस्याभिनयोऽनुकरणं यस्य सः कमलमुकुलानुकारी तदीयकुचग्रहणाभिलापव्यञ्जक इत्यर्थः । तेन पाणिना मुहुरेव याचते पुनः पुनः कूरं याचते याचमानाय यूने यया उभयपाटत्वाच्छुपप्रत्ययः । उभे स्त्रियौ हे सखि ! त्व मेवास्मै वितर देहि मिथोवादाद्विवादादोदनं न ददतुः किल खलु ? पराभिप्रायज्ञाने तद्वैयर्थ्यादिति भावः ॥ ९० ॥

इयमिति । पयः प्रददातीति पयः प्रदाया तस्याः सम्बन्धि समावृत माच्छादितं हृदय वक्षः कर्म हृदय कियन्तौ चारू कुचौ यस्याः सेति पश्यते कुचपरिमाणं जिज्ञासमानायेत्यर्थः । करद्वयी तस्याः पाणि युगली भृङ्गारधृतेर्मिषेण कनकालुकाधारणव्याजेन यद्यस्मादुत्तरमेतद् भृङ्गारपरिमाण मित्येवं रूपमुत्तर व्यतरददात्तस्माद्ध्रुवं मनोज्ञा चित्तज्ञेत्युत्प्रेक्षा ॥ ९१ ॥

अमीभिरिति । अमीभिर्जन्यैस्तद्गृहे भीमभवनेषु तुषारधारया हिमोदकेन म्रदिता मर्दिता शर्करा खण्डविकारा इव तत्साधु शुभ्र

वाहं द्विषद्भक्ष्यरणीपयः स्रुतम्
सुधाह्रदात् पङ्कमिवोद्धृतं दधि ॥ ८२

तदन्तरन्तः सुषिरस्य विन्दुभिः
करम्बितं कल्पयता जगत्कृता ।
इतस्ततः स्पष्टमचोरि मायिना
निरीक्ष्य तृष्णाचलजिह्वताभृता । ८३ ॥

ददासि मे तन्न रुचेर्यदास्पदम्
न यत्र रागः सितयापि किं तया ।

चेत्यर्थः । खण्डविकाराः शर्करा सितेत्यमरः । सुधाह्रदादुद्धृतं । अमृतकर्दममिव स्थितमित्यर्थः । वाहं द्विषन्ती महिषी सा च सा वा यणी विरप्रसूता स्त्रियाः पुंवदित्यादिना पुंवद्भावः लुलायो महि वाह इत्यमरः । तस्याः पयसः क्षीरात् स्रुतमुत्पादितं स्रुनोतेः कर्म क्तः । दधि आकण्ठ मभोजि भुक्तम् ॥ ८२ ॥

तदिति । निरीक्ष्य वीक्ष्य सृष्ट्यादौ स्वसृष्टं दधि दृष्ट्वा तृष्णा गर्द्धनेन चलजिह्वताभृता लोलजिह्वत्वधारिणा अतएव मायि स्वचापल्यच्छन्नाचतुरेण जगत्कृता स्रष्ट्रा सद्यस्तद्दधि अन्तरन्तर्मध्ये इ रस्य जातावेकवचनम् । सुषिराणां विन्दुभिर्मण्डलैः करम्बितं मि कल्पयता तत्र वर्तुलच्छिद्रयुक्तं कुर्वता सता इतस्ततोऽचोरि चो सर्वथा कतिपयावयवानां स्वादे कृतच्छिद्राणामिति भावः । स्पष्टमित प्रेक्षायां मन्ये सोऽप्याकर्षकं माहिषदधि किमतान्यथामिति भावः ॥ ८

ददासीति । यत् रुचेः रागस्यास्पदमन्नं मह्यं न ददासि य रागस्तया सितया कृतमलं खण्डविकाराः शर्करा सितेत्युक्तं रक्ता रागिणः किं सितवस्तुनेति च गम्यते । इतोऽपि वै इतिवादिने रा रुचिरनुवादप्रयोगे अनुप्रयोग एव कर्त्तव्य इति न्यायादित्य विम्बमिव अधरो यस्याः तया विम्बौष्ठ्या स्त्रिया विम्बफलमदायि दत्त

[illegible] सितं सिताशर्करा मह्यं [illegible] इत्यर्थः । तर्

इतीरिणे बिम्बफलं फलच्छला-
द्ददायि बिम्बाधरयारुचच्च तत् ॥ ९४ ॥
समं ययोरिङ्गितवान् वयस्ययो-
स्तयोर्विहायोपहृतप्रतीङ्गिताम् ।
अकारि नाकूतमवारि सा यया
विदग्धयाऽरञ्जि तयैव भाववित् ॥ ९५ ॥
सखीं प्रति स्माह युवेङ्गितेक्षिणी
क्रमेण तेऽयं क्षमते न दित्सुताम् ।
विलोम तद्व्यञ्जनमर्प्यते त्वया
वरं किमस्मै न नितान्तमर्थिने ॥ ९६ ॥

फलमरुचत् अरोचिष्ट स्वदुरभूदित्यर्थः । प्रियाधरप्रतिबिम्बप्रतिनिधि-त्वादिति भावः । रुचदीप्तौ प्रीत्यर्थाल्लुङ् द्युद्भ्यो लुङीति परस्मैपदं पुषादिद्युतादीत्यादिना च्लेरङादेशः ॥ ९४ ॥

सममिति । ययोर्वयस्ययोः सहचर्य्योः समं तुल्यं यथा तथा इङ्गितवान् दृगादिसञ्ज्ञावान् तयोर्मध्ये उपहृतप्रतीङ्गितां दत्तप्रति-सञ्ज्ञां विहाय परिहृत्य किन्तु यया आकूत प्रतीङ्गितं नाकारि किन्तु सा प्रथमा अवारि वारिता यदाश्यामय मपरङ्गो रक्षस्वात्मनः स्यात् तदौदासितमित्यर्थः । विदग्धया चतुरया द्वितीयदैवायम्भावविज्ञावगः अरञ्जि रञ्जितः आकृष्टः एतेन पूर्व्वविला द्वितीया गम्भीरा सोऽपि भावज्ञ स्तद्युक्तमेतदिति गम्यते ॥ ९५ ॥

सखीमिति । युवेङ्गितेक्षिणी युवाभिप्रायदर्शिनी काचित् सखीं परिवेषिकां वयस्यां प्रत्याह स्म उवाच लट् स्मे इति भूते लट् । किमिति अयं युवा ते तव सम्बन्धिनीं क्रमेण दित्सुतां न क्षमते पङ्क्तिक्रमेण परि-वेषणं न सहत इत्यर्थः । अतः यानितान्तमर्थिने याचकाय तस्मै वरहृत्कृष्टं व्यञ्जनं निष्ठानं विलोम विपरीतं व्युत्क्रमेण नार्प्यते न दीयते कदाय

समाप्तिलिप्येव भुजिक्रियाविधे-
र्दलोदरं वर्त्तुलयाऽऽलयीकृतम्।
अलङ्कृतं चीरवटैस्तदभ्रताम्
रराज पाकार्पितगैरिकश्रिया ॥ ८७ ॥
चुचुम्ब नीवीवलयोर्वशीं परम्
पुरोऽधिपारि प्रतिबिम्बितां विटः।
पुनः पुनः पानकपानकैतवा-
च्चकार तच्चुम्बनचुङ्कृतान्यपि ॥ ८८ ॥

श्चोपदेयमिति भावः। विलोम अरोमक अतएव वरसुतलष्ट व्यञ्जन
वराङ्गमर्घिनेऽस्मं किं नार्थ्यत इत्यर्थान्तरस्यापि विवक्षितत्वात् केवलप्रकृत-
श्लेषः व्यञ्जनं श्मश्रु निष्ठान चिह्ने स्वश्रयवेऽन्तरे इति यादवः ॥ ८६ ॥

समाप्तिमिति। तदा तत्काले चीरपका वटा, चीरवटाः पिष्टकविशेषाः
तै रलङ्कृतमभ्रत मध्यमहरतान्दलस्य तेष्व पत्रस्योदरं मध्यभागं समाप्ति.
अभिव्यक्तिः पवि व्यक्तीकरण इतिधातोर्भङ्क्त्वा। तदर्णभार्पिता न्यस्ता गैरि-
कश्री धातुरागो यस्यां तया चीरवटपाकेन अग्निसंयोगभेदेन अर्पिता
उत्पादिता गैरिकस्येव श्रीः कान्तिर्येषां तैः इति परिणामः वर्तुलया
निस्तलया अन्यत्र निष्कलैरित्यर्थः। भुजिक्रिया भुजिधात्वर्थः सैव विधि-
र्व्यापारो भोजनमिति यावत् तस्य मम प्तौ या लिपि स्तद्वर्जीकरणलेख्य
विन्यास तया आलयीकृतमास्पदीकृतमिव तदङ्कितमिति यावत् रराजे-
त्यन्वयः। ॥ ८७ ॥

चुचुम्बेति। विटः पुरोऽग्रे पाय्यामधि अधिपारि पानपात्राभि-
त्यर्थः। पारी पात्री पराङ्ग्योरिति विश्वः। वारिवहनभाण्डमिति
स्वामी। प्रतिबिम्बितामुर्वीवलयोर्वशीं भमणलोर्वशीं स्त्रीं परं केवलं न
चुचुम्ब किन्तु पुनः पुनः पानकपानकैतवात्तस्या सम्बन्धे चुङ्कृतान्यपि चूषण

घनैरमीषां परिवेषकैर्जनै-
रवर्षि वर्षोपलगोलकावली ।
चलद्भुजाभूषणरत्नरोचिषा
धृतेन्द्रचापैः श्रितचान्द्रसौरभा ॥ ९९ ॥

कियद्गुरु व्यञ्जनमेतदर्प्यते
ममेति तैर्मुर्वदतां पुनः पुनः ।
अमूनि सञ्चातुममावढौकि तै-
श्छलेन तेषां कठिनीव भूयसी ॥ १०० ॥

विदग्धबालेङ्गितगुप्तिचातुरी-
प्रवल्हिकोत्पाटनपाटवे हृदः ।

---

घनैरिति । चलन्त्यो भुजास्तासां भुजानां भूषणरत्नानां रोचिषैव धृत-मिन्द्रचापं यैस्तैः परिवेषन्तीति परिवेषिका दातारस्तैर्जनैर्घनैर्मेघैरमीषां भोक्तॄणां श्रितचन्द्रसौरभा प्राप्तकर्पूरगन्धा अ यत्र श्रिते व्याप्ते चान्द्रस्य सूर्यस्य वा सौरी भा प्रभा च यया सूर्येतिप्यागस्त्यानां उपधाया इति यका-रलोपः । वर्षोपला इव गोलकाः गुटिकाकाराः पिष्टविशेषास्तेषामाव-लिरवर्षि वृष्टा ॥ ९९ ॥

कियदिति । ममैतत्कियत् बहुव्यञ्जनं शाककतिव्यञ्जनं नीत्यर्थः । अर्प्यते इति वदतां तेषां भोक्तॄणां अमूनि व्यञ्जनानि सञ्चातुं भूयसी कठिनीव भूयस्यः करिका इव सञ्चानगुटिका इवेत्यर्थः । करिका कठिनी इति विश्वः । असौ गोलकावलिः तैः परिवेषकैः छलेन परि-वेषणव्याजेन अढौकि ढौकिता दत्तेत्यर्थः ॥ १०० ॥

विदग्धेति । कामुकः कामी विदग्धबालायाः प्रौढाङ्गनायाः इङ्गित-गुप्तिचातुरी आकारगोपनचातुर्यं निगूढार्थचेष्टाप्रयोगचातुरी सैव प्रव-ल्हिका प्रहेलिका परास्यो निगूढार्थोक्तिविशेषः तस्या उत्पाटने अर्थोद्भेदने यत्पाटवं तस्मिन् पटुमदुत्पाटने प्रसिक्ते सतीत्यर्थः । अस्मिन्-

निजस्य टीकां प्रबबन्ध कामुकः
स्पृशद्भिराकूतशतैस्तदौचितीम् ॥ १०१ ॥

घृतप्लुते भोजनभाजने पुरः-
स्फुरत्पुरन्ध्रिप्रतिबिम्बिताकृतेः ।
युवा निधायोरसि लड्डुकद्वयम्
नखैर्लिलेखाथ ममर्द निर्दयम् ॥ १०२ ॥

विलोकिते रागितरेण सस्मितम्
ह्रियाथ वैमुख्यमिते सखीजने ।
तदालिरानीय कुतोऽपि शार्करीम्
करे ददौ तस्य विहस्य पुत्तिकाम् ॥ १०३ ॥

योद्देशेन औचित्यमानुकूल्यं स्पृशद्भिस्तदानुकूल्यैरित्यर्थः । स कृतार्थ-शतैः निजस्यात्मीयस्य हृदो हृदयस्य टीकां व्याख्यां प्रबबन्ध [illegible] तस्यै निवेदयामासेत्यर्थः । उचितोत्तरदानदेव प्रश्नार्थप्रकाशनात्तदेव तद्व्याख्यानमिति भावः ॥ १०१ ॥

घृतेति । युवा पुरोऽग्रे घृतेन प्लुते सिक्ते भोजनभाजने स्फुरन्ती या पुरन्ध्र्याः कुलनार्याः प्रतिबिम्बिता आकृतिः शरीरं तस्या उरसि लड्डुकद्वयं [illegible] निधाय नखैर्लिलेख विददार निर्दयं ममर्द पीडयामास तदीय[illegible]भावनयेति भावः ॥ १०२ ॥

विलोकित इति । रागितरेण अत्यन्तानुरक्तेन केनचित् [illegible] विलोकिते सस्मितं जने [illegible] ह्रिया वैमुख्यमिते परावृत्ताकृते सति एतेन तस्या अपि तस्मिन् [illegible] तदालिः तत्सखी कुतोऽप्यानीय शार्करीं शर्करामयीं [illegible] । पुत्तिकां [illegible] पाञ्चालिकामित्यर्थः । पाञ्चालिका पुत्तिका स्यादित्यमरः । [illegible] करे विहस्य ददौ [illegible] ॥ १०३ ॥

निरीक्ष्य रम्याः परिवेषिका भुवम्
न भक्तमेवैभिरवाप्तलिप्सुभिः ।
अयत्नवर्द्धिष्णुबहुभक्तवत्तया
यथोज्झिता व्यञ्जनपुञ्जराजयः ॥ १०४ ॥

पृथक्प्रकारेङ्गितशंसिताशयो
युवा ययोदासि तयापि तापितः ।
ततो निराशः परिभावयन् परा-
मये! तयाऽतोषि सरोषयैव सः ॥ १०५ ॥

निरीक्ष्येति। यथा ययेदं बहुभक्तवत्तया कृतभोजनतया अयत्नवर्द्धिविशेषं भोक्तृभयत्नवर्द्धिष्णुस्तैर्व्यञ्जनपुञ्जराजयो भोक्तृणा-णाना श्रेण्यः उज्झितास्त्यक्ताः तथा बहुलं परिवेषणादिति भावः। अत्रोत्प्रेक्षते रम्या रमणीयाः परिवेषिका योषितः निरीक्ष्य अवाप्त-लिप्सुभिः प्राप्तुमिच्छुभिः ... भोक्तृभिर्न भक्तमेव भुवमित्युत्प्रेक्षा अन्यथा कथमेतं भोक्तारः पयः पात्रेषु तथैव त्यजन्ति इति भावः॥ १०४॥

पृथगिति। यया पृथक्प्रकारैरिङ्गितैः शंसिताशयो नानाविधचेष्टाप्रका-शितहृदयो युवा उदासि तया रोषदनादरपरया अतापि तापितः सन्तापितः अत्युपसर्गो धात्वर्थानुवर्त्तते। औदासीन्यात् निराशोऽस्पृहः परामन्यां परिभाव्य विभाव्य स युवा सरोषया अन्यावलोकनदृष्टया पूर्वयैव अतोषि तोषितः तोषयतेः कर्मणि लुङ्। अये इति सम्बोधने अन्यावलोकाद्धि रोषदर्शनात्त्वमभितापितोऽयं न तु विरक्तेति ज्ञात्वा सन्तोषात्सम्भ्रान्त इत्यर्थः। अये क्रोधे विषादे च स्मरणे सम्भ्रमेऽपि चेति विश्वः॥ १०५॥

पय इति। पयः पाथः क्षीरं वा स्मितं यस्याः सा खण्डपमण्डलं मण्डपसमूह एवाम्बरं यस्याः सा वटाः वटकाः शुभ्रतुलपिष्टकविशेष-काः ष एवाननेन्दुर्यस्याः सा पृथू लड्डुकावेव स्तनौ यस्याः सा इत्येः पटम

अपारशृङ्गारमयः समुन्मिषन्
भगं रसस्तोममधत्त सप्तमः ॥ १०८ ॥
मुखे निधाय क्रमुकं नलानुगै-
रथोज्झि पर्णालिरवेक्ष्य वृश्चिकम् ।
दमार्पितान्तर्मुखवासनिर्मितम्
भयाविलैः सम्भ्रमहासिताखिलैः ॥ १०९ ॥
अमीषु तथ्यानृतरत्नजातयो
र्विदर्भराट् चारुनितान्तचारुणोः ।
स्वयं गृहाणैकमिहेत्युदीर्य तद्
द्वयं ददौ शेषजिघृक्षवे हसन् ॥ ११० ॥

रादिषड्रसापेक्षया इति भावः । तोषमत्त एकोऽपि लोकोत्तरो बहुन-तिशयेन इति भावः ॥ १०८ ॥

मुखे इति । नलानुगैर्नलानुचरैः क्रमुकं पूगं फलं मुखे निधाय दमेनार्पितमन्तर्मुखस्य अन्तर्मुखं विभक्त्यर्थेऽव्ययीभावः । मुखवासं लवङ्ग-तक्कोलाकर्पूरादिवासनद्रव्यं कर्मण्यण् । तेन निर्मिता तयोर्विशेषण-विशेष्यभावविवक्षायां विशेषणसमासः । वृश्चिकमवेक्ष्य भयेनाकुलैराविलैः अतएव सम्भ्रमेण हासिता अखिला यैस्तैः सद्भिः पर्णालिः नागवल्ली अथोज्झि उज्झिता उज्झ विसर्गे कर्मणि लुङ् ॥ १०९ ॥

अमीष्विति । विदर्भराट् विदर्भदेशाधीश्वरो भीमः चारुनितान्त-चारुणोर्यथासङ्ख्यं रम्यातिरमणीययोर्द्विहानयोस्तथ्यानृतरत्नजात्योः सत्यासत्यरत्नौघयोः जाते जात्यौघजन्मस्विति विश्वः । मध्ये एकं स्वं गृहाणेत्युदीर्य शेषमसत्यमेव जिघृक्षवे ग्रहीतुमिच्छवे तस्यैवार्तिच-त्वादितिभावः परे हसनन्तादुप्रत्ययः सधुपिपासादित्वाद्द्वितीया समासः तयोः कृत्रिमाकृत्रिमयोर्द्वयं हसन् ददौ तत्र कृत्रिमं विनोदाय दद-त्यन्यदौचित्यादिति भावः ॥ ११० ॥

अपारशृङ्गारमयः समुन्मिषन्
भृशं रसस्तोममधत्त सप्तमः ॥ १०८ ॥

मुखे निधाय क्रमुकं नलानुगै-
रथोज्झि पर्णालिरवेत्य दृश्चिकम्।
दमार्पितात्तन्मुखवासनिर्मितम्
भयाविलैः सम्भ्रमहासिताखिलैः ॥ १०९ ॥

अमीषु तथ्यानृतरत्नजातयो-
र्विदर्भराट् चारुनितान्तचारुणोः।
स्वयं गृहाणैकमिहेत्युदीर्य्य तद्
द्वयं ददौ भेदजिघृक्षवे हसन् ॥ ११० ॥

राद्दृष्टपहृत्सापेक्षया इति भावः। तोषमध्यत्त एकोऽपि लोकोत्तरो बहुनन्तियोत इति भावः॥ १०८॥

मुख इति। नलानुगैर्नलानुचरैः क्रमुकं पूगफलं मुखे निधाय दमेनार्पितमन्तः मुखस्य अन्तर्मुखं विभक्त्यर्थेऽव्ययीभावः। मुखवासं लवङ्गतक्कोलाकर्पूरादिवासनद्रव्यं कर्मधारयः। तेन निर्मितं तयोर्विशेषणविशेष्यभावविवक्षायां विशेषणसमासः। दृश्चिकमवेत्य भयेनाकुलैराविलैः अतएव सम्भ्रमेण हासिताः अखिला येस्तैः सद्भिः पर्णालिः नागवल्ली अथोज्झि उज्झितः उज्झ विसर्गे कर्मणि लुङ्॥ १०९॥

अमीष्विति। विदर्भराट् विदर्भदेशाधीश्वरो भीमः चारुनितान्तचारुणोर्यथाक्रमं रम्यातिरमणीययोरित्यामयोस्तथ्य अनृतरत्नजात्योः सत्यासत्यरत्नौघयोः जाते जात्यौघजन्यस्विति विग्रहः। मध्ये एकं स्वयं गृहाणेत्युदीर्य भेद मसत्यमेव जिघृक्षवे गृहीतुमिच्छवे तस्यैवाति चारुत्वादितिभावः। पद्भेः समन्तादुप्रत्ययः मधुपिपासादित्वाद्द्वितीया समासः। तयोः कृत्रिमाकृत्रिमयोर्द्वयं हसन् ददौ तत्र कृत्रिमं विनोदाय ददौ अन्यदौचित्यादिति भावः॥ ११०॥

इति द्विजानां शुचिमिष्टभोजिनाम्
दिनानि तेषां कतिचिन्मुदा ययुः।
द्विरष्टसंवत्सरवारसुन्दरी-
परीष्टिभिस्तुष्टिमुपेयुषां निशि ॥ १११ ॥

उवास वैदर्भगृहेषु षण्मुखा
निशाः कृशाङ्गीं परिणीय तां नलः।
अथ प्रतस्थे निषधान् सहानया
रथेन वार्ष्णेयगृहीतरश्मिना ॥ ११२ ॥

परस्य न स्पृष्टिमिमामधिक्रिया
प्रिया शिशुः प्रांशुरसाविति ब्रुवन्।
रथे स भैमीं स्वयमध्यरूरुह-
न्न तत् क्रियार्हीन्नजनीमां जनैर्हसितः ॥ ११३ ॥

इतीति। इति द्विः अतो द्विस्त्रि सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुचिति। शुचि पवित्रं मिष्टं भुञ्जत इति तद्भोजिनां तथा निशि द्विरावृत्ता अष्ट संवत्सरा यासां तासां षोडशवर्षाणां वारसुन्दरीणां गणिकानां परीष्टिभिः भोजनैः परिष्टिभाजनैः भक्तिभिरिति वैजयन्ती। तुष्टिमुपेयुषां तेषां नलानुगानां कतिचिद्दिनानि मुदा ययुः ॥ १११ ॥

उवासेति। नलः कृशाङ्गीं तां दमयन्तीं परिणीय वैदर्भगृहेषु षट् षड्वा षण्मुखाः सङ्ख्ययाव्ययेत्यादिना बहुव्रीहौ डच्समासान्तः। निशा रात्रीः उवास अत्यन्तसंयोगे द्वितीया। ततोऽनया भैम्या सह वृष्णेरपत्यं वार्ष्णेयो नलसारथिः कुलनामिनिञ् इति ठक्। तेन गृहीता रश्मयः प्रग्रहा यस्य किरणप्रग्रहौ रश्मी इत्यमरः। तेन रथेन निषधान् प्रतस्थे ॥ ११२ ॥

परस्येति। परस्य अन्यतरस्य इमां भैमीं स्पृष्टमधिक्रिया अधिकारो न प्रिया भैमी शिशुः असौ रथः प्रांशुरुन्नतः इति ब्रुवन् स्वयंक्रियायुक्तं वदन् तत्किल तत्कारणादेव इमां भैमीं स नलो जनैर्हसितः सन्

इति स्मरः शीघ्रमति चकार तम्
वधूं च रोमाञ्चभरेण कर्कशौ ।
स्खलिष्यति स्निग्धतनुः प्रियादियम्
मदीयमी पीडनभीरुदोर्युगात् ॥ ११४ ॥

अथ किमाजन्मनिजाङ्कवर्द्धिताम्
प्रहित्य पुत्रीं पितरौ विषेदतुः ।
विसृज्य तौ तं दुहितुः पतिं यथा
विनीततालक्षगुणीभवद्गुणम् ॥ ११५ ॥

निजादनुव्रज्य स मण्डलावधे-
र्नलं निवृत्तौ चटूलापतां गतः ।

---

स्वयमेव रथे अभ्युदुहत्य अधिरोहयामास स्पर्शलोभादिति भावः रुहेर्णौवङ् । नाश्लिषत् अनौचित्यादिति भावः । श्लिष आलिङ्गन इति श्लिषेर्लुङि च्लेः क्सादेशः ॥ ११३ ॥

इतीति । स्निग्धतनुर्मसृणाङ्गी मदीयमी अतिसुकुमाराङ्गी इयं भैमी पीडनाद्भीरु दोर्युगं यस्य तस्मात् मदीयसः पीडनासहत्वादिति भावः । प्रियात् स्खलिष्यतीति मृदुत्वात् स्वयमालिङ्गने स्निग्धत्वात्प्रियभुजान्तरात् सस्रंसिष्येतेति शीघ्रमति प्रत्युत्पन्नमति स्मरः तं नलं वधूं भैमीं च रोमाञ्चभरेण पुलकोत्करेण कर्कशावस्निग्धगात्रौ चकार अस्य परस्पराङ्गसङ्गहेतुके रोमाञ्चे आलिङ्गनानीव स्खलितमतिवस्त्वार्थेन सम्भाव्यते ॥ ११४ ॥

अथेति । अथ पितरौ माता पितरौ पिता मात्रेति विकल्पादेकशेषः । आ जन्म जन्मप्रभृति अभिविधावव्ययीभावः । निजाङ्के स्वोत्सङ्गे वर्द्धितां पुत्रीं दुहितरं गौरादित्वाट्टीकारः । प्रहित्य हिनोतेः क्त्वो ल्यप् । तथा विषेदतुः विषण्णौ किं नेत्यर्थं सदेर्लिट् । अतएव हालिन्यादिना एत्वाभ्यासलोपौ । यथा तौ भैमी पितरौ विनीततया विनयसम्पन्नतया लक्षगुणीभवन्तो लक्षगुणा सन्तोषगुणा यस्य तथोक्तं दुहितुः

तडागकल्लोल इवानिलं तटा-
त्धृतानतिव्यावहृते विदर्भराट्॥ ११६॥
पितात्मनः पुण्यमनापदः क्षमा
धनं मनस्तुष्टिरथाखिलं नलः।
अतः परं पुत्रि! न कोऽपि तेऽहमि-
त्युदश्रुरेष व्यसृजन्निजौरसीम्॥ ११७॥
प्रियः प्रियैकाचरणाच्चिरेण ताम्
पितुः स्मरन्तीमचिकित्सदाधिषु।

---

पतिं जामातरञ्च। समासान्तविभाषा स्वसृपत्योरिति विकल्पादलुक्
विशेष्य विपरीतः॥ ११५॥

निजादिति। स विदर्भराट् भीमो नल मनुव्रज्य निवृत्तौ निवृत्ति-
समये घट्टपततीति अति घटनापश्चाद्वाद, यन् अन्यत्र घट्टा, आपः यस्य
तत्तयोक्तं घटनाय यन् स्कन्धपरित्यादिना समासान्तः। तडागस्य कल्लोलो
महोर्मिः अर्णमिव, महत्स्थूल नकल्लोलाविस्यमरः। अनिल मनुव्रज्य
तटात् धृता खेअतता यानतिनेत्तनमस्कारः अन्यत्र प्रहृता यस्य स सन्
निजात् मदन्तगायचेराट्रस्य म न्ना न व्यावहृते निवृत्तः॥ ११६॥

पितेति। हे पुत्रि! आत्मनस्तव पिता जनकः पुण्यं सुकृतम्
अनापदः क्षमा, सर्वनिवृत्तिभ्यास धन वित्तं मनस्तुष्टि मनोरञ्जि रथ
किं बहुना अखिलमुक्तमन्यञ्च सर्वं नलो नलएव अतोऽस्मादनात्
परमयदाभ्ि अहं तु ते तव कोऽपि य, कश्चिदेवेत्यर्थः इति इत्य
मुक्तो तिष्ठेष, एष भीम उदश्रुः उद्वाष्य सन् निजामौरसीम् उरसा
निर्मितां पुत्रीं उरसोऽन्यतरस्या मित्यण्प्रत्ययः संज्ञाधिकारादभिधेय-
नियम इति काशिका। व्यसृजत् विससर्ज॥ ११७॥

प्रियइति। प्रियैकाचरणात् केवलेष्टचरणात् तथोपलालना-
दिति यावत्। पितुः स्मरन्ती पितरं स्मरन्ती मित्यर्थः। अधीगर्थदयेशां
कर्मणीति कर्मणि षष्ठी। तां दमयन्तीं प्रियो भर्तार्चिरेण आधिषु मनोव्य-

शशाम नोऽस्याविरहौर्वपावको
न तु प्रियप्रेममहाम्बुधावपि ॥ ११८ ॥

असौ महीभृद्धुधा तु मण्डित-
स्तया निजोपत्यकयेव कामपि ।
भुवा कुरङ्गेक्षणदन्तिचारयो-
र्बभार शोभां कृतपादसेवया ॥ ११९ ॥

तदेकतानस्य नृपस्य रञ्जितम्
चिरोढया भावमिवात्मनि श्रिया ।
विहाय सापत्न्यमरञ्जि भीमजा
समग्रतद्वाञ्छितपूर्त्तिवृत्तिभिः ॥ १२० ॥

---

यस्य विषये अचिकित्स्यदुःखत्वयाशाम पितृरागातिरेकेण कथञ्चित् पितृविरहः मसहनेत्यर्थः। कितनिवास इति धातोर्व्याधिप्रतिकारे गुप्तिज्किद्भ्यः सनिति सन्। सोऽनुभवसिद्धो अस्याविरह एव औवर्पावको वडवाग्निः प्रियप्रेममहाम्बुधौ प्रियानुरागसमुद्रेऽपि न शशाम समुद्रे यथौर्वस्य दुर्वारत्वादिति भावः कन्यानां पितृतो मातरि वात्सल्या-द्विरहो दुःसह इति भावः ॥ ११८ ॥

असाविति। वसुधातु वसुधैव अन्यत्र वसुधातुभि र्गैरिकादिभि र्मण्डितोऽलङ्कृतो महीभृद्राजा पर्वतश्च कुरङ्गस्येव कुरङ्गाणाम् ईक्षणं दन्तिन इव दन्तिनां चारो गतिः स चारश्च तयोर्भुवा स्थानेन कृता पाद-सेवा प्रत्यन्तपर्वतसन्निकर्षश्च यया तया भैम्या कामस्य अनिर्वाच्यां शोभां कान्तिं बभार ॥ ११९ ॥

तदिति। चिरायऊढयाश्रुतया परिणतया च श्रिया राज्यलक्ष्म्या तदेकतानस्य दमयन्त्येकहृत्ते. एकतानोऽनन्यवृत्ति रित्यमरः। नृपस्य नलस्य भावं चित्तवृत्तिम् आत्मनि विषये रञ्जितं स्थिरीकर्त्तुमिवेत्युत्प्रेक्षा सापत्न्यं सपत्नीवैरं विहाय भीमजा भैमी समग्रायां तद्वाञ्छितानां

असारमालावलितोरणां पुरीम्
निजाह्वियोगादिव लम्बितालकाम्।
ददर्श पश्यामिव नैषधः पथा-
मथाश्रितोद्ग्रीविकमुन्नतैर्गृहैः॥ १२१॥

पुरीं निरीक्ष्यान्यमना मनागिति
प्रियाय भैम्या निभृतं विसर्जितः।
ययौ कटाक्षः सहसा निवर्त्तिना
तदीक्षणेनार्द्धपथे समागमम्॥ १२२॥

पूर्त्तिहत्तिभि. पूरणव्यापारैः ररक्षि रक्षिता परचित्तानुरञ्जनाय सपत्नं रथ्युपासते साध्य इति भावः॥ १२०॥

असारेति। अथ नैषधो नलः असारा निराहारा वलयः ह नीलमालिका एव तोरणानि यस्याः ताम् अयएव निजाह्वियोगाद्वलवि हात् लम्बितालकां सत्काराभावादिहसस्त कुन्तलामिवस्थिता त्युत्प्रेक्ष उन्नतैर्गृहैः प्रासादैराश्रिता उद्ग्रीविका उद्ग्रीवीभवन यस्मिन् कर्म तद्यथा उद्ग्रीवयतेस्तत्करोतीति णयन्ताद्भावार्थनिर्देशे ण्वुल् कात्पूर्वस्ये कारः पथां जनागमनमार्गाणां कृद्योगात्कर्मणि षष्ठी। पश्यतीति प दृष्टि मिव स्थिता मित्युत्प्रेक्षा। पाघ्रादिनाध्म प्रत्यये पुनरन्येन पाघ्रा नाद्ये. पश्यादेशः। पुरीं पुरं ददर्श प्रोषितभर्तृकाः लम्बालकाः मार्गान् प्रतीक्षन्त इति भावः॥ १२१॥

पुरीमिति। मनागपि पुरीं निरीक्ष्य अन्यमना अन्यासक्त इति हेतोः प्रियाय भैम्या निभृतं गूढं विसर्जितः तद्दृष्टिपरिग प्रक्षितः कटाक्षः सहसानिवर्त्तिना भैमीभयान्निवृत्तेन तदीक्षणेन न सह अर्धपथेन समागमं ययौ उभावप्यन्योन्याभिप्रायं जग्मतुरि त्यपदपि भर्त्तुरन्यासक्तं न सहते सा सोऽपि तथैव तां मनुवर्त्ते भावः॥ १२२॥

अथ नगरधृतैरमात्यरत्नैः
पथि समियाय स जाययाऽभिरामः ।
मधुरिव कुसुमश्रिया सनाथः
क्रममिलितैरलिभिः कुतूहलोत्कैः ॥ १२३ ॥

कियदपि कथयन् स्ववृत्तजातम्
श्रवणकुतूहलचञ्चलेषु तेषु ।
कियदपि निजदेशवृत्तमेभ्यः
श्रवणपथं स नयन् पुरीं विवेश ॥ १२४ ॥

अथ पथि पथि लाजैरात्मनो बद्धवल्ली-
मुकुलकुलसकुल्यैः पूजयन्त्यो जयेति ।
क्षितिपतिमुपनेमुस्तच्छ्वाना जनाना-
ममृतजलमृणालीसौकुमार्य्यं कुमार्य्यः ॥ १२५ ॥

अथेति। अथ जायया अभिरामो रमणीयः स नलः कुसुमश्रिया सनाथ पुष्पसम्पदा युक्तो मधुर्वसन्तः क्रमेणानन्तर्येण मिलितैः कुतूहलोत्कैः विनोदोत्सुकैः अलिभिरिव नगरे धृतैः संरक्षिताय स्थितैः ध्रियन्तः कर्त्तरि क्तः। अमात्यरत्नैः मन्त्रिवर्य्यैः सह पथि नगरपथे मार्गे समियाय सङ्गतः ॥ १२३ ॥

कियदिति। स नलः श्रवणकुतूहलेन चञ्चलेषु व्यग्रेषु तेष्वमात्येषु विषये स्ववृत्तजातं स्वचरितस्वरूपं कियदपि स्तोकं कथयन् तथा निजदेशवृत्तं स्वराष्ट्रवृत्तान्तम् एभ्यः सकाशात्कियदपि किञ्चिच्छ्रवणपथं नयन् शृण्वन् पुरीं विवेश ॥ १२४ ॥

अथेति। अथ पथि पथि अमृतजलस्य या मृणाली बिसतन्तुस्तद्वत् सौकुमार्यं दधानाः कोमलाङ्ग्यः कुमार्य्यो नार्य्यः आत्मनो बद्धवल्लीनां मुकुलकुलसकुल्यैः मुकुलोत्करतुल्यैर्लाजैर्जयेति जयशब्दपूर्वं पूजयन्त्यः जनानां मध्ये तं क्षितिपतिं नलम् उपनेमुरुपतस्थुरित्यर्थः ॥ १२५ ॥

अभिनवदमयन्तीकान्तिजालावलोक-
प्रवणपुरपुरन्ध्रीवक्त्रचन्द्रान्वयेन।
निखिलनगरसौधाट्टावलीचन्द्रशालाः
क्षणमिव निजसंज्ञां सान्वयामन्वभूवन्॥ १२६॥

निषधनृपमुखेन्दुश्रीसुधां सौधवाता-
यनविवरगरश्मिश्रेणिनालोपनीताम्।
पपुरतुलपिपासापांशुलत्वोपरागा-
ण्यखिलपुरपुरन्ध्रीनेत्रनीलोत्पलानि॥ १२७॥

अवनिपतिरथार्द्रः स्त्रैणपाणिप्रवाल-
स्खलितसुरभिलाजव्याजभाजः प्रतीच्छन्।
उपरि कुसुमवृष्टीरेष वैमानिकाना-
मभिनवकृतभैमीसौधभूमिं विवेश॥ १२८॥

---

अभिनवेति। निखिलासु नगरे सौधानामट्टालकपङ्क्तिषु चन्द्रशाला- चन्द्रशाला शिरोगृहमिति हलायुधः। अभिनवस्य दमयन्त्याः कान्तिजालस्य सौन्दर्यराशेरवलोकप्रवणानां दर्शनतत्पराणां पुरपुरन्ध्रीणां पौराङ्गनानां वक्त्रचन्द्रैरन्वयेन योगेन क्षणं निजां संज्ञां चन्द्रशालाभिधानं सान्वयम् चन्द्राणां शालेत्येव सूचितार्थां मन्वभूवन्निव॥ १२६॥

निषधेति। अतुलया पिपासया पांशुलत्वं तदेव उपरागः उप- रञ्जो येषां तान्यखिलपुरपुरन्ध्रीणां पौराङ्गनानां वक्त्रचन्द्रे नेत्राण्येव नीलोत्पलानि सौधवातायनविवरे गच्छन्तीति तद्गताभिः रश्मीनां नयनरश्मीनां श्रेणिभिरेव नालैः उपनीतामाकृष्टामपि निषधनृपस्य मुखेन्दुं तृष्णया सकलं पपुः अद्राक्षुरित्यर्थः॥ १२७॥

अवनीति। एषः अवनीपतिः आर्द्रोऽपि उपरिप्रदेशेषु ये स्त्रैणाः स्त्री- समूहाः स्त्रीपुंसाभ्यां नञ्स्नञादिना नञ्प्रत्ययः। तेभ्यः पाणिप्रवालेभ्यः स्खलिता ये सुरभयः सुगन्धयो लाजास्तद्व्याजभाजस्तद्भाजः वैमानि-

इति परिणयमित्थं यानमेकत्र याने
दरचकितकटाक्षप्रेक्षितं चानयोस्तत्।
दिवि दिविषदधीशाः कौतुकेनावलोक्य
प्रणिदधुरिव गन्तुं नाकमानन्दमान्द्राः ॥ १२९ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गोऽगमत् षोडशः ॥ १३० ॥

कानां विमानै श्चरतां देवानां चरतीति ठक्। उपर्युपरिष्टात् कुसुम-वृष्टीः प्रतीच्छन् स्वीकुर्वन्नभिनवकृतां प्रत्यग्रनिर्मितां भैम्याः सौधभूमिं विवेश ॥ १२८ ॥

इतीति। अनयोर्दमयन्तीनलयोरित्थमेवंविधं परिणयं विवाह-मियमेकत्र रथे यानं यात्रामित्थं पूर्वोक्तं दरचकितमीषच्चकितस्वभावं कटाक्ष-प्रेक्षितं कटाक्षवीक्षणं च दिव्याकाशे दिविषदामधीशा देवा अवलोक्य अ-थानन्दमान्द्राः आनन्दपूर्णाः सन्तः नाकं स्वर्गलोकं गन्तुं प्रणिदधुः चिन्त-यामासुः ॥ १२९ ॥

श्रीहर्षमिति। चतुर्दशतयीं चतुर्दशावयवां चतुर्दशविधामित्यर्थः सङ्ख्याया अवयवे तयप् टिड्ढाणञ् द्वयसज्दघ्नञ्मात्रच् तयप्ठक्ठञ्कञ्क्वरप् इत्यादिना ङीप्। विद्यां विदद्भिः विपश्चिद्भिः चतुर्दश विद्या-स्थानानि जानद्भिः काश्मीरैः काश्मीरदेशीयैर्विद्वद्भिः महिते पूजिते तद्भुवि श्रीहर्षोत्पन्ने तद्विरचित इत्यर्थः। षोडशानां पूरणः षोडशः पूरणे डट्। गतमन्यत् ॥ १३० ॥

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्याय कोलाचल-मल्लिनाथसूरिविरचितायां जीवातुसमाख्यायां नैषधव्याख्यायां षोडशः सर्गः समाप्तः ॥ १६ ॥

# नैषधचरितम् ।

## सप्तदशः सर्गः

अथारभ्य वृथाप्रायं धरित्रीधावनश्रमम् ।
सुराः सरस्वदुल्लोललीला जग्मुर्यथागतम् ॥ १ ॥
भैमीमप्यन्यभुवस्तस्मै चिरं चित्ते धृतामपि ।
विद्यामिव विनीताय न विषेदुः प्रदाय ते ॥ २ ॥
कान्तिमन्ति विमानानि भेजिरे भासुराः सुराः ।
स्फटिकाद्रेस्तटानीव प्रतिबिम्बा विवस्वतः ॥ ३ ॥

---

अथेति । अथ नागलोकजिगमिषानन्तरं सुरा इन्द्रादयः वृथाप्रायमिति मृदूक्तिः व्यर्थमित्यर्थः धरित्रीधावनश्रमं भूभ्रमणायासमारभ्य कृत्वा सरस्वदुल्लोलानां समुद्रमहोर्मीणां लीलेव लीला येषां ते सन्तः यथागतं जग्मुः । यथा वृथैव सागरतरङ्गास्तटं धावित्वा यथागतं गच्छन्तीति तद्वद्गता इत्यर्थः ॥ १ ॥

भैमीमिति । ते देवाश्चिरं चित्ते धृताम् आकाङ्क्षितामपि तां भैमीं भुवः पत्ये नलाय विनीताय परिश्रिताय विद्यामिव प्रदाय न विषेदुश्च न हि महान्तो दत्त्वानुतापिनश्च न तेषामदेयमस्ति भावः ॥ २ ॥

कान्तिमन्तीति । भासुराः भास्वराः इन्द्रादयः कान्तिमन्ति दीप्तानि विमानानि व्योमयानानि विवस्वतोऽर्कस्य प्रतिबिम्बाः स्फटिकाद्रेः कैलासस्य तटानीव भेजिरे एतेन विमानानां तदधिष्ठातॄणां च अतितेजस्वित्वमुक्तम् ॥ ३ ॥

जवाज्जातेन वातेन बलाकृष्टबलाहकैः ।
श्वसनात् स्वस्य शीघ्रत्वं रथैरेषामिवाकथि ॥ ४ ॥
क्रमाद् दवीयसां तेषां तदानीं समदृश्यत ।
स्पष्टमष्टगुणैश्वर्य्यात् पर्य्यवस्यन्निवाणिमा ॥ ५ ॥
ततान विद्युता तेषां रथे पीतपताकताम् ।
लब्धकेतुशिखोल्लेखा लेखा जलमुचः क्वचित् ॥ ६ ॥
पुनः पुनर्मिलन्तीषु पथि पाथोदपंक्तिषु ।
नाकनाथरथालम्बि बभूवाभरणं धनुः ॥ ७ ॥

जवादिति । जवाज्जितवेगाज्जातेन वातेन बलादाकृष्टा बलाहका मेघा यैस्तेषामिन्द्रादीनां रथैर्विमानैः स्वस्यात्मनः श्वसनात् शीघ्रत्वं वायुवेगत्वमकथीवेत्युत्प्रेक्षा अन्यथा कथं तथा मेघाकर्षणमिति भावः. कथेश्चौरादिकात्कर्मणि लुङ् मित्वाद्ध्रस्वत्वम् ॥ ४ ॥

क्रमादिति । क्रमाद्दवीयसां दूरीभवतां सतां दूरयुवह्रस्वेत्यादिना यणादिपरलोपः पूर्वगुणश्च । तेषामिन्द्रादीनां तदानीं दूरीभावकाले अणिमा अणुत्वम् अष्टगुणमणिमाद्यष्टमगुणं यदैश्वर्यं सामर्थ्यं तस्मात्प्रकाशात् पर्यवस्यन् स्वयमेव परिशिष्यमाणमिव स्पष्टं समदृश्यत सन्दृष्टं दूरे अणुत्वेनावभासादियमुत्प्रेक्षा ॥ ५ ॥

ततानेति । क्वचित्प्रदेशे जलमुचो मेघस्य लेखा लब्धैः केतुशिखाभिर्ध्वजाग्रैरुल्लेखा विदारणं यस्याः सा सती विद्युता करणेन तेषामिन्द्रादीनां रथे पीताः पीतवर्णाः पताका येषां तेषां भावः स्तत्ता तां ततान ध्वजदण्डाग्रोल्लेखनेनोत्था स्तडितो रथेषु पीतपताका इव रेजुरित्यर्थः ॥ ६ ॥

पुनः पुनरिति । नाकनाथरथालम्बि इन्द्ररथस्थं धनुः पथि पुनः पुनर्मिलन्तीषु संसृज्यमानासु पाथोदानां मेघानां पङ्क्तिषु आभरणं बभूव यद्धनोपष्टम्भ सङ्गच्छते तस्य तस्याभरणं बभूवेत्यर्थः । एवं

जले जलदजालानां वज्रिवज्रानुबिम्बनैः।
जाने तत्कालजैस्तेषां जाताऽग्निसनाथता॥ ८॥
स्फुटं मार्त्तण्डवंश्यानां कुलच्छत्रं महीभुजाम्।
चक्रे दण्डभृतश्चुम्बन् दण्डखण्डरविं क्वचित्॥ ९॥
नलभीमभुवोः प्रेम्णि विस्मिताया बभौ दिवः।
पाशिपाशः शिरःकम्पस्रस्तभूषश्रवःश्रियम्॥ १०॥
पवनस्कन्धमारुह्य नृत्यत्तरकरः शिखी।
अनेन प्रापि भैमीति भ्रमभङ्गे नभःसदाम्॥ ११॥

त्विमेन्द्रधनुर्योगेना अद्य सुरेन्द्रधनुर्योगाभाव इति भावः अथवा तादृशासम्बन्धे सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः॥ ७॥

जल इति। जलदजालानां मेघवृन्दानां जले तत्कालजैस्तत्कालजातैः वज्रिवज्रस्य इन्द्रकार्मुकस्यानुबिम्बनैः प्रतिबिम्बैस्तेषां जलदजालानामग्निसनाथता वज्रसाहित्यं रोहितयोगित्वमिति यावत् इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितमित्यमरः। जाता जाने इत्युत्प्रेक्षायाम्॥ ८॥

स्फुटमिति। क्वचित्प्रदेशे दण्डभृतो यमस्य दण्डो गदा खण्डरविं सूर्यं चुम्बन् सूर्यमण्डलं स्पृशन्नित्यर्थः मार्त्तण्डः सूर्यमित्रः तद्वंश्यानां महीभुजां कुलस्य छत्रं चक्रे दण्डसंयोगादर्कमण्डलं तद्वंश्यराजकुलस्योद्धृतं छत्रमिव बभौ इत्यर्थः। स्फुटमित्युत्प्रेक्षा॥ ९॥

नलेति। पाशिनो वरुणस्य पाशः पाशवलयः नलभीमभुवोः नलभैम्योः प्रेम्णि अन्योन्यानुरागे विषये विस्मितायाः विस्मयाविष्टायाः दिवो नभसः शिरःकम्पेन स्रस्तभूषस्य गलितावतंसस्य श्रवसः श्रोत्रस्य श्रियं शोभां दधौ अत्र श्रियमिव श्रियमिति सादृश्याक्षेपान्निदर्शनाभेदः॥ १०॥

पवनेति। पवनस्कन्धं वायुस्कन्धाख्यं नभोदेशमारुह्य अतएव नृत्यत्तराः अतिशयेन नृत्यन्तः कराः अग्रयो हस्ता यस्य सः शिखी अग्नि

तत्कर्णा भारती दूना विरहाद्भैमजागिराम् ।
अध्वनि ध्वनिभिर्वैणैरनुकल्पैर्व्यनोदयत् ॥ १२ ॥

अथायान्तमवैचन्त ते जनौघमभित्विषम् ।
तेषां प्रत्युद्गमप्रीत्या मिलद्व्योमेव मूर्त्तिमत् ॥ १३ ॥

अद्राक्षुराजिहानं ते स्मरमग्रेसरं सुराः ।
अक्षाविनयशिक्षार्थं कलिनेव पुरस्कृतम् ॥ १४ ॥

नैमःसदां नभश्चराणाम् अनेनाग्निना नून भैमी प्रापि प्राप्ता अन्यथा कथमेतज्ज्ञस्मया मिति भ्रमं चक्रे भ्रान्तिं जनयामासेत्यर्थः ॥११॥

तदिति। भारती सरस्वती भीमजागिरां विरहादभाव दूना परितप्ता तेषां देवानाम् अनुकल्पैः कृत्रिमैर्वद्भैमीगिरां प्रतिनिधिभिः मख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः इत्यमरः। वैणैः वीणा-सम्बन्धिभिः तस्येदमित्यण्। ध्वनिभिः मध्ये व्यनोदयत् विनोदित-वती ॥ १२ ॥

अथेति। अथ देवा आयान्तमागच्छन्त अभेरिवत्विट् यस्य तमभि-त्विषम् अग्निशोभं जनौघ जनसमाजं तेषां देवानां प्रत्युद्गमप्रीत्या कौतुकान्मिलदागच्छन्मूर्त्तिमदेहयुक्तं व्योममाकाशमिवेत्युत्प्रेक्षा अवैक्षन्त अपश्यन् ॥ १३ ॥

अद्राक्षुरिति। ते सुराः इन्द्रादयः आजिहान मागच्छन्तम् ओहाङ्-गताविति धातोर्लटः शानजादेशः। अग्रेसरं सङ्घाग्रवर्त्तिनम् अतएव अक्षाणा मिन्द्रियाणां च पाचकाणां च अथो रथस्यावयवे पाचकेऽप्यक्षमि-न्द्रिय मिति विश्वः। अविनयस्य दुर्व्यापारस्य शिक्षार्थं मभ्यासार्थं कलिना कलिपुरुषेण पुरस्कृतं पूजितम् अग्रतः कृतमिव स्थितं स्मरं काम मद्राक्षु दृशेर्लुङि इरितोवेति विकल्पादङभाव पक्षे सिचि वृद्धिः ॥ १४ ॥

अगस्त्येति। अगस्त्यार्थं मगस्त्यागमनार्थमित्यर्थः तृणप्रायाः तृण-प्रायप्राणाः प्राणानविगणय्य अगस्त्यागन्तार इत्यर्थः। पुरस्कृते

अगस्त्यार्थं तृणप्रायाः पृष्ठस्त्रीकृतभीह्रियः।
शम्भलीभुक्तसर्वस्वा जना यत्पारिपार्श्विकाः॥ १५॥
विभर्त्ति लोकजिद्भावं बुद्धस्य स्पर्द्धयेव यः।
यस्येशतुलयेवात्र कर्तृत्वमशरीरिणः॥ १६॥
ईश्वरस्य जगत्कृत्स्नं सृष्टिमाकलयन्निमाम्।
अस्ति योऽस्त्रीकृतस्त्रीकस्तस्य वैरमनुस्मरन्॥ १७॥
चक्रे शक्रादिनेत्राणां स्मरः पीतनलश्रियाम्।
अपि दैवतवैद्याभ्यामचिकित्स्यमरोचकम्॥ १८॥

पृष्ठतः कृते भीह्रियौ यैस्ते लज्जाभयवर्जिता इत्यर्थः शम्भलीभिः धात्रीभिर्भुक्तं सर्वस्वं धनं येषान्ते कुट्टनी शम्भली समेत्यमरः। एवं विधा जनाः यस्य स्मरस्य पारिपार्श्विकाः परिपार्श्ववर्त्तिनः परिजना इत्यर्थः। परिमुखञ्चेति चकारात् ठक्॥ १५॥

विभर्त्तीति। य स्मरो बुद्धस्य सम्बन्धसामान्ये षष्ठी। बुद्धेनेत्यर्थः। स्पर्धयेव लोकजिद्भावं लोकजितत्वं विभर्त्ति यस्य स्मरस्य ईशतुलया ईश्वरसाम्यापेक्षयेत्यर्थः। शरीरं न भवतीत्यशरीरि तस्य अशरीरस्य सतो ऽत्र लोके कर्तृत्वं एकत्र जेतृत्वम् अन्यत्र स्रष्टृत्वं उपादानादिगोचरज्ञानादिमत्त्वा देवेश्वरस्य कर्तृत्वं शरीरमतन्त्रमिति तार्किकाः। पराभिभूता चार्वाका तत्साम्यायतिद्वदाचरन्तीति भावः॥ १६॥

ईश्वरस्येति। स्मरः कृत्स्नं जगत् ईदृशीं स्त्रीपुंसात्मिका मित्यर्थः। ईश्वरस्य सृष्टिमाकलयन्नधिगच्छन् तस्य ईश्वरस्य वैरमनुस्मरन् स्त्रियो न भवन्तीत्यस्त्रियो अस्त्राणि कृता अस्त्री कृता। अभूततद्भावे च्विः अस्त्रीकृता स्त्रियो येन सोऽस्त्री कृतः अनुनद्युतः कप्। अस्ति वर्त्तते ईश्वरवैरात् स्त्रीणां मोऽस्त्रकृत स्त्रीत्वमस्त्रत्वञ्चाकरोदित्यर्थः॥ १७॥

चक्र इति। स्मरः पीतनलश्रियां दाक्षामृतनलसौन्दर्याणां

यत्तत् क्षिपन्तमुत्कम्प्यमुत्थायुकमथारुणम् ।
बबुधुर्विबुधाः क्रोधमाक्रोशक्रोशघोषणम् ॥ १९ ॥
यमुपासन्त दन्तौष्ठक्षतासृक्क्षिप्यचक्षुषः ।
भ्रुकुटीफणिनीनादनिभनिश्वासफूत्कृताः ॥ २० ॥
दुर्गं कामाशुगेनापि दुर्लङ्घ्यमवलम्ब्य यः ।
दुर्वासोहृदयं लोकान् सेन्द्रानपि दिधक्षति ॥ २१ ॥

शक्रादिनेत्राणामिन्द्रादिचक्षुषां दैवतवैद्याभ्यामचिकित्स्यं चिकित्सितु मशक्यं न रोचयन् इत्यरोचकं रोगविशेषं चक्रे नलरूपदर्शिभ्यस्तेभ्यः स्मररूपं नारोचतेत्यर्थः । स्मरादपि रमणीयत्वात्तस्येति भावः ॥ १८ ॥

यदिति । अथ स्मरदर्शनानन्तरं विबुधा देवा यत्तद्यत्किञ्चिद्वस्तु क्षिपन्तं प्रेरयन्तम् उत्कम्प्यं कम्पितं आक्रोशस्य क्रोश घोषणा उच्चैर्घोषः यस्य तं दूरादाक्रान्तघोषणं कर्णमित्यर्थः । क्रोधं क्रोधपुरुषं बुबुधुः ददृशुरित्यर्थः । बुधे भौवादिकाल्लिट् ॥ १९ ॥

यमिति । यं क्रोधं दन्तैरोष्ठस्य क्षतेन यदसृग्रक्तं तच्छ्रेण्यानि तत्कल्पानि चक्षूंषि येषान्ते भ्रुकुट्येव फणिनी भुजङ्गी तन्नादनिभानि तत्फूत्कारकल्पानि निश्वासफूत्कृतानि येषान्ते ईदृशाः परिजनाः उपासत आसेवन्त । तत्सेवका अपि तादृशा एवेत्यर्थः ॥ २० ॥

दुर्गमिति । यः क्रोधः कामाशुगेन कामबाणेनापि दुर्लङ्घ्यं दुरतिक्रमं दुर्वाससो मुने हृदयमेव दुर्गमवलम्ब्य सेन्द्रान् सनाथानपि लोकान् दिधक्षति दग्धुमिच्छति दहतेः सनन्ताल्लट् ढत्वकत्वभावाः । दुर्लङ्घ्यदुर्गावलम्बनो दुर्जयोऽस्तीति भावः । नित्यक्रुद्धो भगवान् दुर्वासा दुर्धर्षश्चेति प्रसिद्धम् ॥ २१ ॥

वैराग्यमिति । यः क्रोधः उच्चैरपि रञ्जनं रागं रक्तवर्णतां जनयन्नपि वैराग्यं तद्राहित्यं करोतीति विरोधः । नैस्पृह्यं करोतीति तदा-

वैराग्यं यः करोत्युच्चैरञ्जनं जनयन्नपि ।
सूते सर्वेन्द्रियाच्छादि प्रज्वलन्नपि यस्तमः ॥ २२ ॥
पक्षेषु विजयासक्तौ भवस्य क्रुध्यतो जयात् ।
येनान्यविगृहीतारिजयकालनयः श्रितः ॥ २३ ॥
हस्तौ विस्तारयन्निभ्ये बिभ्यद्दर्पपथस्थवाक् ।
सूचयन् काकुमाकूतैर्लोभस्तत्र व्यलोकि तैः ॥ २४ ॥

भासीकरणाद्विरोधाभासोऽलङ्कारः । क्रुद्धस्य न कस्याप्यनुराग इति भावः । क्रोधः प्रज्वलन् प्रकाशमानोऽपि अन्तः सन्तापश्च सर्वेन्द्रियाणामाच्छादयतीति तदाच्छादि तदावरकत्तमो मोहमन्धकारञ्च सूते जनयति क्रोधान्धो न किञ्चित्पश्यतीति भावः । अत्र प्रज्वलत्तमः शब्दयोः अर्थभेदेन विरोधपरिहारात् पूर्ववदलङ्कारः ॥ २२ ॥

पक्षेष्विति । येन क्रोधेन पक्षेषु विजयासक्तौ शरविग्रहसक्तिकाले क्रुध्यतः स्मराय कुप्यतः भवस्य कर्मणि षष्ठी । जयाद्धेतोरनेन अन्येन कार्यान्तरेण विगृहीतस्य विरुद्धस्य अरेः जये कालनयः श्रितः तत्कालोचितां नीतिमाश्रितः । स्मरसंहारकाले स्मरहरं क्रोधोऽजिगाय तत्काले तस्य क्रोधवशीकृतत्वादिति भावः । अत्र कामन्दकः वलिना विगृहीतस्य विधिवत् सन्धिवर्त्तिनः । कुर्वतापचयं शत्रोरात्मोच्छ्रित्तिविग्रहयेति ॥ २३ ॥

हस्ताविति । तत्र सङ्घे तैरिन्द्रादिभिः इभ्ये धनिके इभ्य आढ्यो धनी स्वामीत्यमरः । हस्तौ विस्तारयन् याच्ञामुद्रया प्रसारयन् बिभ्यत्त्रस्यन् अतएवार्द्धपथस्थवागर्द्धोक्तवाक्यम् आकूतैः वितर्कैः काकुं विकृतस्वरं सूचयन् गद्गदः सन्नित्यर्थः । लोभो व्यलोकि विषयत्वात् दृष्ट इत्यर्थः ॥ २४ ॥

दैन्येति । यस्य लोभस्यानुजीविनोऽनुचराः दैन्यं कार्पण्यं स्तैन्यं स्तेयं स्तेनाद्यन्नलोपश्चेत्यत्र स्तेनादिति योगविभागात्कार्पणिकः ष्यङ्-

दैन्यस्तैन्यमया नित्यमत्याहारामयाविनः ।
भुञ्जानजनसाकूतपश्या यस्यानुजीविनः ॥ २५ ॥

धनिदानाम्बुवृष्टेर्यः पात्रपाणावग्रहः ।
स्वान् दासानिव हा निःस्वान्विक्रिणीतेऽर्थवत्सु यः ॥ २६ ॥

एकद्विकरणे हेतू महापातकपञ्चमे ।
न तृणौ मन्यते कोपकामौ यः पञ्च कारयन् ॥ २७ ॥

यः सर्व्वेन्द्रियमग्न्नापि जिह्वां बह्ववलम्बते ।
तस्यामाचार्य्यकं याच्ञापटवे वटवेऽर्जितुम् ॥ २८ ॥

प्रत्ययः । तदुभयमया तत्प्रचुरा नित्यं सर्वदा अत्याहारेण बहुभक्षित्वेनामया-
विनो रोगिणः सर्वत्रामयस्येत्यप मक्षुग्रानाद् दीर्घश्च । भुञ्जानाना मश्नतां
जनानां स कूतं स भिप्रायं पश्यन्तीति पश्याः द्रष्टारः पाम्रादिना शप्र-
त्ययः पश्याद्रेयश्च ॥ २५ ॥

धनिदानेति । यो लोभः पात्रपाणौ सम्प्रदानीयहस्ते धनिनां
दानाम्बुवृष्टेः दानोदकवर्षस्य अवग्रहः प्रतिबन्धकस्वरूपः । तथा निः-
स्वान् धनहीनान् स्वान् स्वजनान् पुत्त्रदारादीन् दासानिव अनायास-
देयानिव अर्थवत्सु आढ्येषु विक्रीणीते वितरति लोभादिति भावः ।
हा इति विषादे अहो लोभस्य वैचित्र्यमयी शक्तिरिति ॥ २६ ॥

एकेति । यो लोभो महापातकानां ब्रह्महत्यादीनां पञ्चके पञ्चकमध्ये
एकं च द्वे च एकद्वानि सङ्ख्येयद्वन्द्वे बहुत्वेऽपजननाद्बहुवचनं तेषा-
मेकद्विनां करणे यथासङ्ख्यं एकस्य ब्रह्महननस्य द्वयोः पानगमयोः
करणे हेतू इत्यर्थः । कोपकामौ स्वयं पञ्चापि पातकानि धारयन् तृणेन
मन्यते नाद्रियत इत्यर्थः । न हि बहुकारी स्वल्पकारिणं गणयतीति
भावः । कामक्रोधाभ्यामपि पापिष्ठो लोभ इति रहस्यम् ॥ २७ ॥

य इति । यो लोभः सर्वेन्द्रियाणि मग्नाश्रयो यस्य स सन्नपि जिह्वां
बहु प्रचुर मवलम्बते प्रायेण तथैवास्त इत्यर्थः । किमर्थं तत्राह तस्यां

पथ्यां तथ्यामनुल्लङ्घ्य मन्दा बन्धुप्रबोधनाम्।
शून्यमाश्लिष्य नोज्झन्तं मोहमेत्यन्त हन्त ते॥ २९॥
श्वः श्वः स्वप्राणप्रयाणेऽपि न स्मरन्ति स्मरद्विषम्।
मग्नाः कुटुम्बजम्बाले बालिशा यदुपासिनः॥ ३०॥
पुंसामलब्धनिर्वाणज्ञानदीपमयात्मनाम्।
अन्तर्ग्लापयति व्यक्तं यः कज्जलवदुज्ज्वलम्॥ ३१॥
ब्रह्मचारिव्रतस्थायियतयो गेहिणं यथा।
तथा यमुपजीवन्ति क्रोधलोभमनोभवाः॥ ३२॥

जिह्वायाः मध्ययनशालाभूतायामिति भावः। याचञापटवे भिक्षानिपुणाय शिष्याय बटवे ब्राह्मणाय आचार्यकं गुरुत्वमर्जितुमिवेत्युत्प्रेक्षा। गुरवस्तु अध्ययनशालायां स्वशिष्येभ्यो विद्यार्थिनां ददतीति प्रसिद्धम्। अतो-पमोत्प्रेक्षाभ्यां सजातीयकाभ्यां वाक्यार्थयोः पदहेतुत्वात् पदार्थहेतुक-काव्यलिङ्गमलङ्कारो सङ्कीर्यते इत्यङ्गाङ्गिभावस्य परस्परसम्बन्धेनाङ्गाङ्गि-भाव.॥ २८॥

पथ्यामिति। ते देवाः मन्दा मूढस्वभावाः अतएव पथ्यां हितां तथ्यां सत्यां बन्धुप्रबोधनां सुहृदुपदेशम् अनुल्लङ्घ्यमस्वीकुर्वाणं शून्य यत्किञ्चित्तुच्छं वस्त्वाश्लिष्य आदाय नोज्झन्तं मोक्षादत्यजन्त अतएव हन्तेति खेदः मोहं एत्यन्त॥ २९॥

श्वः श्वः इति। यदुपासिनो यत्सेवकाः बालिशा मूर्खा अतएव कुटु-म्बजम्बाले पुत्रकलत्रादिपङ्के मग्ना श्वः श्वः परश्वोवेत्यर्थः। प्राणानां प्र-याणे निष्क्रमणे सत्यपि स्मरद्विषमीश्वरं न स्मरन्ति॥ ३०॥

पुंसामिति। यो मोहः अलब्धोऽप्राप्तो निर्वाणज्ञानदीपमयः सुख-चित्प्रकाशात्मकः आत्मा यैस्तेषाम् अनात्मज्ञानानां पुंसा मुज्ज्वलं नि-र्मलम् अन्तरन्तःकरणं कज्जलवदञ्जनवद्यथा स्फुटं ग्लापयति मोक्षसा-धनात्मसाक्षात्कारविघातकोऽयं दुरात्मेत्यर्थः॥ ३१॥

ब्रह्मचारीति। ब्रह्मचार्यादयस्त्रयः आश्रमा गेहिणं यथा क्रोधा-दयस्त्रयो यं मोहमुपजीवन्तीति मोहमूलास्ते तान्निवृत्तौ निवर्त्तन्त इति भावः॥ ३२॥

जाग्रतामपि निद्रा यः पश्यतामपि योऽन्धता।
श्रुते सत्यपि जाड्यं यः प्रकाशेऽपि च यस्तमः॥ ३३॥
चिह्निताः कतिचिद्देवैः प्राचः परिचयादमी।
अन्ये न केचनाचष्टमेनःकश्मलमेचकाः॥ ३४॥
ततोदीर्णे इवार्णोधौ सैन्येऽभ्यर्णमुपेयुषि।
कस्याप्याकर्णयामासुस्ते वर्णान् कर्णकर्कशान्॥ ३५॥
ग्रावोन्मज्जनवद्यज्ञफलेऽपि श्रुतिसत्यता।
का श्रद्धा तत्र धीदग्धाः! कामाध्वा यत्खिलीकृतः॥३६॥

जाग्रतामिति। यो मोहो जाग्रतां प्रबुद्धानाम् अपि निद्रा यः पश्यतां चक्षुष्मतां मप्यन्धता तद्राहित्यं यः श्रुते शास्त्रे श्रवणे सत्यपि जाड्यं मौढ्यं यः प्रकाशे तेजसि सत्यपि तमश्च निद्रादिचतुष्टयकार्यकारित्वात्तद्वज्ज गरचक्षुराद्यनिवर्त्यत्वाच्च प्रसिद्धनिद्रादिचतुष्टयविलक्षणे कापि तत्सृष्टिरित्यर्थः॥ ३३॥

चिह्निता इति। कतिचिदमी पूर्वोक्तस्मरादयः अन्ये च आचष्टमाशिखमेनसः कश्मलेन मेचकाः मलिनाः केचन देवैः कर्त्तृभिः प्राचः परिचयात् पूर्वानुभवजन्यसंस्कारात् चिह्निता लक्षिताः अतएव अमी ते इति प्रत्यभिज्ञाता इति यावत्॥ ३४॥

ततेति। उदीर्णे उच्छलिते अर्णोधौ अम्भोधाविव अभ्यर्णं समीपं उपेयुषि समीपं गते तत्र तस्मिन् सैन्ये ते देवाः कस्यापि कस्यचित् पुरुषस्य कर्णकर्कशान् कर्णकटून् वर्णान्वाक्यानि आकर्णयामासुः॥३५॥

अथ सप्तत्वारिंशता श्लोकैस्तानेव वर्णानाह ग्रावेत्यादि। हे धीदग्धाः! ग्रावदग्धाः! यज्ञफले स्वर्गादौ श्रुतिसत्यता ज्योतिष्टोमादिदेववाक्यप्रामाण्यं ग्रावोन्मज्जनवत् प्लावप्लवनवाक्यस्येव तद्देतदर्थे तत्र तादृशी श्रुतौ का श्रद्धा को विश्वासः यद्यस्क्रद्धया काम हा तृतीय पुरुषार्थमार्गः खिलीकृतः हेऽखिला प्रहृते समे इत्यमरः। प्रमाणं विना विज्ञाय तद्विरुद्धे न श्रद्धेय मित्यर्थः॥ ३६॥

केनापि बोधिसत्त्वेन जातं सत्त्वेन हेतुना ।
यद्वेदमर्मभेदाय जगदे जगदस्थिरम् ॥ ३७ ॥
अग्निहोत्रं त्रयी तन्त्रं त्रिदण्डं भस्मपुण्ड्रकम् ।
प्रज्ञापौरुषनिःस्वानां जीवो जल्पति जीविका: ॥ ३८ ॥
शुद्धं वंशद्वयीशुद्धौ पित्रोः पित्रोर्यदेकशः ।
तदनन्तकुलादोषाददोषा जातिरस्ति का ॥ ३९ ॥

केनेति । बोधिसत्त्वेन बुद्धेन बुद्धस्तु श्रीघनः शास्ता बोधिसत्त्वो विनायक इति यादवः । केनाप्यमहिम्ना जात भावेन । सएव अद्वयवचन इत्यर्थः । यद्यस्माद्वेदस्य कर्मकाण्डरूप विफलयोगनित्यात्मसाधकस्य ते मर्मभेदाय प्रामाण्यभङ्गाय सत्त्वेन हेतुना यत्सत्तत्क्षणिक मित्यनुमानेन जगदस्थिरं क्षणिकं जगदे गदितम् अतो न पारलौकिकसुखाशया इहलगत मैहिकं सुखं त्यक्तव्य मित्यर्थः ॥ ३७ ॥

सम्प्रति बृहस्पतिमतानुवादेन वैदिकं विहस्यति अग्निहोत्रमिति । अग्निहोत्र मग्निहोत्राख्यं कर्म त्रयी त्रिवेदी तन्त्रं तदर्थविचारात्मकं मीमांसाशास्त्रं त्रिदण्डं सन्न्यास. पालादिपाठान्तरप्रसक्तं । भस्मनः पुण्ड्र-कन्निर्यक्तिलकम् एतानि जीवो बृहस्पतिः प्रज्ञा पौरुषाभ्यां निःस्वानान्तर्हितानामित्यर्थः । जीविकाः जीवनोपायान् जल्पति ब्रूते अत्रास्ति परलोक इति निश्चयाद्धेतोश्चेष्टितमेव हित मिति भावः ॥ ३८ ॥

शुद्धमिति । यद्यतः कारणात्पित्रोर्मातापित्रोः परम्परयोर्मध्ये नि-धिरे सम्यग्भार्यायां हिंसन्ति पिता मातेत्येकस्येव । एकशः एकैक-स्यैव वंशद्वयीशुद्धौ उभयकुलशुद्धौ सत्यां शुद्धं पुत्रस्य शुद्धता भवति तत्तस्मादनन्तानां कुलानाम् अदोषाद्दोषराहित्य त्रिदोषा जातिः का-स्ति न कुत्रापीत्यर्थः । यथाहुः अन दाविक संसारे दुर्वारे मकरध्वजे । कुले च कामिनीमूले का जातिपरिकल्पनेति ॥ ३९ ॥

कामिनीवर्गसंसर्गैर्न कः सङ्क्रान्तपातकः ।
नाश्नाति स्नाति हा मोहात् कामक्षाममिदं जगत् ॥ ४० ॥
ईर्ष्यया रक्षतो नारीर्धिक् कुलस्थितिदाम्भिकान् ।
स्मरान्धत्वाविशेषेऽपि तथा नरमरक्षतः ॥ ४१ ॥
परदारनिवृत्तिर्या सोऽयं स्वयमनादृतः ।
अहल्याकेलिलोलेन दम्भो दम्भोलिपाणिना ॥ ४२ ॥
गुरुतल्पगतौ पापकल्पनां त्यजत द्विजाः ! ।
येषां वः पत्युरत्यक्ता गुरुदारग्रहे ग्रहः ॥ ४३ ॥

कामिनीति । किञ्च कामिनीवर्गस्य स्त्रीजातस्य संसर्गैः सन्निकर्षैः कः पुमान् संक्रान्तपातकोऽपि न सर्वोऽपि पातक्येव अतएवेदं जगत्कामेन कामुकदोषेण क्षामप्रतं क्षीणव्रतं प्रायो मः इति निष्ठातकारस्य मकारः । तथा मोहात् स्वदृतानाकलनान्नाश्नाति उपवसति स्नाति शुद्धत्ववद्ध्येव पुनर्व्रतानि चरतीत्यर्थः । हा इति खेदे किञ्चन व्रतवदृशे पाप्यं केनैव पातके सर्वनाशात् इति भावः ॥ ४० ॥

ईर्ष्येति । स्मरान्धत्वस्य अविशेषे समानेऽपि ईर्ष्यया असहिष्णुतया नारीं स्त्रियं रक्षतो निरुन्धतः तथा तद्वन्नरं पुरुषमरक्षतो अनिवारयतः कुलस्थित्या कुलवृत्तेन दम्भेन कैतवेन चरन्तीति दाम्भिकास्तान्कान् चरतीति ठक् । दम्भस्तु कैतवे कल्क इति विश्वः । धिक् धिगुपर्यादिषु इति द्वितीया । स्त्रीदोषादिव पुरुषदोषेऽपि कुलहाने रेकत्वाभिनिवेशे दम्भादन्यैको हेतु रिति भावः ॥ ४१ ॥

परेति । या परदारेभ्यो निवृत्तिः सोऽयं दम्भः अहल्याकेलिलोलेन गौतमस्त्रीरतिलालसेन दम्भोलिपाणिनेन्द्रेण स्वयमात्मा अनादृतः अतोन पारदार्यमनाचार इति भावः ॥ ४२ ॥

गुरुतल्पेति । किञ्च हे द्विजाः ! गुरुतल्पगतौ गुरुदारगमने तल्पं शय्याट्टदारेषु इत्यमरः । पापकल्पनां पापसम्भावनां त्यजत कुतः

पापात्तापा मुदः पुण्यात् परासोः स्युरिति श्रुतिः।
वैपरीत्यं ध्रुवं साक्षात्तदाख्यात बलाबले ॥ ४४ ॥
सन्देहेऽप्यन्यदेशाप्तेर्विवर्ज्यं वृजिनं यदि।
त्यजत श्रोत्रियाः! सत्रं हिंसादूषणसंशयात् ॥ ४५ ॥
यन्निवेदीविदां वन्द्यः स व्यासोऽपि जजल्प वः।
रामाया जातकामायाः प्रशस्ता हस्तधारणा ॥ ४६ ॥

येषां यः पत्नव तस्मात्सोमराजानो ब्राह्मणा इति श्रुतेः। गुरोर्बृहस्पते-र्दारपक्षे तद्भार्यागमने चन्द्रस्यैवरतिमहान्कष्टः एवमेवः तस्मादत्रापि न दोषबुद्धिः कार्येति भाव. ॥ ४३ ॥

पाप.दिति। परासोर्मृतस्य पुनः पापात्पापाचरणात्तापाः दुःखानि पुण्यात् पुण्याचरणान्मुदः सुखानि स्युरिति श्रुतिः। विधिनिषेधा श्रामगम्यं तदित्यर्थः। वैपरीत्यं परनगमनादिपापात् सुख तथा यज्ञादिपुण्या दुःखम् विपरीतफलं ध्रुव भवेत् एव साक्षात्त्वत् तदि-त्यव्ययं तयोरित्यर्थः। तयोः प्रत्यक्षागमयो बलाबले ख्यात न हे द्विजाः! कथयत पावस्वनवाक्यवत् प्रत्यक्षविरोध श्रुतिरिव दुर्बलेत्यर्थः ॥ ४४ ॥

सन्देह इति। हे श्रोत्रियाः! छान्दसाः! श्रोत्रियच्छन्दसौ समौ इत्य-मरः। श्रोत्रियश्छन्दोऽधीते इति छन्द सच्छन्दसोऽधीत इत्यर्थः। घियक्प्रत्ययेन च प्रत्ययः श्रोत्रभावश्च निपातनात् साधुः। अन्यदेशाप्तेस्तस्य देशान्तर-प्राप्तेः सन्देहेऽपि देशाचारादिना विप्रतिपत्तेरिति भावः। वृजिनं पारदार्यादिपापं कलुषं वृजनेनेऽस्त्रियामित्यमरः। विवर्ज्यं पातित्यदोष-त्वादपि परिहार्यत्वात् त्याज्यं यदि तर्हि हिंसादूषणसंशयात् वैध हिंसायामपि सांख्यादिभिः प्रत्यवाय स्वीकारादिति भावः। सत्र यज्ञं त्यजत पारदार्यादेः पुनरहिंसात्मकत्वात्प्रत्युत परहितकरत्वाच्च नक-चित्प्रत्यवाय इति भावः ॥ ४५ ॥

य इति। किञ्च यो व्यासस्त्रयाणां वेदानां समाहार स्त्रिवेदी

सुकृते वः कथं श्रद्धा सुरते च कथं न सा।
तत्कर्म पुरुषः कुर्य्याद्येनान्ते सुखमेधते॥ ४७॥
बलात् कुरुत पापानि सन्तु तान्यकृतानि वः।
सर्व्वान् बलकृतानर्थानकृतान् मनुरब्रवीत्॥ ४८॥
स्वागमार्थेऽपि मा स्मास्मिंस्तीर्थकाः! विचिकित्सत।
तं तमाचरतानन्दं स्वच्छन्दं यं यमिच्छथ॥ ४९॥

त्रिलोकीव प्रक्रिया। तद्धिरदं वयोदृशानां वन्द्यः सोऽपि जातकमायाः जाताभिन्नमायाः रामाय कृष्णधारणा करपङ्कजं प्रयस्ता कर्त्तव्येति प्रयस्ता वो युष्माकं जजल्प व्यक्तं सङ्कवान् स्वय चित्ताङ्गदार्निर्दिष्टत्वर्वीर्य्य-भार्य्यासु पुत्रोत्पादनादिति भावः। वक्ताधारोऽप्यत्र प्रमाण मित्यर्थः॥४६॥

सुकृत इति। सुकृते तपोयज्ञादौ वः कथं श्रद्धा विश्वासः सा श्रद्धा सुरते वः कथं न तत्रैव भवितव्य मित्यर्थः। कुतः पुरुषः तत्कर्म कुर्य्यादेव कर्मणामन्ते कर्मान्ते सुखं कर्म एधते वर्धते सुखार्थं कर्म कुर्य्या-दित्यर्थः। तच्च सुरतमेवानुभवसिद्धत्वात् न सुकृतं वैपरीत्यादिति भावः॥ ४७॥

• बलादिति। किञ्च बलात् बलात्कारात्पापानि कुरुत बलात्-कृतपापानि वो युष्माक मकृतानि सन्तु अकृतान्येव भविष्यन्तीत्यर्थः। कुतः सर्वान् बलकृतानर्थान् व्यापारानकृतान्मनुरब्रवीत् तस्माद्बलात्कृते कृतेऽपि दोषो नास्तीत्यर्थः। अत्र मनुः बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखि-तम्। सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत्। यद्यपि बलात्कृतं व्यव-हारपरमेतत् तथापि पापमकृतयता चार्वाकविषयतया प्रलप-तीति द्रष्टव्यम्॥ ४८॥

स्वेति। हे तीर्थकाः! शास्त्रिणः! मत्वर्थीयष्ठन् प्रत्ययः। तीर्थं शास्त्रेऽध्वरक्षेत्रोपायोपाध्यायमन्त्रिष्वित्यमरः। तस्मिन्ननुप्रोक्ते स्वागमार्थे बलात्कारलक्षणे स्वशास्त्रार्थेऽपि विचिकित्सत संश-

श्रुतिस्मृत्यर्थबोधेषु क्वैकमत्यं महाधियाम्।
व्याख्या बुद्धिबलापेक्षा सा नोपेक्ष्या सुखोन्मुखी ॥ ५० ॥
यस्मिन्नस्मीति धीर्देहे तद्दाहे वः किमेनसा।
क्वापि किन्तत् फलं न स्यादात्मेति परसाक्षिके ॥ ५१ ॥
मृतः स्मरति कर्म्माणि मृते कर्मफलोर्मयः।
अन्यभुक्तैर्मृते तृप्तिरित्यलं धूर्त्तवार्त्तया ॥ ५२ ॥

यिकाः विचिकित्सा तु संशय इत्यमरः। कितः सन्नन्तादप्रत्ययः अस्ते-र्लोटि धादेश। किन्तु यथाभिनन्दसि अथ तं तथा नन्द स्वच्छन्दं यथे-च्छमाचरत अनुभवतेत्यर्थः ॥ ४९ ॥

ननु मनुवचनस्य व्यवहारविषयत्वात् यथार्थ इत्याक्षेपन्न प्रत्याह श्रुतीति। महाधियां चिरन्तनानां पुंसां श्रुतिस्मृत्यर्थानां बोधेष्वैकमत्य सम्प्रतिपत्तिः क्व न क्वापीत्यर्थः। किन्तु बुद्धिबलापेक्षा स्वानुभवानुसारेण व्याख्या प्रतिपादनमेव निर्णायकमित्यर्थः। एवं स्थिते व्याख्या सुखो-न्मुखी सुखप्रवणा नोपेक्ष्या सैव ग्राह्येत्यर्थः। अन्यथा भ्रष्टो भवेदिति भावः ॥ ५० ॥

नन्वेवं सुखलोलुपतया यथेच्छाचरणे परलोकनष्टं स्यादित्याह यस्मिन्निति। यस्मिन्देहे अस्मीति धीः अहं बुद्धिः अस्मीत्यव्ययमस्मदर्थानुवादे अहमर्थेऽपि इति गणव्याख्याने। पादप्रहारमिति सुन्दरि! नास्मि दूये इत्यादि प्रयोगश्च। तस्य दाहे सति वो युष्माकमेनसा किम्? न स्यात्। गौरोऽहं कृशोऽहमित्यादि बुद्धिप्रामाण्याद्देहादतिरिक्तः फलभोक्ताऽस्मीत्यभि-मानः। तर्हि परसाक्षिके परोक्षितात्मप्रमाणके न तु वेदवदनुभवसिद्ध इत्यर्थः। आत्मेति आत्मेति ख्यातनाम क्व क्वापि कस्मिंश्चित्कल्पितेऽर्थे तस्यैन-सः फलं किम्? न स्यात्। अस्तु नाम किन्त्वेकं वस्तुतस्तूभयमप्यस-न्दिग्धमेवेति भावः ॥ ५१ ॥

नन्वत्रागमाः बलवदस्ति प्रमाणमत आह मृत इति। मृतः कर्माणि स्वकृतानि स्मरति मृते जन्तौ कर्मणां फलोर्मयः सुखदुःखसन्ताना

एकं सन्दिग्धयोस्तावत् भावि तत्रेष्टजन्मनि ।
हेतूनाहुः स्वमन्त्रादीनसाङ्गानन्यथा विटाः ॥ ५३ ॥

जनेन जानतास्मीति कायं नायं त्वमित्यसौ ।
त्याज्यते ग्राह्यते चान्यदहो श्रुत्यातिधूर्त्तया ॥ ५४ ॥

एकस्य विश्वपापेन तापेऽनन्ते निमज्जतः ।
कः श्रौतस्यात्मनो भीरो ! भरः स्याद् दुरितेन ते ॥ ५५ ॥

भवन्तीतिशेषः । अन्यभक्षैः श्राद्धादिब्राह्मणभोजनैरन्यैः ते तृप्तिरिति धूर्त्तवार्त्तया प्रतारकप्रवादेनालम् आगमोऽपि कस्यचित्प्रलाप एवेत्यर्थः ॥५२॥

धौर्त्यप्रकारमेवाह एकमित्यादि । सन्दिग्धयोरिष्टसिद्ध्योर्मध्ये एकं तावदवश्यम्भावि तत्रेष्टजन्मनि इष्टसिद्धौ सति मन्त्रादीन्मन्त्रादिप्रयोगान् हेतून् कारणमाहुः अन्यथा तदसिद्धौ मन्त्रादिसाङ्गानङ्गविकल्पानाहुः ॥ ५३ ॥

धूर्त्तस्य दृष्टं कर्मकाण्डं विडम्ब्य ज्ञानकाण्डं विडम्बयति जनेनेति । अतिधूर्त्तया अतिप्रतारिकया श्रुत्या कायं देहमस्मीति जानता देहादावात्मबुद्धिं कुर्वता जनेन प्रयोज्येन अयं कायः त्वमात्मा नेति त्याज्यते मोच्यते अन्यद्देहादन्यद्ब्रह्म ग्राह्यते तत्त्वमस्यादिवाक्यैः स्वीकार्यते सत्यस्य असत्यकरणादसत्यस्य सत्यकरणाच्च अहो इत्याश्चर्यकरणम् ॥ ५४ ॥

एकस्येति । एकस्य परमार्थतोऽद्वितीयस्य श्रौतस्य उपनिषद्वात्मनः आत्मभूतस्य तथा विश्वपापेन अशेषपापेन अनन्ते तापे दुरन्तदुःखे निमज्जतः ते तव हे भीरो ! दुरितैनेकेन स्वीकृत्यकृपणपादेन को भरः आत्मवाददाम्भिकस्य पापैकफलं परस्य एतेन किमत्रैव वैराग्येणेत्यर्थः ॥ ५५ ॥

किन्ते हन्ताहृतात् पुष्पात् तन्मात्रे ऽपि फलत्वदः।
न्यस्य तन्मूर्द्धनन्यस्य न्यास्यमेवाश्मनो यदि ॥ ५६ ॥

तृणानीव घृणावादान् विधूनय बधूरतु।
तत्रापि तादृशस्यैव का चिरं जनवस्तुना ॥ ५७ ॥

कुरुध्वं कामदेवाज्ञां ब्रह्माद्यैरप्यलङ्घिताम्।
वेदोऽपि देवकीयाज्ञा तत्राज्ञाः काधिकार्हणा ॥ ५८ ॥

किमिति। हे मूर्ख ! हन्त हृतात् हन्त आहृतात् पुष्पात् ते तव किं न किञ्चिदित्यर्थः। यस्मात् यत् इदं पुष्पं तन्मात्रे तस्मिन् हन्त एव फलत्वदः फलं सूते अपि सम्भावनायाम्। यथा अन्यो देवताधिष्ठितस्य मूर्ध्नि न्यासमर्पणीय मेव यदि यच्छलोऽगच्छत्। तत्तर्हि स्वस्यैव मूर्ध्नि न्यस्य निधेहि अश्मतोऽपि किंचित् हे लुक्। पापापासनाद्वरं स्वयमुपभोग इति भावः ॥ ५६ ॥

तृणानीति। बधूरतु स्त्री विषये घृणावादान् प्रायोऽस्य सन्दर्शन मपि यस्मान् मनुष्यस्य तत्कलयं वसाय:। स्नानौ च पानौ पिधितौ च विद्धौ स्थानान्तरे किं? नरकेऽपि यापिंदन्य हि जुगुप्सावादान् घृणा जुगुप्साकृपयोरिति यादवः। तृणानीव विधूनय विसर्जय धूञ् प्रियोर्नुग्वक्तव्यः। तत्रापि तादृशस्य जुगुप्सितस्यैव चर्तावरमत्यन्तं जनवस्तु-ना विरक्तप्रलापे लौकवस्तुना का क्षमता ॥ ५७ ॥

कुरुध्वमिति। हे जनाः ! मूढ़ा ! ब्रह्माद्यैरलङ्घितां कामदेवस्य तां कुरुध्वं वचाय सर्वैदिकाचार इत्याह वेदोऽपि देवस्येयं देवकीया-गहादिभ्यश्चेति छपत्यये अनन्तरयोः कावन्मृष्यः देवस्येति कुगागमः। आज्ञा शासनं श्रुतिः स्मृति ममैवाज्ञेति भगवद्वचनादिति भावः। तत्र वेदे अधिका अर्हणा पूजा का किं निमित्तेत्यर्थः। इत्थम् अविशेषे काम-देवाज्ञैव कार्या ब्रह्माद्यैरप्यलङ्घ्यत्वादिति भावः ॥ ५८ ॥

प्रलापमपि वेदस्य भागं मन्यध्वमेव चेत् ।
केनाभाग्येन दुःखान्न विधीनपि तथेच्छथ ॥५९॥
श्रुतिं श्रद्धत्थ विक्षिप्ताः प्रक्षिप्तां ब्रूथ च स्वयम् ।
मीमांसामांसलप्रज्ञाः ! तां यूपद्विपदापिनीम् ॥ ६० ॥
को हि वेदास्त्यमुष्मिन् वा लोक इत्याह या श्रुतिः ।
तत्प्रामाण्यादमुं लोकं लोकः प्रत्येतु वा कथम् ॥ ६१ ॥
धर्म्माधर्मौ मनुर्जल्पन्नयाज्यार्जनवर्जनौ ।
व्याजान्मण्डलदण्डार्थी श्रद्दधायि मुधा बुधैः ॥६२॥

प्रलापमिति । हे मूढाः ! वेदस्य भागमर्थवादांशं प्रलापमनर्थकमपि मन्यध्वं जानीथैव चेत् केनाभाग्येन भाग्यविपर्ययेण दुःखयन्तीति दुःखाः पचाद्यच् । तान् दुःखकरार्थान् विधीनपि विधिभागमपि तथा प्रलापान्नेच्छथ न मन्यध्वं एकदेशोपहतान्नराशिवत् तत्स्यापि अनुपादेयत्वादिति भावः ॥ ५९ ॥

• श्रुतिमिति । हे मीमांसया मांसलप्रज्ञाः ! निश्चितबुद्धय इति परिहासोक्तिः विक्षिप्ता भ्रान्ताः सन्तः श्रुतिं वेदं श्रद्धत्थ विश्वसिथ अत्र यूपद्विपदापिनीं यूपकृतुषु जगद्धिंसापादां प्रतिपादिकां तां श्रुतिं स्वयमेव प्रक्षिप्तां विप्रतार्थाम् ब्रूथ ततकृतो वेदस्य प्रामाण्य मित्यर्थः ॥६०॥

कोऽहीति । किञ्च या श्रुतिः कोऽहि तद्वेद यद्यमुष्मिन् लोके परलोके अस्ति वा नवेति फल मितिशेषः । कोहि वेद न कोऽपीत्याह तस्याः एवं सन्दिहानायाः श्रुतेः प्रामाण्यावलम्बनादमुं लोकं परलोकं प्रत्येतु विश्वसितु न प्रत्येति वा अतो न प्रतिज्ञावादीति श्रुतिं न श्रद्धेयेत्यर्थः ॥ ६१ ॥

एवं श्रुतेरप्रामाण्य मुक्त्वा स्मृतेरप्याह धर्मेत्यादि । व्याजादधर्माधर्मोपदेशकैतवान्मनुर्राज्ञे दण्डार्थी दण्डनार्थी सन् कथयते कर्त्तुर-

व्यासस्यैव गिरा तस्मिन् श्रद्धेयत्वा स्थ तान्त्रिकाः ।
मत्स्यस्याप्युपदेशान् वः को मत्स्यानपि भाषताम् ॥ ६३ ॥

पण्डितः पाण्डवानां स व्यासश्चाटुपटुः कविः ।
निनिन्द तेषु निन्दत्सु स्तुवत्सु स्तुतवांश्च किम् ॥ ६४ ॥

न भ्रातुः किल देव्यां स व्यासः कामात् समासजत् ।
दासीरतस्तदासीयन्माता तत्राप्यदेशि किम् ॥ ६५ ॥

यक्षो अर्जनवर्जने यथाऽऽख्यं करणाकरणे ययोः तौ धर्माधर्मौ जल्पन्व्यासस्तदुपमर्द्दत्वेन वञ्चत्वेनोपदिशन् बुधैर्विद्वद्भिः सधैव श्रद्धायि न्यवि-तमित्यर्थः ॥ ६२ ॥

व्यासस्येति । हे तान्त्रिकाः ! तन्त्रशास्त्रवेदिनः ! तदधीते तद्वेदेति ठक् । व्यासस्य गिरा मन्त्रपाठ्य मिति व्याप्तोक्त्या तस्मिन् श्रद्धेयत्वा स-त्ये स्थ स्थिराः स्थ चेत्तर्हि व्यासोक्तिः मत्स्यपुराणे मत्स्यस्य मत्स्यदेवस्य मीनस्य च उपदेशाननुपासनीय नृ अतएव मत्स्यप्राप्यान् वो युष्मान् को भाषतां कश्चापि न सम्भाष्या इत्यर्थः । मत्स्य उपदेशेति स्वकपोलकल्पितं वदन् व्यासो न श्रद्धेयवचन इत्यर्थः ॥ ६३ ॥

पण्डित इत्यादि । पुनर्व्यासमेव विडम्बयति । पण्डितः पण्डितमानी चाटुपटुः चाटुवादकुशलः पाण्डवानां कविः व्यासोऽपि तेषु पाण्डवेषु निन्दत्सु स निनिन्द किं ? स्तुवत्सु सत्सु स्तुतवान् किं ? तन्निन्द्यान् निन्दन् स्तुत्यान् स्तुवन् व्यासोऽपि पाण्डवपक्षपाती कश्चित्कविर्न यथार्थ-वादीत्यर्थः ॥ ६४ ॥

कामचारी च स इत्याह नेति । स व्यासो भ्रातुर्विचित्रवीर्यस्य देव्यां पत्न्यां कामादनुरागात्समासजत्सङ्गमं कृतवान्किम् गुरुनुज्ञानाच्च दोषश्चेत् तत्राह तदा तत्काले दासीरतश्च मोहितुरोत्पादयेति भावः । तत्रापि माता सत्यवत्या अदेशि चादिष्टः किम् ? ॥ ६५ ॥

देवैर्द्विजैः कृता ग्रन्थाः पन्था येषां तदादृतौ ।
गां नतैः किं न तैर्व्यक्तं ततोऽप्यात्माऽधरीकृतः ॥ ६६ ॥

साधु कामुकतामुक्ता शान्तस्वान्तैर्मखोन्मुखैः ।
सारङ्गलोचनासारां दिवं प्रेत्यापि लिप्सुभिः ॥ ६७ ॥

उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मतम् ।
अपवर्गे तृतीयेति भणतः पाणिनेरपि ॥ ६८ ॥

बिभ्रत्युपरि यानाय जना जनितमज्जनाः ।
विप्रच्छायाग्रतः पश्चात्तत्वरीरम्भविभ्रमम् ॥ ६९ ॥

---

देवैरिति । हे मूढाः ! एषां वः देवैर्ब्रह्मादिभिः द्विजैः व्यासादिभिश्च कृता ग्रन्थाः गां प्रणमेदित्यादिस्मृतयः पन्थाः प्रमाणं तदादृतौ तदुपन्यासादरे सति गां धेनुं नतैः प्रणतैः सद्भिर्भवद्भिः ततो गोरप्यात्मा स्वं व्यक्तमधरीकृतोन किं ? कृत एवेत्यर्थः । पशुप्रणामे त्वयोरपि निकृष्टता स्यात्तस्याः किञ्चित्फलमस्तीति भावः ॥ ६६ ॥

साध्विति । प्रेत्य मृत्वापि सारङ्गलोचना मृगाक्ष्य एव सारो मध्यांशो यस्यां तां दिवं लिप्सुभिः अतएव शान्तस्वान्तैः शुद्धचित्तैः सद्भिर्मखोन्मुखैः कृतप्रयत्नैर्मूढैः कामुकता अभिलाषिरतिमुक्ता साधु सम्यगिति सिद्धं विहाय साध्ये प्रवृत्तेरुपहासः ॥ ६७ ॥

उभयीति । अपवर्गे तृतीयेति भणतः सूत्रयतः पाणिनेर्मुनेरपि उभयी प्रकृतिः स्त्रीपुंसात्मिका या तृतीया पुरुषार्थे सजेत् तृतीया प्रकृतिः षट्व्यक्तिरपवर्गे मोक्षाख्ये चतुर्थे पुरुषार्थे सजेदिति मतं स्फुटम् अयमेवास्य सूत्रस्यार्थो न द्वितीयाविभक्तिविधानमित्यर्थः । तथा च वृथा कामं विहाय अपवर्गे प्रवृत्तमाना यूयं नपुंसका इता स्थेति भावः ॥ ६८ ॥

बिभ्रदिति । उपरि यानाय ऊर्ध्वलोकगमनाय जनितमज्जनास्तीर्थेषु कृतमज्जनाः अधो गच्छन्ति इत्यर्थः । ईदृशाः जनाः अग्रतो

क: शम: क्रियतां प्राज्ञा: ! प्रियाप्रीतौ परिश्रम:।
भस्मीभूतस्य भूतस्य पुनरागमनं भ्रम: ॥ ६९ ॥
एनसानेन तिर्य्यक् स्यादित्यादि: का विभीषिका।
राजिलोऽपि हि राजेव स्वै: सुखी सुखहेतुभि: ॥ ७१ ॥
हतास्ते हि दिवि दीव्यन्ति दैत्या दैत्यारिणा रणे।
तत्रापि तेन युध्यन्तां हता अपि तथैव ते ॥ ७२ ॥

---

विग्रहाय युद्धाय बेहुमन्यतो गमनायेत्यर्थः। पश्चाद्गन्तराणां पश्चाद्गामिनां गत्वरश्चेति करवन्तो निपातः। अभ्राणां मेघानां विभ्रममिव विभ्रमं चेष्टां बिभ्रदिति निदर्शनालङ्कार ! स चेऽध्वगमनाय अधो गच्छन्त इति स्वलिन: स्वलार्थप्रयतरूपविचित्वालङ्कारोत्थापित इति सङ्करः। तेन तेषामवि-मृश्यकारित्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनि ॥ ६८ ॥

क इति। हे प्राज्ञाः ! प्रज्ञावन्त इति सोपहास आमन्त्रितः प्रज्ञा-हीना इत्यर्थः। प्रज्ञा श्रद्धेत्यादिना मत्वर्थीयेण्प्रत्ययः। शमः शान्तिः वैराग्यं कः किमर्थं किन्तु प्रियाप्राप्तौ इष्टस्त्रीसङ्गतौ परिश्रमः क्रियतां न च तत्पापेन यातना शरीरप्राप्तिशङ्का कार्य्येत्याह भस्मी-भूतस्य देहस्य पुनरागमन कुतः पुनरुद्भव इति भ्रमः इति देहातिरि-क्तात्मसद्भावाभिमानेऽपि तादृगेवेति भाव. ॥ ७० ॥

अस्तु वा यातनाशरीरं तत्रापि सुखमेवेत्याह एनसेति। अनेन एनसा एवं विधपापेन तिर्य्यग्यातनाशरीरं स्यादिति का विभीषिका विभीषणं विपूर्वाद्भीषयतेर्धात्वर्थनिर्देशेण्वुल् कात्पूर्वस्येकारः। हि यस्माद्राजिलो डुण्डुभाख्यस्तिर्यगपि सर्पो राजिल डुण्डुभावित्यमरः। राजेव स्वैः स्वजात्यनुरूपैः सुखहेतुभिः सुखसाधनैः सुखी सुखवानेव तिरश्चामपि शरीरेन्द्रियाभिमानिनां सुखमेवेति तद्धेतोः पापान्न भेतव्य-मिति भावः ॥ ७१ ॥

अन्यच्च शास्त्रं विडम्बयति हता इति। रणे हताः, दिवि स्वर्गे दि-व्यन्ति क्रीडन्ति चेत्तर्हि दैत्याः असुराः दैत्यारिणा विष्णुना रणे हताः

स्वञ्च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम्।
इति स्वोच्छित्तिमुक्त्युक्तिवैदग्धी वेदवादिनाम्॥ ७३॥
मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।
गौतमं तमवेतैव यथा वित्थ तथैव सः॥ ७४॥
दारा हरिहरादीनां तन्मग्नमनसो भृशम्।
किं न मुक्ताः पुनः सन्ति कारागारे मनोभुवः॥ ७५॥

सत्यामपि हननोत्तरकालिन मपीत्यर्थः। तथैव पूर्ववदेव तत्रापि स्वर्गेऽपि तेन विष्णुना सह युद्धानां युद्धेरन् नचैतदस्ति तस्मादपि शास्त्रं मृषेत्यर्थः॥ ७२॥

अथ मोक्षशास्त्र विडम्बयति स्वमित्यादि। संसारे संसारावस्थायां स्वं च ब्रह्म च जीवब्रह्मणी केवलमुक्तौ मोक्षावस्थायां तु केवल मेकं ब्रह्म इति स्वस्य जीवस्योच्छित्तिरेव मुक्तिः तस्याः उक्तौ प्रतिपादने वैदग्धी वैदग्ध्यं गुणवचनेत्यादिना ष्यञ्। स्त्रीत्वविवक्षायां षिद्गौरादि-भ्यश्चेति ङीष्। सैव वेदवेदिनां वावदूका वदन्तीति भावः॥ ७३॥

अद्वैतमोक्षं दूषयित्वा द्वैतमोक्षं दूषयति मुक्तय इति। यः शास्त्र-कर्त्ता सचेतसां प्राणिनां शिलात्वाय नवगुणात्यन्तोच्छेदरूपत्वात् तत्सदृश-मुक्तस्वरूपानिर्द्धरणाय शास्त्रमूचे प्रणिनाय त तच्छास्त्रकर्त्तारं गौतमं गौतमाख्यं न तु गौतम मित्यर्थः। अवेत जानीथ अवपूर्वादिणो मध्यम-पुरुषबहुवचनम्। एवं च सति यथा वित्थ जानीथ वेत्तेः पूर्ववद्रूपं तथैव सः अथ पुरुषार्थोपदेशाद्गौतमः पशुतमो मूढ़तम एवेत्यर्थः। गौणोऽयं शब्दो न तु मूढ़ः अदन्तमवन्तविवक्षा चेति भावः॥ ७४॥

हरिहरहिरण्यगर्भोपासनया मुक्तिरिति मतं निरस्यति दारा इति। हरिहरादीनां दारा लक्ष्म्यादयः भृश [illegible]
ष्वेवं मग्नमनसो लग्नचित्ताः सन्तोऽपि [illegible]

देवश्चेदस्ति सर्व्वज्ञः करुणाभागवन्ध्यवाक्।
तत्किं वाग्व्ययमात्रान्नः कृतार्थयति नार्थिनः॥ ७६॥
भविनां भावयन् दुःखं स्वकर्मजमपीश्वरः।
स्यादकारणवैरी नः कारणाद्‌परेपरे॥ ७७॥
तर्काप्रतिष्ठया साम्यादन्योन्यस्य व्यतिघ्नताम्।
नाप्रामाण्यं मतानां स्यात् केषां सत्प्रतिपक्षवत्॥ ७८॥

---

भुवः कामस्य कारागारे बन्धनालये कारा स्याद्बन्धनालये इत्यमरः। पुनः सन्ति वसन्ति तद्वशे वर्त्तन्त इत्यर्थः। ततस्तदपि मिथ्यैवेति भावः॥ ७५॥

किञ्च देवोऽपि नास्ति यत्प्रमादानुमुच्येमहीत्याह देव इति। सर्वज्ञः करुणाभाक्कारुणिकः वैषम्यनैर्घृण्यरहित इत्यर्थः। अवन्ध्यवागमोघवचनो देव ईश्वरोऽस्ति चेत्तर्हि किं? किमर्थं मर्थिनो मोक्षार्थिनो नः अस्मान्वाग्व्ययमात्रात् उच्चारणमात्रेण न कृतार्थयति न मोचयतीत्यर्थः। अतः सोऽपि नास्तीति भावः॥ ७६॥

नन्वसौ वेश्वरः किं त्वस्मत्कर्मानुसारात् फलं प्रयच्छन्न दुष्यतीत्याशङ्क्याभ्युपेत्य दूषयति भविनामिति। भविनां संसारिणां स्वकर्मजमपि दुःखं भावयन्नौदासीन्यं विहाय निमित्तं भवन्नीश्वरो नोऽस्माकमकारणाद् वैरी स्यात् अपरे परे अन्ये यत्वतः कारणादन्योन्यापकारलक्षणाद्वैरिणः। अतः सर्वोऽपि न विश्वसनीय इति भावः॥ ७७॥

किञ्च सर्वाण्यप्यास्तिकमतानि परस्परविरोधादप्रामाण्यान्येवेत्याह तर्केति। तर्कस्य युक्तेरप्रतिष्ठया अप्रतिष्ठत्वेन कारणेन साम्यात्समबलत्वाद्धेतोरन्योन्यस्य व्यतिघ्नतां परस्परं प्रतिघ्नतां सर्वनाम्नो दृत्तिमात्रे हे भरत इति अन्यशब्दस्य द्विरुक्तिः पूर्वपदात्प्रथमैकवचनं शेषे कर्मणि षष्ठी कर्मव्यतीहारे द्योतनार्थोऽप्युपसर्गप्रयोगः इतरेतरान्योन्योपपदाच्चेति प्रतिषेधात्कर्मव्यतीहारेऽप्यात्मनेपदाभावः। केषां मतानां दर्शनानां सत्प्रतिपक्षवत् मिथः प्रतिरुद्धहेतूनामिव अप्रामाण्यं न स्यात् तस्मादेवंत्यदः॥ ७८॥

अक्रोधं शिक्षयन्त्यन्यान् क्रोधना ये तपोधनाः ।
निर्द्धनास्ते धनायैव धातुवादोपदेशिनः ॥ ७६ ॥
किं वित्तं दत्त तुष्टेयमदातरि हरिप्रिया ।
दत्त्वा सर्वं धनं मुग्धो बन्धनं लब्धवान् बलिः ॥ ८० ॥
दोग्धा द्रोग्धा च सर्व्वोऽयं धनिनश्चेतसा जनः ।
विसृज्य लोभसंक्षोभमेकद्वा यद्युदासते ॥ ८१ ॥
दैन्यस्यायुष्यमस्तैन्यमभक्ष्यं कुक्षिवञ्चना ।
स्वाच्छन्द्यमृच्छतानन्दकन्दलीकन्दमेककम् ॥ ८२ ॥

अक्रोधमिति । क्रोधनाः स्वयं कोपनशीलाः नन्द्यादित्वाल्ल्युरिति ल्युट् । ये तपोधनाः दुर्वासःप्रभृतयः अन्यानितरानक्रोधं शान्तं शिक्षयन्त्युपदिशन्ति ब्रुविशासीति द्विकर्मकत्वं । ते निर्धनाः स्वयं निःस्वाः सन्तो धनाय धनार्थं धातुवादोपदेशिनः परेषां धातुविद्योपदेष्टार इव तद्वदुपहास्याः स्युरिति भावः ॥ ७६ ॥

• किमिति । हे वदान्याः ! वित्तं धनं किं किमर्थं दत्त नदत्तेत्यर्थः सम्प्रश्ने लोट् । न चादाने लक्ष्मीक्षोभ इत्याह इय हरिप्रिया लक्ष्मीरदातरि तुष्टा अदानेनैव तुष्यतीत्यर्थः । तथा हि मूढो दुर्बुद्धिः बलिर्वैरोचनिः सर्वं धनं दत्त्वा बन्धनं प्राप्तवान् वामनाय विष्णवे दत्त्वा त्रिविक्रमेण तेनैव बद्ध इत्यर्थः ॥ ८० ॥

दोग्धेति । अयं सर्वो जनः चेतसा अन्तरङ्गेण धनिनो धनिकान् दोग्धा दोहनकर्त्तारश्च स्वायुःकर्षणाय मनसोऽकृतनिश्चया इत्यर्थः । अतएव द्रोग्धा जिघांसुश्च ताच्छील्ये तृन् अतएव न लोकेत्यादिना षष्ठीप्रतिषेधः । किन्तु लोभसंक्षोभं विकारं याच्ञादैन्यं विसृज्योदासते यदि निःस्पृहा तिष्ठन्ति यदि एको द्वौ वा एकद्वा नास्तिकः कश्चिदित्यर्थः । सङ्ख्याव्ययेत्यादिना •बहुव्रीहौ डच् समासान्तः ॥ ८१ ॥

दैन्यस्येति । अस्तैन्यमस्तेयं क्वचित्प्रसज्यप्रतिषेधेऽपि नञ् समास

इत्थमाकर्ण्य दुर्वर्णान् शक्रः सक्रोधतां दधे।
अशेषवज्रैः कस्कोऽयं धर्ममर्माणि कृन्तति ॥ ८३ ॥
लोकत्रयीं त्रयीनेत्रां वज्रवीर्यस्फुरत्करे।
क इत्थं भाषते पाकशासने मयि शासति ॥ ८४ ॥
वर्णासङ्कीर्णतायां वा जात्यलोपेऽन्यथापि वा।
सङ्ग्रहादेः परीक्षासु भङ्गभङ्ग ! प्रमाणय ॥ ८५ ॥
ब्राह्मण्यादिप्रसिद्धाया गन्ता यत्नेक्षते जयम्।
तद्विशुद्धिमशेषस्य वर्णवंशस्य शंसति ॥ ८६ ॥

दृश्यते वहिर्भिरेतिवत्। दैन्यस्य शोचनाया आयुषे हित मायुष्यं तदर्गमित्यर्थः। हितार्थे यत्प्रत्ययः। आनन्दकन्दलीकन्दमानन्दाङ्कुरमूलकम् एक मेकाकि असहाये कन्प्रत्ययः। स्वाच्छन्द्यं स्वेच्छाचारित्वं गच्छत गच्छत मा वृथा हता स्थ इत्यर्थः ॥८२॥

इत्थमिति। इत्थमेवं विधान् दुर्वर्णान् दुर्वाक्यानि आकर्ण्य शक्रः सक्रोधतां दधे चुक्रोध कः कोऽयं क इत्यस्य सम्भ्रमे द्विरुक्तिः कस्कादिषु चेति सकारः। धर्ममर्माणि कृन्तति भिनत्ति स्फुरत्स्फार अशेषम् ॥ ८३ ॥

लोकेति। त्रयीनेत्रां वेदचक्षुषं लोकत्रयीं त्रिलोकीं वज्रवीर्येण कुलिशप्रभावेण स्फुरत्करे पाकशासने देवेन्द्रे मयि शासति क इत्थमसत् भाषते प्रलपति ॥ ८४ ॥

यावोक्तव्यानवदित्यादिना शब्दाप्रामाण्यप्ररूपितं तन्निरसनाह वर्णेत्यादि। वर्णानां ब्राह्मणादिवर्णानामसङ्कीर्णतायामसाङ्कर्ये अन्यथा वाशिष्य निषिद्धदृत्यनाश्रयणे सति जात्यलोपे जातिभ्रंशाभावेऽपि विषये सङ्ग्रहादेः पातकिनः परीक्षासु तुलादिदिव्यशोधनेषु भङ्गं पराजयम् भङ्ग ! भोः ! प्रमाणय प्रमाणीकुरु एतदेव सर्वत्र वर्णसाङ्कर्यादि शास्त्रे प्रामाण्येऽपि दर्शन मित्यर्थः ॥ ८५ ॥

ब्राह्मण्यादीति। किञ्च ब्राह्मणी आदिर्यस्याः प्रसिद्धायाः प्रख्यात-

पुत्रेष्टिश्येनकारीरीमुखा दृष्टफला मखाः ।
न वः किं धर्म्मसन्देहमन्देहजयभानवः ॥ ८४ ॥
दण्डताण्डवनैः कुर्व्वन् स्फुलिङ्गालिङ्गितं नभः ।
निर्ममेऽथ गिरामूर्म्मीर्भिन्नमर्म्मेव धर्म्मराट् ॥ ८५ ॥
तिष्ठ भोस्तिष्ठ कण्ठोष्ठं कुण्ठयामि हठादयम् ।
अपष्ठु पठतः पाठ्यमधिगोष्ठि शठस्य ते ॥ ८६ ॥

पुत्रेति । हे नास्तिकाः ! पुत्रेष्टिः पुत्रकामेष्टिः श्येनो नाम क्रतुविशेषः कारिरी पुत्रकामेष्टिः सा मुखमादिर्येषां ते तन्मुखा दृष्टफलाः फलसम्पादनान्निश्चितप्रमाणभावादित्यर्थः । अतएव मखाः क्रतवो वो युष्माकं धर्मे अयं सन्देहोऽतएव मन्देहाः सूर्य्येण सहयुध्यानो राक्षसविशेषा स्तेषां जये निरासे भानवः सूर्य्या न किम् ? एकदेशसम्पादैकदेशान्तरेऽपि न सन्दिग्ध मित्यर्थः । सन्देहजये भानव इत्यत्र रत्नांशोह्वा पुरोऽनुवाक्यार्थोऽनुसन्धेयः ॥ ८३ ॥

दण्डेति । अथ धर्मराड्यमः भिन्नमर्मा चार्वाकप्रलापैर्विदीर्णमर्मेव स दण्डस्य दण्डयुद्धस्य ताण्डवनैः भ्रमणैर्नभः स्फुलिङ्गालिङ्गितम् अग्निकणाकीर्णं कुर्वन् गिरा मूर्मीः वाक्परम्परा ऊर्मिर्वास्त्रिया मित्यमरः । निर्ममे उवाचेत्यर्थः ॥८४॥

तिष्ठेति । भोः पातकापशद ! तिष्ठ सम्भ्रमे द्विरुक्तिः । अधिगोष्ठि गोष्ठ्यां विभक्त्यर्थे अव्ययीभावः । अपतिष्ठतीत्यपष्ठु प्रतिकूलं प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु चेत्यमरः । अपः दुःसुषु स्य इति तिष्ठतेः औणादिक उप्रत्यये आतोलोप इटि चेत्याकारलोप उपसर्गात् सुनोति इत्यादिना षत्वं । पाठ्यं पठनीयप्रबन्धं पठतः शठस्य धूर्त्तस्य ते तव कण्ठ मोष्ठौ च कण्ठोष्ठं प्राण्यङ्गत्वात् एकवद्भावः । हठाद्बलात् पार्ष्णिकप्रसभौ हठाविति वैजयन्ती ।कुण्ठयामि स्तम्भयामि ॥ ८५ ॥

वेदैस्तद्द्वेषिभिस्तद्वत् स्थिरं मतगतैः कृतम्।
परं कस्ते परं वाचा लोकं लोकायत! त्यजेत्॥९७॥

समस्तानाल्पभूयिष्ठपान्थवैमत्यमेत्य यम्।
लोके प्रयासि पन्थानं परलोके न तं कुतः॥ ९८॥

स्वकन्यामन्यसात्कर्त्तुं विश्वानुमतिदृश्वनः।
लोके परत्र लोकस्य कस्य न स्याद्दृढं मनः॥ ९९॥

वेदैरिति। हे लोकायत! चार्वाक! वेदैः श्रुतिभिः तद्द्वेषिभिर्वेद-विरोधिभिर्मतगतैर्बौद्धादिदर्शनगतैश्च स्थिरं कृतं स्थापितं परं लोकं परं केवलं ते तव वाचा कस्त्यजेत् न कोऽपीत्यर्थः। बहूक्तस्यैव प्रामाणिकत्वादिति भावः॥९६॥

समेति। हे नास्तिकाः! लोके इहलोके समस्ताना मध्यमल्पाना अल्पाः किञ्चिज्ज्ञाः भूयिष्ठा जना अधिकाश्च एषां पान्थाः परलोकपथिकाः आस्तिका इत्यर्थः। तैर्वैमत्यं विरोधमेत्य सर्वसम्मतं मार्गं सन्त्यज्येत्यर्थः। यं पन्थानं दुर्मार्गं प्रयास्यनुयासि तं पन्थानं परलोकेऽपि कुतो न प्रयासि प्रयास्यस्येव तत्फलमनुभविष्यसीत्यर्थः। इह प्रच्छन्नपापानां शास्ता वैवस्वतो मतः इति शास्त्रादहमेव नियन्तेति भावः॥९७॥

स्वेति। स्वकन्यां स्वदुहितरमन्यसात्कर्त्तुमन्यस्मै दातुमित्यर्थः। देये त्राचेति सातिप्रत्ययः। विश्वानुमतिं दृष्टवानिति तद्दृश्वा तस्य तद्दृश्वनः ब्राह्मे विवाहे आहूय दीयते शक्त्यलङ्कृता। तज्जः पुनात्युभयतः पुरुषानेकविंशतिम्। विष्णवाङ्ग रतिदानानि कन्या पृथ्वी सरस्वती इत्यादि सर्वशास्त्रसम्मविदर्शकस्य इत्यर्थः। दृशेः क्वनिप्। कस्य लोकस्य जनस्य मनः परत्र परलोके दृढं न स्यात् स्यादेव न तु तत्प्रलापे वाच्यमित्यर्थः॥९८॥

जलानलपरीक्षादौ सम्वादो वेदवेदिते।
गजहस्तितनास्तिक्यां धिक् धियं कुरुते न ते ॥ ८७ ॥
सत्येव पतियोगादौ गर्भादेरध्रुवोदयात्।
आक्षिप्त नास्तिकाः! कर्म न किं मर्म भिनत्ति वः ॥ ८८ ॥
याचतः स्वं गयाश्राद्धं भूतस्याविश्य कञ्चन।
नानादेश्यजनोपज्ञाः प्रत्येषि न कथाः कथम् ॥ ९० ॥

वर्णस्त्रिया गत्वा सम्भोक्ता जयं दिव्यपरीक्षणे विजयं नेक्षत इति यत् तत्पराजयन मेव अशेषस्य वर्णवंशस्य ब्राह्मणादिकुलस्य विशुद्धि मुत्कर्षं शंसति अन्यथा कथं तद्वन्तः पातकित्वशंसी पराजय इति भावः ॥ ८६ ॥

जलेति। किञ्च वेदवेदिते शास्त्रचोदिते जलानलपरीक्षादौ जलादिदिव्यशोधनादौ आदिशब्दात्कारिर्यादिसंग्रहः। सम्वादः फलप्रत्यभिज्ञा ते तव गजहस्तेन तुल्यं गजहस्तितं नास्तिक्यं यया तां धियम् आस्तिक्यबुद्धिं न कुरुते धिक् तामितिशेषः। धिङ्निर्भर्त्सननिन्दयोः इत्यमरः ॥ ८७ ॥

सतीति। हे नास्तिकाः! नास्तिपरलोकाः! अस्ति नास्ति दिष्टं मतिः इति ठक्। पतियोगादौ भर्तृसम्पर्कादि दुष्कारणसाकल्ये सत्येव आदिशब्दान्मोघोदयादिकारणसंग्रहः। अध्रुवोदयात्कादाचित्कोत्पत्तिकाद्गर्भोदयादिकार्यात् आदिशब्दादृष्ट्यादिकार्य्यसंग्रहः तस्मादाक्षिप्तम् अर्थापत्तिसिद्धकर्मजन्मान्तरा दृष्टं वो युष्माकं नास्तिकानां मर्म हृदयं किं न भिनत्ति एतेनैव अदृष्ट मस्तीति बोद्धव्यमित्यर्थः ॥ ८८ ॥

यदुक्तं मन्यद्युक्तेरते तृप्तिरिति अलं धूर्त्तवार्त्तयेति तत्रोत्तरमाह याचत इति। कञ्चन जन माविश्य स्वमात्मनो गयाश्राद्धं याचतो भूतस्य ब्रह्मराक्षसादेः सम्बन्धि नानादेश्यजनोपज्ञा नानादेश्यजना एवोपज्ञा ज्ञानं प्रमाणं यासान्तास्तत्प्रमाणका इत्यर्थः। उपज्ञा ज्ञानमाद्यं स्यादित्यमरः। तथा उपाख्यानानि गयाश्राद्धात्तस्य मुक्तिरासीदित्येवं रूपाणि

नीतानां यमदूतेन नामभ्रान्तेरुपागतौ।
अश्रद्धत्से संवदन्तीं न परलोककथां कथम्॥ ९१॥

जज्वाल ज्वलनः क्रोधादाचख्यौ चाक्षिपन्नमुम्।
किमात्थ रे! किमात्थेदमस्मदग्रे निरर्गलम्॥ ९२॥

महापराक्रिणः श्रौतधर्मैकबलजीविनः।
क्षणाभक्षणमूर्च्छाल! स्मरन् विस्मयसेऽपि न॥ ९३॥

कथं न प्रत्येषि न विश्वसिषि प्रत्येतव्य एवायमर्थः प्रमाणात्सम्वादा-
दित्यर्थः॥ ८९॥

नीतानामिति। किञ्च यमदूतेन यमकिङ्करेण नाम्ना नाम-
साम्येन भ्रान्तेरित एव नेतव्या इति भ्रमं नीतानां यमसन्निधिं
प्रापितानां वा उपागतौ यूयं निवर्त्तध्वमिति यमाज्ञया सद्यः पुनः स्वदेह-
संक्रान्तौ सत्यां सम्वदन्तीं तन्नामकप्रातिवेशिकपुरुषान्तमरणेन प्रत्यभि-
ज्ञायमानार्थां परलोककथां पुनरागतपुरुषोक्तां कथं किन्तु स नेतव्य
इति यमाज्ञा जातेति वार्त्तां कथं न श्रद्धत्से न प्रत्येषि श्रद्धयैव सम्वादा-
दित्यर्थः॥ ९०॥

जज्वालेति। अथ ज्वलनोऽग्निः क्रोधाज्जज्वाल दिदीपे रे इति
तुच्छसम्बोधने अस्मदग्रे निरर्गलमप्रतिबन्धं किमात्थ किं प्रलपसी-
त्यर्थः। सम्भ्रमे द्विरुक्तिः इत्याक्षिपन् असह्यावाक्यवन्दित मिति आचख्यौ
जगाद॥ ९१॥

अथ यदन्यत्प्रलपितम् अग्निहोत्रं त्रयीत्यादि तं निराचष्टे महा-
पराक्रिण इति। हे क्षणमभक्षणे अभोजने मूर्च्छाल! मूर्च्छामापन्न!
म्रियमाणेत्यर्थः। शृद्रुजन्नूपतापाल्वेति यक्ष्ये बाहुप्रत्ययः। श्रौतस्य श्रुति-
चोदितस्य धर्मस्यैकस्यैव बलेन सामर्थ्येन जीविनः प्राणधारिणः
महान्तो ये पराक्रिणो मासोपवासव्रतिनस्तान् स्मरन्नपि न विस्मयसे
धर्मोपजीविनो वैदिका नतु दम्भोपजीविन इत्यर्थः॥ ९२॥

कस्मिन्नपि मते सत्ये हताः सर्व्वमतत्यजः।
तद्दृष्ट्वा व्यर्थतामात्मनर्थस्तु न धर्मजः॥ १००॥

क्वापि सर्व्वैरवैमत्यात् पातित्यादन्यथा क्वचित्।
स्थातव्यं श्रौत एव स्याद्धर्मे शेषेऽपि तत्कृते॥ १०१॥

बभाण वरुणः क्रोधादरुणः करुणोज्झितम्।
किं न प्रचण्डात् पाषण्डपाश! पाशाद्बिभेषि नः॥ १०२॥

ननु नास्तिकानामिह तावत् सुखं सिद्धम् आस्तिकानान्तु तन्नास्ति आमुष्मिकन्तु सन्दिग्धं तथा च दृष्टानुष्ठानमेव श्रेय इति कुतो दार्ढ्यमित्य-त्राह कस्मिन्नपीति। आस्तिकमतमध्ये कस्मिंश्चिदपि मते सत्ये प्रमाणे सति सर्व्वमतत्यजः सर्वास्तिकमतत्यागिनो हताः परलोकभ्रष्टाः स्युः तद्दृष्ट्वा सर्व्वास्तिकमताप्रामाण्येन तु व्यर्थतामात्मनुष्ठानवैयर्थ्यमेव। धर्मजो धर्मापचारजन्योऽनर्थः परलोकभ्रंशरूपस्तु नास्त्येव एतच्च नास्तिकत्वमभ्युपेत्योक्तं परमार्थं तु आस्तिकमत मेव ग्राह्यम् इति भावः॥ ९९॥

तत्रापि वैदिकमतमेव ग्राह्यमित्याह क्वापीति। क्वापि क्व-त्रापि वैदिकमते अवैमत्यात्परलोकं प्रत्यसन्निधानात् अन्यथा कर-णाच्च पातित्यात्प्रत्यवायात् शेषे अवैदिकाचारेऽपि तत् कृते पातित्या पाताच्च क्वचित् कुत्रापि श्रौत एव धर्मे वैदिकाचारे एव सर्वैः स्थातव्यं स्थितिः स्यात् स एव ग्राह्य इत्यर्थः तयोरेव कृत्यार्थत्वात् इति भावे कृत्य स्तव्यप्रत्ययः॥ १००॥

बभाणेति। अथ वरुणः क्रोधादरुणः रक्ताङ्गः सन् करुणोज्झित मुज्झितकरुणं निष्कृपं यथा तथा बभाण तदेवाह याप्यः पाषण्डः पाषण्डपाश! देवब्राह्मणापसद! याप्ये पाशप्! याप्यः कुत्सितः। हे पाषण्ड-पाश! प्रचण्डात् क्रूरादस्माकं पाशायुधात् बिभेषि किं? निजपाशेन बध्नाति वरुणः पापकारिण इति किं? न श्रुत मिति भावः॥ १०१॥

मानवाशक्यनिर्म्माणा कूर्म्माद्यङ्कविला, शिला।
न श्रद्धापयते मुग्धा! स्थिर्थिकाध्वनि वः कथम् ॥ १०३ ॥

शतक्रतुरुजाद्याख्याविख्यातिर्नास्तिकाः! कथम्।
श्रुतिवृत्तान्तसम्वादैर्न वश्चमच्चीकरत् ॥ १०४ ॥

तत्तज्जनकृतावेशान् गयाश्राद्धादियाचिनः।
भूतानानुभवन्तोऽपि कथं श्रद्धत्थ न श्रुतीः ॥ १०५ ॥

नामभ्रमाद्यमं नीतानथ स्वतनुमागतान्।
सम्वादवादिनो जीवान् वीक्ष्य मा त्यजत श्रुतीः ॥ १०६ ॥

मानवेति। हे मुग्धा! मूढा! मानवानामशक्यनिर्माणा निर्मातुमशक्या, कूर्माद्यङ्कं कूर्मवराहादिचिह्नं यस्य तद्बिलं वक्त्रं यस्याः सा शिला शालग्रामशिला वो युष्मान् तिर्थिकाध्वनि श्रौतियमार्गे कथं न श्रद्धापयते न विश्वासयति शास्त्रोक्तं लक्षणसम्वादित्वादिति भावः ॥ १०२ ॥

शतेति। हे नास्तिका! शतक्रतुरुजा इति आदिर्यासान्ताः आख्या इन्द्रस्य वैश्यादिवर्णानां समाख्या आदिशब्दात् पुरन्दरादिसंग्रहः। तासां विख्यातिः प्रसिद्धिः श्रुतिवृत्तान्तसम्वादैः वेदव्यवहारप्रत्यभिज्ञानैः वो युष्मान् कथं न चमच्चीकरत् न व्यसिस्मयत् श्रुतिसम्वादादुपग्रहीतव्येऽर्थे कुतो नास्तिवादावकाश इत्यर्थः ॥ १०३ ॥

श्रुतिप्रामाण्यमेव कुत इत्याशङ्क्य द्वाभ्यामुपपादयति तदित्यादि। तेषु तेषु जनेषु कृतावेशान् तन्मुखेन यत्किञ्चिद्याचितुं कृतप्रवेशान् तदाह गयाश्राद्धादियाचिनः पिण्डाचित्यादिविशेषककर्मयाचकान् भूतान् यक्षराक्षसादिदेवयोनिभेदान् भूतोऽमी देवयोनयः इत्यमरः। अनुभवन्तः प्रत्यक्षेण पश्यन्तोऽपि श्रुतं तद्विधायकवेदान् कथं न श्रद्धत्थ न विश्वसिथ ॥ १०४ ॥

नामेति। किञ्च नामभ्रमात् नामसाम्यकृतभ्रान्तेः यमं नीतान् अथ स्वतनुमागतान् पुनर्यमाज्ञया स्वकायं प्रविष्टान् सम्वादवादिनो

संरम्भैर्जम्भजैत्रादेः स्तभ्यमानाद्दलाद्दलन् ।
मूर्द्ध्नि बद्धाञ्जलिर्देवानथैवं कश्चिदूचिवान् ॥ १०७ ॥
नापराधी पराधीनो जनोऽयं नाकनायकाः ! ।
कालस्याहं कलेर्वन्दी तच्चाटु चटुलाननः ॥ १०८ ॥
इति तस्मिन् वदत्येव देवाः स्यन्दनमन्दिरम् ।
कलिमाकलयाञ्चक्रुर्द्वापरञ्चापरं पुरः ॥ १०९ ॥
सन्दर्शोन्नमद्ग्रीवः श्रीवङ्कत्वकृताद्भुतान् ।
तत्तत्पापपरीतस्तान्नाकीयान्नारकीव सः ॥ ११० ॥

वेदसम्वादियमलोकवृत्तान्तकथकान् जीवान्मर्त्यान् वीक्ष्य स्मृतीर्वेदान् मा त्यजत एकत्र प्रामाण्यदर्शनादन्यत्राप्यश्रद्धा न कार्य्येत्यर्थः ॥ १०५ ॥

संरम्भैरिति । जम्भजैत्रादेरिन्द्रादिवर्गस्य संरम्भैः कोपैः संरम्भः सम्भ्रमे कोप इति विश्वः । स्तभ्यमानात्प्रतिबध्यमानाद्दलात्सैन्याद्विनिर्गच्छन् कश्चित्प्रसृतो धूर्त्तः वन्दिर्मूर्ध्नि बद्धाञ्जलिः सन् देवान्नत्वा नमस्कृत्य एवं वक्ष्यमाणमूचिवानुक्तवान् ब्रुवः क्वसुः ॥ १०६ ॥

यदूचिवांस्तदाह । हे नाककनायका देवाः ! पराधीनो नापराधी अहं कलेः कालस्य कलियुगादिदेवस्य तच्चाटुभिः तत्प्रियवादैः चटुलाननश्चपलमुखः स्वामिचित्तानुकूल्यं वन्दी न हन्तव्य इति भावः ॥ १०७ ॥

इतीति । इति इत्थं तस्मिन् वन्दिनि वदति जल्पत्येव सति देवा इन्द्रादयः स्यन्दनमन्दिरं रथस्थं कलिम् अपरं ततोऽन्यं द्वापरं द्वापरयुगादिदेवञ्च पुरोऽग्रे आकलयाञ्चक्रुः ददृशुः ॥ १०८ ॥

सन्दर्शेति । तैस्तैः पापैः ब्रह्महत्यादिभिः परीतः परिवेष्टितः स कलिः श्रीवङ्कत्वेन कान्तिभूम्ना कृताद्भुतान् जनितविस्मयान् तानिन्द्रादीन् नरकोऽस्यास्तीति नारकी नरकस्थः स्यान्नारकस्तु नरकः इत्यमरः । नारकी तान् स्वर्गस्थान् उन्नमद्ग्रीवः उत्कन्धरः सन् सन्ददर्श ॥ १०९ ॥

गुरुव्रीडावलीढः प्रागभून्नमितमस्तकः।
स त्रिशङ्कुरिवाक्रान्तस्तेजसैव बिडौजसः॥ १११ ॥

विमुखान् द्रष्टुमप्येनं जनङ्गम इव द्विजान्।
एष मत्तः सहेलन्तानुपेत्य समभाषत ॥ ११२ ॥

स्वस्ति वास्तोष्पते! तुभ्यं शिखिन्नसि न खिन्नता।
सखे! काल सुखेनासि पाशहस्त! मुदस्तव ॥ ११३ ॥

स्वयम्बरमहे भैमीवरणाय त्वरामहे।
तदस्माननुमन्यध्वमध्वने तत्र धाविने ॥ ११४ ॥

---

गुर्विति। प्राक्प्रथमं गुर्व्या व्रीडया अवलीढो ग्रस्तः व्रीडात्रपा मानना-यत्ता इत्यमरः। अथ त्रिशङ्कुः वशिष्ठशापदग्धवंश्यो राजा इव बि-डौजस इन्द्रस्य तेजसैव आक्रान्तोऽभिभूतः स कलिः नमितमस्तको ऽभूत् ॥ ११० ॥

विमुखानिति। जनान् गच्छति जनङ्गम चण्डालः चण्डाल प्लव मातङ्ग दिवाकीर्त्ति जनङ्गमाः इत्यमरः। गमश्चेति संज्ञायां खच्प्रत्यय इति क्षीरस्वामी। तं द्रष्टुमपि विमुखान् द्विजानिव एनं कलिमपि विमुखान् किमुत सम्भाषणे मिति भावः। तानिन्द्रादीन्मत्तो मदान्धः कलिः सहेल सावज्ञमुपेत्य हेलावज्ञा विलासयोः विश्वः। समभाषत सम्भाषित-वान् ॥ १११ ॥

स्वस्तीति। वास्तोष्पते! भुवःपते! अधिष्ठातः! वास्तोष्पते इन्द्र वा-स्तोष्पति गृहमेधाच्छ चेत्यस्मादेव निपातनादलुक् पन्नं। तुभ्यं स्वस्ति क्षेम स्वस्त्याशीः क्षेम पुण्यादौ इत्यमरः। नमः स्वस्तीत्यादिना चतुर्थी। शिखिन्नग्ने! खिन्नता खेदोन सखे! काल यम! सुखेनापि वर्त्तसे पाशहस्त! वरुण! तव मुदो मोदाः सर्वत्र काकुरनुसन्धेया ॥ ११२ ॥

स्वयमिति। हे देवाः! स्वयम्बरणव महे उत्सवे भैमीवरणाय त्व-रामहे तत्तस्मादस्मान् तत्र धाविने स्वयम्बरगामिने अध्वगमनायेत्यर्थः। अनुमन्यध्वम् अनुजानीध्वम् ॥ ११३ ॥

तेऽवज्ञाय तमस्योच्चैरहङ्कारमकारणम्।
अचिरेऽतिचिरेणैनं स्मित्वा दृष्टमुखा मिथः॥ ११५॥

पुनर्वक्ष्यसि मामेवं कथमुद्वक्ष्यसे नु सः।
स्रष्टवान् परमेष्ठी यं नैष्ठिकब्रह्मचारिणम्॥ ११६॥

द्रोहिणं द्रुहिणो वेत्तु त्वामाकर्णावकीर्णिनम्।
त्वज्जनैरपि वा धातुः सेतुर्लङ्घ्यस्त्वया न किम्॥ ११७॥

त इति। ते देवाः अस्य कलेस्तं पूर्वोक्तमुच्चैरुत्कटमकारणमहेतुकमहङ्कारं गर्वमवज्ञाय विगणय्य अतएवातिचिरेण अविलम्बेन मिथो दृष्टमुखाः परस्परमुखावलोकिनः सन्तः स्मित्वा ईषद्धसित्वा एनं कलिं अचिरे ऊचुः॥ ११४॥

पुनरिति। हे कले! पुनरेवं मा मा वक्ष्यसि सम्भ्रमे द्विरुक्तिः। नैवं वक्तव्यं यतो नसहिष्यामह इत्यर्थः। अनक्लृप्त्यमर्षयोः किं वृत्तेऽपीत्यमर्षार्थे वचेर्लृट्। सः कथं नोद्वक्ष्यसे परिणेष्यसि वहेर्लृट्। कुतः यत्त्वां परमे तिष्ठतीति परमेष्ठी पितामहः परमे स्थः किच्चेति निराकरणमिति वक्तव्यात् षत्वं। नैष्ठिकब्रह्मचारिणं यावज्जीवब्रह्मचारिणं स्रष्टवान् स चालङ्घ्यशासन इति भावः॥११५॥

द्रोहिणमिति। अथवा त्वज्जनैस्त्वद्भृत्यैः कामक्रोधादिभिरपि ब्राह्मणः सेतुर्मर्यादानियोग इति यावत् लङ्घ्यो लङ्घयितुं शक्यः शकिलिङ्चेति चकाराच्छक्यार्थे क्यप्रत्ययः। त्वया तत् स्वामिना द्रुहिण किं न लङ्घ्यः? लङ्घ्य एवेत्यर्थः। किन्तु अवकीर्णं स्खलितमनेनेत्यवकीर्णी क्षतव्रतः इष्टादिभ्यश्चेति इनप्रत्ययः। य मवकीर्णिनं अतएव द्रोहिणम् अस्मालङ्घनापराधीनं त्वामाकर्णं द्रुहिणो ब्रह्मैव वेत्तु जानातु यत्कर्त्तव्यं यदित्यर्थः। किं तया अस्माकमित्यर्थः॥ ११६॥

अतीति। किन्तु त्रैलोक्ये यूनां गर्वनुत् गर्वहन्ता स वृत्तान्तः स्वय-

अतिवृत्तः स वृत्तान्तस्त्रैलोक्ययुवगर्वभुत्।
आगच्छतामुपादानं स स्वयम्बर एव नः॥ ११८॥

नागेषु सानुरागेषु पश्यत्सु दिविषत्सु च।
भूमिपालं नलं भैमी वरं साववरद्वरम्॥ ११९॥

भुजगेशानसद्वेषान् वानरानितरान् नरान्।
अमरान् पामरान् भैमी नलं वेद गुणोज्ज्वलम्॥ १२०॥

इति श्रुत्वा स रोषान्धः परमश्चरमं युगम्।
जगन्नाशनिशारुद्रमुद्रस्तानुक्तवानदः॥ १२१॥

स्वर प्रसङ्गो अतिवृत्तो अतीतः कुत आगच्छतां नोऽस्माकं स्वयम्बरएव मुपादान मवस्थानं तत एवागच्छाम इत्यर्थः॥ ११७॥

नागेष्विति। नागेषु नागकुमारेषु च सानुरागेषु अनुरागयुक्तेषु पश्यत्सु सत्सु षष्ठी चानादर इति चकारात् अनादरे सप्तमी। भैमी-भूमिपालं नलं वरं नलमेव वरं वोढ़ार अववरत् वृणोतिश्च वरयते चौरादिकाद्धीप्सायान्तदन्तात्लङ् अग्लोपत्वेनासन्वद्भावादित्वदीर्घयोर भावः॥ ११८॥

भुजगेति। भैमी भुजगेशान् महानागानसद्वेषानसाधारवेषानि-तरान्नरादन्यान् नरेन्द्रान् वानरानमरानिन्द्रादीन् पामरान्नीचान् विवर्णः पामरो नीचः इत्यमरः। वेद वेत्ति विदोलटो वेति णलादेशः नल-मेव गुणोज्ज्वलं गुणाढ्यं वेद॥ ११९॥

इतीति। इतीदं श्रुत्वा अतएव रोषेण अन्धः परमः प्रधानपरवशः चरमं युगं चतुर्युगमपि स कलिः जगन्नाशनिशा कालरात्रिः तत्र रुद्रः कालान्तकः तस्य मुद्रेव मुद्रा प्रकारो यस्य सः तादृशः सन् तानिन्द्रादी नदो वक्ष्यमाणं वाक्यमुक्तवान्॥ १२०॥

कयापि क्रीड़तु ब्रह्मा दिव्याः स्त्रीर्दीव्यत स्वयम् ।
कलिस्तु चरतु ब्रह्म प्रैतु चातिप्रियाय वः ॥ १२२ ॥
चर्य्यैव कतमेयं वः परस्मै धर्मदेशिनाम् ।
स्वयं तत् कुर्वतां सर्वं श्रोतुं यद्बिभितः श्रुती ॥ १२३ ॥
तत्र स्वयम्वरेऽलम्भि भुवः श्रीर्नैषधेन सा ।
जगतो ह्रीश्च युष्माभिर्लाभस्तुल्याभ एव वः ॥ १२४ ॥

यदुक्तं पुनर्वस्त्यसीत्यादिना श्लोकद्वयेन तत्रोत्तरं सोल्लुण्ठमाह कयापीत्यादिना श्लोकद्वयेन । हे देवाः ! ब्रह्मा कयापि अगम्योऽपीति भावः । प्रजापतिर्वै स्वां दुहितरमभ्यगादिति श्रुतेः । क्रीडतु अमृतान् स्वयं यूयञ्च दिव्याः स्त्रीर्दिव्याभिर्वेश्यादिभिरपीति भावः कर्मचेति करणस्य कर्मत्वं । दिव्यत क्रीडत कलिस्तु वो युष्माकम् अतिप्रियाय अत्यन्तप्रियार्थे ब्रह्म चरतु नैष्ठिक स्तिष्ठतु प्रैतु म्रियतु म्रियताञ्च ॥ १२१ ॥

ततः किं तत्राह चर्य्यैवेति । परस्मै धर्मदेशिनां स्वयं तु यत्कर्म श्रुती कर्णौ श्रोतुं बिभितः भीयोह्रोऽन्यतरस्यामिति विकल्पादकारः । सर्वं तत् •पारदार्यादिकं कुर्वता अहल्यायै जारेतिश्रुतेः । वो युष्माकं चर्य्या कतमा कीदृशी अवाच्येत्यर्थः । स्वयमनाचरिणां परोपदेशवचन मविश्वसनीयमिति भावः ॥ १२२ ॥

यदुक्तमिति वृत्तान्त इत्यादिना श्लोकत्रयेण तत्रोत्तरं प्रपञ्चेनाह तत्रेत्यादिभिः षोडशभिः । हे देवाः ! तत्र स्वयम्बरे भूपश्रीः भूलोकलक्ष्मीः सा भैमी नैषधेन नलेन अलम्भि लब्धा लभेर्ण्यन्तात्कर्मणि लुङि विभाषा चिण्णमुलोः,विकल्पान्नुमागमः । युष्माभिस्तु जगतः स्वर्लोकस्य ह्रीः अलम्भि स्वर्लोकलज्जाकरमिदम यमानमिति भावः । एवं लाभो युष्माकं नलस्य च त्वदाद्येकशेषः । तुल्याभः समानस्फूर्त्तिरेकरूप एव लज्ज एवं भिन्नमिति भावः ॥ १२३ ॥

दूरादिति । •हे देवाः ! दूरान्नोऽस्मान् प्रेक्ष्य युष्माक मियं यौष्माकी

दूरान्नः प्रेक्ष्य यौष्माकी युक्तेयं वक्रवक्रणा ।
लज्जयैवासमर्थानां मुखमास्माकमीक्षितुम् ॥ १२५ ॥

स्थितं भवद्भिः पश्यद्भिः कथं भो ! तदुदासितम् ।
निर्दग्धा दुर्विदग्धा किं सा दृशा न ज्वलत्क्रुधा ॥ १२५ ॥

महावंशाननादृत्य महान्तमभिलाषुका ।
स्वीचकार कथंकारमहो सा तरलं नलम् ॥ १२६ ॥

भवादृशैर्दिगामीशैर्वृण्यमाणां स्वर्गौकसाम् ।
स्वीकुर्वाणः कथं सोढः कुलव्रीड़मृगी नलः ॥ १२७ ॥

युष्मदस्मदोरन्यतरस्याम् इत्यणि प्रत्यये तस्मिन्नणि चेत्यादिना युष्माकादेशे टिड्ढाणञित्यादिना ङीप् । इयं वक्राणां वक्रणा वक्रीकरणं तिर्यङ्मुखत्वं तत्करोतीति ण्यन्ताद्युच् । लज्जयैव स्वापराधित्वादिति भावः । अस्माकमिदमास्माकं यौष्माकीवत् प्रक्रिया मुखमीक्षितुमसमर्थानां सतां युक्ता ॥ १२४ ॥

स्थितमिति । भो देवाः ! कथं भवद्भिः स्थितमुदासितं भावे क्तः । तदौदासीन्यमसाम्प्रतमयुक्तं किं तर्हि तत्कार्यं तदाह । दुर्विदग्धा दुर्विनीता सा भैमी ज्वलत्क्रुधा दीप्यमानकोपया दृशा किं न निर्दग्धा दग्धेवेत्यर्थः ॥ १२५ ॥

दाहत्वे हेतुमाह महेति । महान्तम् उत्कृष्टपुरुषमभिलाषुका कामयमाना लषपतेत्यादिना उकञ् प्रत्ययः न लोकेत्यादिना षष्ठी प्रतिषेधः । सा भैमी महावंशानुत्कृष्टकुलानन्यकृतो वंशाः वंशो वेणौ कुले वर्ग इति विश्वः । अनादृत्यावधीर्य तरलं चपलं नलं राजानं तरलो हारविशेषश्च मतः पीठगते राशि इति विश्वः । कथङ्कारं कथमित्यर्थः अन्यथैव कथ इत्यादिना णमुल्प्रत्ययः । स्वीचकार वव्रे अहो ! इत्याश्चर्येण नदीवेगे पतित वेणौ तृणावलम्बनवदपहास्यमिदं चेष्टितमिति भावः ॥ १२६ ॥

भवादृशैरिति । भवादृशैर्भवद्विधैर्दिगामीशैर्दिक्पालैर्वृण्यमाणा

दारुणः कूटमाश्रित्य शिखी साक्षी भवन्नपि ।
नावहत् किं तदुद्वाहे कूटसाक्षिक्रियामयम् ॥ १२८ ॥

अहो महःसहायानां सम्भूता भवतामपि ।
क्षमैवास्मै कलङ्काय दैवस्येवाम्बतद्युतेः ॥ १२९ ॥

सा वव्रे यं तमुत्सृज्य मह्यमीर्ष्याजुषः स्थ किम् ।
ब्रूतागःसद्मनस्तस्माच्छद्मनाद्याच्छिनद्मि ताम् ॥ १३० ॥

---

सन्निध्यमानां स्वगेहाणां भैमीं स्वं कुर्वाणो दृष्टत्वात एव कृतव्रीडो भवतां कृतावज्ञः व्रीडावभाननावसत्यभरः । तेन तपस्वल्यो नलः कथं सोढः क्षान्तः महद्भिः हि परिभवो न सोढव्य मित्यर्थः ॥ १२७ ॥

दारुण इति । अयं शिखी शिखावानग्निः दारुणः काष्ठस्य कूटं राशि माश्रित्य साक्षित्वादिति भावः । अन्यत्र दारुणः क्रूरकर्मा सर्वदाहकत्वादिति भावः । अतएव कूटं कपटं आश्रित्य साक्षी भवन्नपि कपटसाक्षिशीलोऽपि सन्निति च गम्यते । तदुद्वाहे तयो दमयन्तीनलयो विवाहे कूटसाक्षिणः क्रियां अन्ततरदनव्यापारं किं न वहत् तदानग्निसाक्षिकोऽयं न सिद्ध्येदिति भावः ॥ १२८ ॥

अहो इति । अहो देवाः ! महःसहायानां तेजस्विनां भवतामम्बतद्युते र्दैवस्येन्दोरिव क्षमा क्षान्तिरेव । अन्यत्र क्षितिरेवास्मै श्रीपरिभवरूपाय कलङ्काय अपवादाय सम्भूता सञ्जाता यतान् स्त्रियोऽपि नगणयन्तीति भावः । क्षितिक्षान्त्योः क्षमा कलङ्कोऽङ्कापवादयोरिति चामरः । चन्द्रश्यामिका भूच्छायेवेति केचित् ॥ १२९ ॥

सेति । हे देवाः ! सा भैमी नलं वव्रे तम् उत्सृज्य अपराधिनं तं विहाय किं किमर्थं मह्यं मां प्रति क्रुधद्रुहेत्यादिना सम्प्रदानत्वाच्चतुर्थी । ईर्ष्याजुषः स्थ कोपभाजः स्थ ब्रूत अस्तु वा अहमेव आगः सद्मनो अपराधाकरात्तस्मान्नलात् अद्यैव तां भैमीं छद्मना कपटेन आच्छिनद्मि आहरामि सामीप्ये वर्त्तमाननिर्देशः ॥ १३० ॥

यतध्वं सह कर्त्तुं मां पाञ्चाली पाण्डवैरिव।
सापि पञ्चभिरस्माभिः संविभज्यैव भुज्यताम् ॥ १३१ ॥

अथापरिहृढा सोढुं मूर्खतां मुखरस्य ताम्।
चक्रे गिरा शराघातं भारती सारतीव्रया ॥ १३२ ॥

कीर्त्तिं भैमीं वरांश्चास्मै दातुमेवागमन्नमी।
न लीढे धीरवैदग्धीं धीरगम्भीरगाहिनी ॥ १३३ ॥

वाग्मिनीं जडजिह्वस्तां प्रतिवक्तुमशक्तिमान्।
लीलावहेलितां कृत्वा देवानेवावदत् कलिः ॥ १३४ ॥

ततः किमस्माकमत आह यतध्वमिति। पाञ्चाली द्रौपदी पाण्डवैरिव सा भैमी चास्माभिर्मया युष्माभिश्चतुर्भिश्च त्यदाद्येकशेष। पञ्चभिः संविभज्य भुज्यतां किन्तु मां सह कर्त्तुं सहायीभवितुं यतध्वम् अतो मामनुमन्यध्व इति भावः। अत्रानागतत्वात्तु प्रवाहनित्यत्वाद्वा कृतयुगे द्वापरपुरुषोपमा ॥ १३१ ॥

अथेति। अथ कलिवचनानन्तरं भारती सरस्वती मुखरस्य प्रलपतः कलेस्तां तादृशीं मूर्खतां मूढतां सोढुमपरिहृढा असमर्था सती प्रभौ परिवृढ इति निपातनात् साधु। सारेण अभिनिवेशेन तीव्रया तीक्ष्णया गिरा वाचैव शराघातं शरप्रहारं चक्रे वाक्सायकेन जघान इत्यर्थः ॥
॥ १३२ ॥

कीर्त्तिमिति। हे शठ! अमी देवाः अस्मै नलाय कीर्त्तिं पुण्यश्लोकतां भैमीं वरं ईप्सितं च दातुमेवागमन्नागताः न तु स्वयन्तां परिग्रहीतुं परिणेतुं गमेर्लुङि इदित्वात् च्लेरङादेशः। तथा हि धीरगम्भीरावगाहिनी [illegible]ग्राहिणी धीरवादया बुद्धिधीराणां मनीषिणां वैदग्धीमभिप्रायं न लीढे नास्वादयति न वेत्तीति व्याख्याता वैदग्धी ॥ १३३ ॥

वाग्मिनीमिति। जडजिह्वोऽप्रगल्भवाक्कलिः वाग्मिनीं प्रगल्भवा-

प्रौञ्छि वाञ्छितमस्माभिरपि तां प्रति सम्प्रति ।
तस्मिन्नले न लेशोऽपि कारुण्यस्यास्ति नः पुनः ॥ १३५ ॥

वृत्ते कर्मणि कुर्मः किं तदा नाभूम तत्र यत् ।
कालोचितमिदानीं नः शृणुतालोचितं सुराः ! ॥ १३६ ॥

प्रतिज्ञेयं नले विज्ञाः ! कलेर्विज्ञायतां मम ।
तेन भैमीञ्च भूमिञ्च त्याजयामि जयामि तम् ॥ १३७ ॥

नैषधेन विरोधं मे चण्डतामण्डितौजसः ।
जगन्ति हन्त गायन्तु रवेः कैरववैरवत् ॥ १३८

उक्तां भारतीं प्रतिवक्तुं मनीश्वरः असक्तः सन् लीलाविशेषेण अवहेलिता मवधीरितां कृत्वा अगणयित्वेत्यर्थः देवानेवावदत् ॥ १२४ ॥

प्रौञ्छीति । सम्प्रत्यस्माभिरपि तां भैमीं प्रति वाञ्छितमिच्छां प्रौञ्छि प्रोञ्छितं उञ्छतेः कर्मणि लुङ् । किन्तु सम्प्रति तस्मिन्नले नोऽस्माकं कारुण्यस्य लेशोऽपि नास्ति ॥ १३५ ॥

अकरणस्य कृतार्थं किं करिष्यतीत्याशङ्क्याह वृत्त इति । हे सुराः ! देवाः ! वृत्ते गते कर्मणि भैमीवरणकर्मणि किं कुर्मः न किञ्चिदित्यर्थः । यद्यस्मात् तदा तत्काले तत्र स्वयम्वरे नाभूम नास्मेत्यर्थः । किन्तु कालोचितमेतत् कालोचितं इदानीम् यस्मिन् काले नोऽस्माकमालोचितं पुनः भावे क्तः । शृणुत ॥ १३६ ॥

प्रतिज्ञेति । हे विज्ञाः ! नले विषये कलेर्ममेयं प्रतिज्ञा विज्ञायता मवधार्य्यतां तामेवाह तेन नलेन प्रयोज्येन भैमीञ्च भूमीञ्च राज्यञ्च त्याजयामि अतएव तं नलं जयामि उभयत्र सामीप्ये वर्त्तमानप्रत्ययः ॥१३७॥

नैषधेनेति । चण्डतामण्डितौजसः क्रौर्य्योपस्कृततेजसो मे कले नैषधेन नलेन सह विरोधं रवेः कैरवैः कुमुदैर्वैरवत्तत्तुल्यं जगन्ति लोकाः गायन्तु हन्तेति हर्षे ॥ १३८ ॥

द्वापरः साधुकारेण तद्विकारमदीदिपत्।
प्रणीय श्रवणे पाणिमवोचन्नमुचे रिपुः॥ १३९॥

विस्मेयमतिरस्मासु साधु वैलक्ष्यमीक्षसे।
यद्दत्तेऽल्पमनल्पाय तद्दत्ते ह्रियमात्मने॥ १४०॥

फलसीमां चतुर्वर्गं यच्छतांशोऽपि यच्छति।
नलस्यास्मदुपज्ञा सा भक्तिर्भूतावकेशिनी॥ १४१॥

द्वापर इति। द्वापरः कलेः सहचारियुगविशेषः साधुकारेण साध्वित्यनुकरणेन तस्य कलेर्विकारं प्रलापमदीदिपत् अजूदिपत् दीप्यतेर्णौ चङि भ्राजभासभाषदीपजीवेत्यादिना विकल्पादुपधा ह्रस्वः दीर्घो लघोरित्यभ्यासदीर्घः। अथ नमुचेः रिपुरिन्द्रः श्रवणे कर्णे पाणिं प्रणीय निधाय कर्णौ पिधायेत्यर्थः. अवोचत्॥ १३९॥

विस्मेयेति। हे कले! विस्मेयमतिर्विस्मयनीयबुद्धिस्त्वं अस्मासु वैलक्ष्यं ह्रीःतामीक्षसे पश्यसि साधु अनतोऽल्पस्तु यस्मिन्नित्यनिरति यदुक्तं तत्साधूक्तमित्यर्थः। कुतः अनल्पाय महार्हाय यद्दत्ते तदल्पदमात्मने दात्रे ह्रियं दत्ते अधिकदानार्हाय अल्पदानं दातुरेव ह्रीकरमित्यर्थः॥ १४०॥

ततः किमत आह फलेति। यच्छतांशो यस्याः भक्तेः शततमांशोऽपि महाभागवतस्य द्वीतविषये पुरुषार्थत्वविभागवत्। फलसीमां फलावधि चतुर्वर्गं पुरुषार्थचतुष्टयं यच्छति ददाति पाघ्राध्मेत्यादिना यच्छादेशः। वयमुपज्ञ आश्रयो यस्याः सा अस्मदुपज्ञा उपज्ञ आश्रय इति निपातः। सा नलस्य भक्तिरवकं शून्यमिष्ट इत्यवकेशिनी निष्फला तान्त्यच्छस्ये निः स्त्रीभ्यो ङीप्। वन्ध्योऽफलोऽवकेशी चेत्यमरः। भूता तद्भक्तिश्चतुर्वर्गदानमपि न फलं न पर्याप्तं किं पुनर्भूमीदानमिति वर्णीनामस्माकं युक्तैव ह्रीरिति भावः॥ ४१॥

भव्यो न व्यवसायस्ते नले साधुमतौ कले ! ।
लोकपालविशालोऽसौ निषधानां सुधाकरः ॥ १४२ ॥
न पश्यामः कलेस्तस्मिन्नवकाशं क्षमाभृति ।
निश्चिताखिलधर्मे च द्वापरस्योदयं वयम् ॥ १४३ ॥
सा विनीततमा भैमी व्यर्थानर्थग्रहैरहो ।
कथं भवद्विधैर्बाध्या प्रमितिर्विभ्रमैरिव ॥ १४४ ॥
तन्नागत्ययुगं तां वा नेता स्पर्द्धिनुमर्हति ।
एकप्रकाशधर्माणं न कलिद्वापरौ ! युवाम् ॥ १४५ ॥

---

नेति । हे कले ! साधुमतौ सद्बुद्धौ नले ते तव व्यवसाय उद्योगो भव्यः खलो न कृतः निषधानां सुधाकरो असौ नलः लोकपालविशालः अतस्तदपकारो न श्रेयस्कर इति भाव. ॥ १४२ ॥

नेति । किञ्च क्षमाभृति क्षान्तिभृति अतएव तस्मिन् नले कलि-पुरुष य कलहस्य चावकाश वयं न पश्यामः धर्मेण भर्मौ पालयतः क्षान्तस्य कुतः कश्चिद्दोषः कलहो वेति भावः। किन्तु निश्चिता अखिलधर्मा येन तस्मिन् नले द्वापरस्य ततीययुगस्य सन्देहस्य चावकाशं न पश्यामः द्वापरौ युगसंशयौ इत्यमरशादवौ। धर्मसाकल्यनिश्चयत्तानयोस्तद्विरोधि-त्वादिति भाव. ॥ १४३ ॥

सेति । किञ्च विनीततमा अतिसाध्वी सा भैमी व्यर्थौ निष्प्रयो-जनोऽनर्थग्रहोऽकार्याभिनिवेशो येषान्तैर्भवद्विधैः युष्मादृशैः प्रमितिः सम्यगनुभूतिः विभ्रमैर्मिथ्याज्ञानैः इव कथं बाध्या बाधितुं शक्या न शक्येत्यर्थः। पातिव्रत्यतेजसो दुर्धर्षत्वादिति भावः। अतएवाहो इत्या-श्चर्याविष्कारः ॥ १४४ ॥

तदिति । हे कलिद्वापरौ ! युगविशेषौ ! प्रकाशधर्मा प्रकाशपुण्य-स्तेजः स्वभावश्च धर्मादनिचक्रेवलादनृ। धर्मा. पुण्ययमन्याय स्वभावाचार सोमपाः इत्यमरः। एकः केवलसङ्काशः प्रकाशधर्मा तमेकप्रकाश

करिष्येऽवश्यमित्युक्ता करिष्यन्नपि दुष्यसि।
दृष्टादृष्टा हि नायत्ताः कार्य्यीया हेतवस्तव॥ १४५॥
द्रोहं मोहेन यस्तस्मिन्नाचरेदचिरेण सः।
तत् पापसम्भवन्तापमाप्नुयादनयात्ततः॥ १४६॥
युगशेष! तत्र द्वेषस्तस्मिन्नेव न साम्प्रतम्।
भविता न हितायैतद्वैरं ते वैरसेनिना॥ १४७॥
तत्र यामीत्यसज्ज्ञानं राजसं हृदि हास्यताम्।
इति तत्र गतो मा गाः राजसंसदि हास्यताम्॥ १४८॥

धर्मांशम् एतत् स्त्रियामपि योज्यं। ईदृगं तं नलं तां दमयन्तीं वा अस्य युगं कृतयुगापेक्षया अधर्मयुग त्रेता युगविशेषः अग्नित्रयञ्च त्रेताग्नि त्रितयं युगः इत्यमरः। स्पर्धितुं नार्हति नामत्रयोर्युगमस्मिन्नोहयञ्च तं नलं स्पर्धितुं नार्हति सौन्दर्य्येणेति च गम्यते॥ १४५॥

करिष्य इति। हे कले! अवश्यं करिष्ये इत्युक्त्वा सर्वथा पापं करिष्यामीति प्रतिज्ञाय करिष्यन्नपि करिष्यमाणावस्थोऽपि दुष्यसि दुष्टोऽसि किमुत कृत्वेति भावः। तथा हि कार्य्यरूपे कार्य्यीयाः ढत्राक्यः। दृष्टादृष्टहेतवो दृष्टादृष्टकारणानि तवायत्ता अधीनाः न किन्तु बलादपि कार्य्यं सत्पादयन्ति तस्माद् दुर्वारस्ते दोषभावः॥१४६॥

द्रोहमिति। किञ्च यो मोहेन तस्मिन्नले विषये द्रोहमपकार माचरेत् सोऽचिरेण तस्मादनयाद् दुर्नयाद्धेतोस्तत्पापसम्भवं ततः द्रोहजन्यं पापं तीव्रयातनामाप्नुयात्॥ १४७॥

युगेति। हे युगशेष! युगाधम! कले! तव तस्मिन्नले एव द्वेषो न साम्प्रत न युक्त वैरसेनिना नलेन सह एतद्वैरं ते तव हिताय न भविता न भविष्यतीति॥ १४८॥

तत्रेति। हे कले! तत्र स्वयम्वरे यामि यास्यामीति सामीप्ये वर्त्तमानप्रत्ययः। उत्पद्यमानं राजसं रजःप्रयुक्तमसत् ज्ञानं दुर्बुद्धिरिहे-

अपरेऽपि दिशामीशा वाचमेनां शचीपतेः ।
अन्वमन्यन्त किन्त्वेनां नादत्त युगयोर्युगम् ॥ १५१ ॥

कलिं प्रति कलिं देवा देवान् प्रत्येकशः कलिः ।
सोपहासं समैर्वर्णैरित्थं व्यरचयन्मिथः ॥ १५२ ॥

तत्राऽऽगमनमेवार्हं वैरसेनौ तया वृते ।
उद्वेगेन विमानेन किमनेनापि धावता ॥ १५३ ॥

पुरा यासि वरीतुं यामग्र एव तया वृते ।
अन्यस्मिन् भवतो हास्यं वृत्तमेतत्त्रपाकरम् ॥ १५४ ॥

दानीम् अस्यतां निरस्यताम् अस्यतेः कर्मणि लोट् । इति इत्थं रागात् तत्र गतः सन् राजसंसदि राजसभायां हास्यता मुपहास्यतां मागाः ॥ १४८ ॥

अपर इति । दीशामीशाः अग्न्यादयोऽपि एतां शचीपतेर्वाचमन्वमन्यन्त तेऽपि तथैवोचुः किं त्वेनां वाचं युगयोः कलिद्वापरयोर्युगं युग्मं कर्त्तृ नाददे न स्वीचकार ॥ १५० ॥

कलिमिति । देवाः कलिं प्रति कलिश्च देवान् प्रति एकशः प्रत्येकं वीप्सायां शस् । सोपहास समैर्वर्णैरुभयसाधारणशब्दै रित्थं वक्ष्यमाणभङ्ग्या मिथः कलिं कलहं व्यरचन् ॥ १५१ ॥

कलहप्रकार मेवाह तत्रेति । हे मूर्ख ! तया भैम्या वैरसेनौ नले वृते सति तत्र स्वयम्बरे आगमन मप्राप्य मेवार्हम् अतएव उद्वेगेन धावता अनेन विमानेन व्योमयानेन किम्? अन्यत्र हे देवाः ! तत्र स्वयम्बरे तया नले वृते सति आगमनं ततः प्रत्याहरणम् अर्हं गमेर्ण्यन्ता ल्युट् तत्रानेन अपिधा अपिधानम् आतश्चोपसर्गे इण्प्रत्ययः । तद्वता निगूहितेन विमानेन मानोद्वेगेन वृथा व्यर्थमनेन किम् ? अत्र द्वयोः अप्यर्थयोः प्रकृतत्वात्केवलप्रकृतश्लेषः ॥ १५२ ॥

पुरेति । यां भैमीं वरीतुं पुरा यासि यास्यसि यावत्पुरानिपात-

पत्यौ तया हतेऽन्यस्मिन् यदर्थं गतवानसि।
भवतः कोपरोधस्तादधमस्य दृथाक्रुधः॥ १५५॥
यासि स्मरं जयन् कान्त्या योजनौघं महार्वता।
समूढस्त्वं हतेऽन्यस्मिन् किन्न ह्रीस्तेऽत्र पामर!॥ १५६॥

---

योर्लट्। तया अप एव प्रागेव अन्यस्मिन् हते सति तपाया आक्रम् आःकरायितम् एतद्भवतः अस्यं मुखं हा शोचामः इत्यर्थः। हा विषादादिष्वित्यमरः। अभितः परितः इत्यादिना हाशब्द योगे द्वितीया॥ १५३॥

पुनः पूर्ववत् श्लोकद्वयेन मिथः कलहमाह। हे कले! यस्यै यदर्थं गतवानसि तया भैम्या अन्यस्मिन् पत्यौ हते सति अधमस्य कार्य्याक्षमस्य अतएव वृथाक्रुधो निष्फलकोपस्य भवतः कोपरोधः स्तात् कोपस्य निरोधो अस्तु अस्तेर्लोटि तातङ् देशः अन्यत्र तु हे शक्र! अधमस्य भवतस्तव अधस्तात् अधरः कोऽपरः कोऽन्यः त्वत्तोऽधमः कश्चिन्नास्ति इत्यर्थः। समानमन्यत् दिक्शब्देभ्य सप्तमी इत्यादिना अधर शब्दात् प्रथमार्थे अस्ताति प्रत्यय अस्तीति चेत्यादेशः पश्चात्सर्वप्रत्यये नेति तद्योगषष्ठी॥ १५४॥

यासीति। हे पामर! नीच! कले! विवर्णः पामरो नीच इत्यमरः। त्वं महार्वता महाश्वेन विमानेन स मूढः सम्यक् ऊढः सन् कान्त्या सौन्दर्य्येण स्मरकाय जयन् तत्कल्पः सन्नित्यर्थः। योजनानां योजनाख्याध्वमानानां ओघं योजनन्तु चतुष्क्रोशमिति भावः। यासि गच्छसि किन्तु अत्र स्वयम्वरे अन्यस्मिन् हते सति ते ह्रीः न किम्? अन्यत्र तु हे अत्रप! निर्लज्ज! अमर! दैवत! त्वं कान्त्या कामनीयकेन जनौघं जनसमूहं जयन् यासि अत त्वं महोऽसि अतएव अस्मिन् हते तव ह्रीः किम्? पूर्ववदलङ्कारः॥ १५५॥

नर्म्मेति। अथ देवासुरसौर्याक्तर्यायो मूर्त्तयश्चतुर्योर्युगयो द्वापर कल्युगर्म कनन्नं प्रत्यनपता आर्सि पं इनेच्छा यस्य

नलं प्रत्यनपेतार्थौ तार्त्तीयीकतुरीययोः ।
युगयोर्युगलं बुद्ध्वा दिवि देवा धियं दधुः ॥ १५६ ॥
द्वापरैकपरीवारः कलिर्मत्सरमूर्च्छितः ।
नलनिग्राहिणीं यात्रां जग्राह ग्रहिलः किल ॥ १५७ ॥
नलेष्टापूर्त्तसम्पूर्त्तेर्दूरदुर्गानमुं प्रति ।
निषेधन्निषधान् गन्तुं विघ्नः सन्नघटे घनः ॥ १५८ ॥
कियतापि च कालेन कालः कलिरुपेयिवान् ।
भैमीभर्त्तुरहम्मानी राजधानीं महीभुजः ॥ १५९ ॥

---

तद्बुद्ध्वा दिवि धियं दधुः, दिवं गन्तुमैषुरित्यर्थः । तृतीयादीकः स्वार्थे वक्तव्यः चतुरच्छयौ वार्त्तिकतुरीयमिति ॥ १५६ ॥

द्वापरेति । मत्सरमूर्च्छितः मूर्च्छितमत्सरः मत्सरप्रवृद्धवैरः आहिताग्न्यादिषु द्रष्टव्यः । अतएव ग्रहिलः आग्रहवान् पिच्छादित्वात् मत्वर्थीय इलच्प्रत्ययः । कलिं द्वापर एकएव परीवारो यस्य तन्मात्रसहः सहित्यर्थः नलनिग्राहिणीं नलनिग्रहकारिणीमित्यर्थः । यात्रां जग्राह किल खलु ॥ १५७ ॥

नलेति । नलस्य इष्टापूर्त्तयोः क्रतुखातादिकर्मणोः त्रिष्वथ क्रतुकर्मेष्टं पूर्त्तं खातादि कर्मणीत्यमरः । सम्पूर्त्तेरभिव्याप्तेः कलिं प्रति दुःखेन गच्छन्त्येष्विति दुर्गाः दुरोरधिकरणे सुपकुन्नान्तमिति डप्रत्ययः । तान् दूरदुर्गानतिदुर्गमान्निषधान् देशान् गन्तुं निषेधन् गमनं प्रतिबध्नन् घनो निरन्तरो विघ्नः सन्नघटे घटितवानित्यर्थः । धर्मगुप्ततया निषधदेशाः कलिनापि दुष्प्रापा बभूवुरित्यर्थः ॥ १५८ ॥

कियतेति । अथ कियता च कालेन अहम्मानी अहङ्कारी कलिः कालः भैमीभर्त्तुः महीभुजो नलस्य राजानो धीयन्तेऽस्यामिति राजधानी नगरी करणाधिकरणयोश्चेत्यधिकरणार्थे ल्युट् । तामुपेयिवान् उपगतः निपातनात्साधुः ॥ १५९ ॥

वेदानुद्धरतां तत्र मुखादाकर्षयन् पदम् ।
न प्रसारयितुं कालः कलिः पदमपारयत् ॥ १६० ॥
श्रुतिपाठकवक्त्रेभ्यस्तत्राकर्णयतः क्रमम् ।
क्रमः सङ्कुचितस्तस्य पुरे दूरमवर्त्तत ॥ १६१ ॥
तावद्गतिर्धृताटोपा पादयोस्तेन संहिता ।
न वेदपाठिकण्ठेभ्यो यावदश्रावि संहिता ॥ १६२ ॥
तस्य होमाज्यगन्धेन नासा नाशमिवाऽगमत् ॥
तत्रातत दृशौ नाशौ क्रतुधूमकदर्थिते ॥ १६३ ॥

अथात्र संहितादित्रिविधाध्ययनसम्पत्तिं क्रमादनादरेणाह वेदानिति । तत्र राजधान्यां वेदानुद्धरतामुच्चारयतामधीयानानामित्यर्थः । मुखात्पद इतिपराख्यं पदजातमाकर्णयन् पदं प्रसारयितुं नापारयत् नाशक्नोत् ॥ १६० ॥

श्रुतीति । तत्र पुरे श्रुतिपाठकवक्त्रेभ्यो वेदाध्येतृमुखेभ्यः क्रमसुभयापराख्यं पदजातमाकर्णयतस्तस्य कलेः क्रमः पादन्यासः सङ्कुचितः सन् दूरमवर्त्तत प्रवेशाभावात् दूरे स्थित इत्यर्थः ॥ १६१ ॥

तावदिति । तावत् तत्पर्यन्तं तेन कलिना पादयोः धृताटोपा ससम्भ्रमा गतिः संहिता सङ्गता यावद्वेदपाठिनामध्येतॄणां कण्ठेभ्यो मुखेभ्यः संहिता नाश्रावि न श्रुता तच्छ्रोतृभय एव पादयोरिति भावः । तदेतदाचरयन् श्रुतं अन्नाद्यकामो निर्भुज ब्रूयात् स्वर्गकामः प्रतृण्णन् उभयकाम उभयमन्तरेणेति ॥ १६२ ॥

तस्येति । तत्र पुरे होमाज्यगन्धेन तस्य कलेर्नासा घ्राणेन्द्रियं नाशमगमदिव अस्य कलेः क्रतुधूमेन कदर्थिते अन्धीकृते दृशौ नेत्रे नातत नातनिष्ट नोन्मीलितत्वामित्यर्थः । तनोतेर्लुङि तङ् तनादिभ्य

अतिथीनां पदाम्भोभिरिमं प्रत्यतिपिच्छिले।
अङ्गणे स्वङ्गिणा मत्र खलेनानेन चस्खले॥ १६४॥

पुटपाकमिव प्राप क्रतुधुम्ममहोर्मिभिः।
तत्प्रत्यङ्गमिवाकर्त्ति पूर्त्तोर्मिव्यजनानिलैः॥ १६५॥

पितॄणां तर्पणे वर्णैः कीर्णाद्वेश्मनि वेश्मनि।
कालादिव तिलात् कालाद् दूरमत्रसदत्र सः॥ १६६॥

स्नातॄणां तिलकैर्मेने स्वमन्तर्दीर्णमिव सः।
कृपाणीभूय हृदयं प्रविष्टैरिव तस्य तैः॥ १६७॥

स्तथायोरिति सिज्लुक् पक्षे अनुदात्तोपदेशेत्यादिना अनुनासिकलोपः॥ १६१॥

अतिथीनामिति। अत्र पुरे अतिथीनां पदाम्भोभिः पादप्रक्षालनोदकैः अमुं कलिं प्रति अतिपिच्छिले अत्यन्तप्रदरे पिच्छादित्वादिलच्प्रत्ययः। स्वङ्गिणां स्वङ्गस्थानां अङ्गणे खलेन धूर्त्तेण तेन कलिना चस्खले स्खलितं भावेलिट्॥ १६४॥

पुटेति। असौ कलिः क्रतुषु धूम्राणामग्नीनां महोर्मिभिर्महाविटपैः वह्निः धूम्रा कृष्णवर्त्मा इत्यमरः। पुटपाकं गूढ़पाकं प्रापत् इवेत्युत्प्रेक्षा। पापी तडागादीनां मूर्मयएव व्यजनानि तेषामनिलैः तत्प्रत्यङ्गं तस्य कलेः रङ्गजातं वीप्सायामव्ययीभावः। अकर्त्तीव कृत्तमिवेत्युत्प्रेक्षा कृतिच्छेदने इति धातोः कर्मणि लुङ्॥ १६५॥

पितॄणामिति। स कलिः तत्र पुरे वेश्मनि वेश्मनि गृहे गृहे वीप्सायां द्विर्भावः। वर्णैश्चातुर्वर्ण्येन पितॄणां तर्पणे तर्पणकर्मणि कीर्णात् विक्षिप्तात् कालात्तिलात् कृष्णतिलात् कालान्मृत्योरिव अत्रसत् त्रसः कालो मृत्यौ महाकाले यमयो र्यमकृष्णयोः इति विश्वः॥ १६६॥

स्नातॄणामिति। तस्य कलेः हृदयं कृपाणीभूय खड्गीभूय प्रविष्टै-

पुमांसं मुमुदे तत्र विन्दन् मिथ्यावदावदम् ।
स्त्रियं प्रति तथा वीक्ष्य तमथ ग्लानवानयम् ॥ १६८ ॥
यज्ञयूपघनां जज्ञौ स पुरं शङ्कुसङ्कुलाम् ।
जनैर्धर्मधनैः कीर्णां व्यालक्रोड़ीकृतामिव ताम् ॥ १६९ ॥
स पार्श्वमशकल्लन्तुं न वराकः पराकिणाम् ।
मासोपवासिनां छाया लङ्घने घनमस्खलत् ॥ १७० ॥
आवाहितां द्विजैस्तत्र गायत्रीमर्कमण्डलात् ।
स सन्निदधतीं पश्यन् दृष्टनष्टोऽभवद्भिया ॥ १७१ ॥

रिव स्थितैः प्रसिद्धैः स तृणां ध्यायिनां तितक्षैः स कलिः स्वमात्मानम् अन्तर्दीर्घमेव मेने ॥ १६७ ॥

पुमांसमिति । अयं कलि स्तत्र पुरे मिथ्या अनृतं तथा वदावदं पक्षारं वरिचलोत्यादिना द्वित्वमात्वमभ्यासस्येति साधु । पुमांसं विन्दन् पश्यन् मुमुदे तदाचारो धर्मविरुद्धमिति भावः । अथ स्त्रियं प्रति तथा मिथ्यावदन्तं वीक्ष्य नर्मोक्तिं ज्ञात्वेत्यर्थः । ग्लानवान् ग्लानोऽभूत् अत्र दोषाभावादिति भावः । संयोगादे रातोधातो र्यति निष्ठा नत्वम् ॥ १६८ ॥

यज्ञेति । स कलिः यज्ञयूपैर्घनां निरन्तरां पुरं शङ्कुसङ्कुलां धर्माकीर्णां तां पुरीं व्यालैः सर्पैः श्वापदै र्वा क्रोड़ीकृतां अङ्गीकृतां जज्ञौ तथा दुरासदममन्यतेत्यर्थः । व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनीति विश्वः ॥ १६९ ॥

स इति । वराकस्तुच्छः स कलिः पराकिणां कृच्छ्रविशेषचारिणां द्वादशाहोपवासस्तु पराकः परिकीर्त्तित इति स्मरणात् । पार्श्वं समीपं लन्तुं प्राप्तुं नाशकत् शकेर्लृदित्वात् च्लेरङादेशः । मासोपवासिनां तु छायालङ्घने छायाक्रमणे घनं भृशम् अस्खलत् दुरासदत्वात् तपस्विनाम् इति भावः ॥ १७० ॥

आवाहितामिति । स कलि स्तत्र पुरे द्विजै रावाहितामाहूताम्

स गृह्ये गृहिणां पूर्णे घने वैखानसैर्वृते ।
यत्याधारेऽमरागारे क्वापि न स्थानमानशे ॥ १७२ ॥
हिंसागवीं मखे वीक्ष्य रिरंसुर्धावति स्म सः ।
सा तु सौम्यवृषासक्ता खरं दूरान्निराम तम् ॥ १७३ ॥
क्वापि नापश्यदन्विष्यन् हिंसामात्मप्रियामसौ ।
स्वमित्रं तत्र न प्रापदपि मूर्खमुखे कलिम् ॥ १७४ ॥

अनन्तरमर्कमण्डलात् सन्निदधतीं सन्निहितां सतीं गायत्रीं गायत्रीदेवीं पश्यन् भिया दृष्टनष्टः पूर्वं दृष्टो अनन्तरमदृष्टः सद्य एवादर्शनं गतोऽभवत् स्नातानुलिप्तवत् पूर्वकालसमासः ॥ १७१ ॥

स इति । स कलि गृहिणां पूर्णे गृहस्थैः पूर्णे सम्बन्धसामान्ये षष्ठी । गृह्ये वैखानसैर्वानप्रस्थैः वैखानसोवने वासी वानप्रस्थश्च तापस इति यादवः । वृते घने निरन्तरे यतिनामाधारे यत्यधिष्ठित इत्यर्थः । अमरागारे देवालये क्वापि स्थानं स्थितं नानशे न लेभे अत आदेरश्नोतेर्यञ्चेत्यभ्यास दीर्घनुडागमौ ॥ १७२ ॥

हिंसेति । स कलिः मखे हिंसायां गौस्तां हिंसागवीम् अश्व्यार्थामित्यर्थः । गोरतद्धितलुगिति समासान्त टच् । वीक्ष्य रिरंसुरन्तमिच्छुः विहर्त्तुमिच्छुरमेः सनन्तादुप्रत्ययः । धावति स्म द्रुतमगात् सा-गौस्तु सौम्यः सोमयागः स एव वृषोधर्म स्तत्र आसक्ता सक्ता तदधीनेत्यर्थः । तरुण वृषभाक्रान्ता चेति गम्यते सुकृते वृषभे वृषः इत्यमरः । अतएव खरं क्रूरं कलिं खरं गर्दभं दूरं निरामे वृषाक्रान्ताया गोः खरनिःसारणं युक्तमिति भावः ॥ १७३ ॥

क्वापीति । असौ कलिः तत्र पुरे क्वाप्यात्मनः प्रिया मिष्टाम् अन्विष्यन्नापश्यत् मूर्खमुखे मूढवक्त्रेऽपि स्वस्य मित्रमनुकूलं कलिं कलहञ्च न प्रापत् प्रजानां तथा नियमन टिति भाव. ॥ १७४ ॥

आनन्दन्मदिरादानं विन्दन्नेष द्विजन्मनः ।
दृष्ट्वा सौत्रामणीमिष्टिं तं कुर्वन्तमदूयत ॥ १७९ ॥
अपश्यद्यावतो ब्रह्मविदां ब्रह्माञ्जलीनसौ ।
उदडीयन्त तावन्तस्तस्याशाञ्जलयो हृदः ॥ १८० ॥
स्नातकं घातकं जज्ञे जज्ञौ दान्तं कृतान्तवत् ।
वाचंयमस्य दृष्ट्यैव यमस्येव बिभाय सः ॥ १८१ ॥

भावः । भृङ्गो कुड्मादिपाव्यापि फणिनो भुजङ्गैर्मन्वानः तस्य आमनत् अस्तु बाध्यस्तु सुभीत अत स्वयं फणिनांभ्रान्त्या भ्रान्तिमदलङ्कारः ॥ १७८ ॥

आनन्ददिति । एष कलिः द्विजन्मनो ब्राह्मणस्य मदिराया आदानं सुरापानं विन्दन्नानन्दत् अनाचारबुद्ध्या हृष्टवान् अथ तं ब्राह्मणं सौत्रामणीं सुत्रामण्याख्याम् इष्टिं कुर्वन्तं दृष्ट्वा अदूयत पर्यतप्यत सुरापानविधानात्तु पापं तस्य निराश्रमभूदित्यर्थः ॥ १७९ ॥

अपश्यदिति । असौ कलिः ब्रह्मविदां ब्रह्माध्यायिनां यावतो ब्रह्माञ्जलीनध्ययनकालीन मञ्जलीन् संहत्य हस्तावस्थेयं स हि ब्रह्माञ्जलिः स्मृतः इति स्मरणात् । पाठे ब्रह्माञ्जलिः इत्यमरः । अपश्यत् तावतः तस्य कलेः आशाञ्जलयो रक्ताञ्जलयो हृदः कलिहृदयादुदडीयन्त उड्डीना इत्यर्थः ॥ १८० ॥

स्नातकमिति । सः कलिः स्नातकं समाप्तवेदं स्नातकाद्वेदसमाप्ताविति कन्प्रत्ययः । तं घातुकं हन्तारं लषपतेत्यादिना उकञ्प्रत्ययः । जज्ञौ मेने दान्तं तपस्विनं तपःक्लेशसहो दान्त इत्यमरः । कृतान्तवत् कृतान्ततुल्यं जज्ञौ वाचं यच्छतीति वाचंयमो मौनव्रती वाचि यमो व्रत इति खच्प्रत्ययः । वाचंयमपुरन्दरौ चेति निपातनात्साधुः । यमस्य यमस्येव दृष्ट्या दर्शनेनैव बिभाय भीतवान् भियो लिट् । सर्वत्रैषां तपसो दुर्धर्षत्वाद्भीतिरिति द्रष्टव्यम् ॥ १८१ ॥

स पाषण्डजनान्वेषी प्राप्नुवन् वेदपण्डितम्।
जलार्थीवानलं प्राप्य पापस्तापादपासरत्॥ १८२॥

तत्र ब्रह्महणं पश्यन्नतिसन्तोषमानसो।
निर्वर्ण्य सर्वमेधस्य यज्वानं ज्वलति स्म सः॥ १८३॥

यतिहस्तस्थितैर्यस्य राम्भैरारम्भि तर्जना।
दुर्जनस्याजनि क्लिष्टिर्दण्डिनां वेदयष्टिभिः॥ १८४॥

मण्डलत्यागमेवैच्छद्वीक्ष्य स्थण्डिलशायिनः।
पवित्रालोकनादेष पवित्रासमविन्दत॥ १८५॥

स इति। पापः क्रूरः स कलिः पाषण्डजनान्वेषी सन् वेदपण्डितं वैदिकं प्राप्नुवन् जलार्थी अनलं प्राप्येव तापात् तत्प्राप्तिजन्यसन्तापात् ऽपासरत् अपसृतः ब्रह्मतेजसः पाषण्डदाहकत्वादिति भावः॥१८२॥

तत्रेति। एषः कलिः तत्र पुरे ब्रह्महणं ब्राह्मणं हतवन्तं ब्रह्मभ्रूण वृत्रेषु क्विप्। पश्यन् सन्तोषमानसोऽपि अथ तं ब्रह्महणं सर्वमेधाख्ययागस्य यज्वानं तद्याजिनं निर्वर्ण्य निश्चित्य ज्वलति स्म सन्तप्तोऽभूत् ब्रह्मणे ब्राह्मणमालभेत इति श्रुत्या सर्वमेधे ब्राह्मणादिसर्ववधविधानात्तस्य धर्मत्वादिति भावः॥१८३॥

यतीति। दुर्जनस्य यस्य यतीनां मस्करिणां हस्तेषु स्थितैराम्भैर्वैणुदण्डैः त्रिदण्डेन कमण्डलुरिति ख्यातैरिति भावः। तर्जना भर्त्सनमारम्भि कृतेत्यर्थः। तथा दण्डिनां वेदयष्टिभिः सन्दर्भवेणुदण्डैश्च वेणुमान् स कमण्डलुरिति ख्यातैरिति भावः। क्लिष्टिः क्लेशोऽजनि जनिता जनेर्ण्यन्तात्कर्मणि लुङ्। यतिः पाराशरी भिक्षुस्तत् कर्म मस्करी यतिः। ब्रह्मदर्भा वेदयष्टि दम्भोराम्भस्तु वैणवः इति सर्वत्र यादवः॥१८४॥

मण्डलेति। एषः कलिः स्थण्डिलशायिनः व्रतविशेषेण व्रतिनः व्रत इति णिनिः। यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ इत्यमरः। वीक्ष्य मण्डलत्याग देशत्यागमेव ऐच्छत् पवित्राणां कुशानामालोकनात्

अपश्यज्जिनमन्विष्यन्नजिनं ब्रह्मचारिणाम् ।
क्षपणार्थी सदीक्षस्य स चाक्षपणमैक्षत ॥ १८६ ॥

जपतामक्षमालासु बीजाकर्षणदर्शनात् ।
स जीवाकृष्टिकष्टानि विपरीतदृगन्वभूत् ॥ १८७ ॥

त्रिसन्ध्यं तत्र विप्राणां स पश्यन्नघमर्षणम् ।
परमैच्छद् दृशोरेव निजयोरपकर्षणम् ॥ १८८ ॥

अद्राक्षीत् तत्र कश्चिन्न कलिः परिचितं क्वचित् ।
भैमीनलव्यलीकाणुप्रश्नकामः परिभ्रमन् ॥ १८९ ॥

एवं कुशिकात्कामम विन्दत यथा यक्ष करे वज्रं तथा विप्रकरे कुशा इति मन्यते रिति भावः । अस्त्री कुश कुशोदर्भः पवित्र मथ कत्तृणम् इत्यमरः ॥ १८५ ॥

अपश्यदिति । स कलिः जिनं जिनाख्यं बौद्धदैवत मन्विष्यन् ब्रह्मचारिण मजिनं कृष्णाजिनं जिनराहित्यञ्चापश्यन् किञ्च क्षपणार्थी क्षपणकान्वेषी सदीक्षस्य दीक्षितस्य राज्ञोऽक्षपण मक्षदेवनं क्षपणकराहित्यम् ऐक्षत राजसूये अभिषेचनीये अक्षैर्वर्णाद्दीव्यन्तीति श्रवणादिति भावः । तदुभय मप्यस्य दुःसहमिति भावः ॥ १८६ ॥

जपतामिति । विपरीतदृग्वेदविरुद्धदर्शी सः कलि र्जपता मक्षमालासु बीजानां पद्मादिबीजानां जपमन्त्रानाथोना माकर्षणस्य दर्शनात् जीवाकृष्टिकष्टानि प्राणाकर्षणदुःखानि अन्वभूत् ॥ १८७ ॥

त्रिसन्ध्यमिति । त्रिसन्ध्यं सन्ध्यात्रये समाहारैकत्वे वा तस्येति नपुंसकत्वम् अत्यन्त संयोगे द्वितीया । विप्राणा मघमर्षणं मन्त्रसाध्यं पापहरं स्नानकर्म पश्यन् निजयो र्दृशोराकर्षण मुत्पाटनमेव परम् अप्रिय मैच्छत् ॥ १८८ ॥

अद्राक्षीदिति । तत्र कलि र्भैमीनलव्यलीकाणोः दोषलेशस्य प्रश्नं

तपःस्वाध्याययज्ञानामकाण्डद्विष्टतापसः।
स्वविद्विषां श्रियं तस्मिन् पश्यन्नुपततापं सः॥ १९० ॥
कम्रं तत्रोपनम्रायाः विश्वस्या वीक्ष्य तुष्टवान्।
स मम्लौ तं विभाव्याथ वामदेव्याभ्युपासकम्॥ १९१ ॥
वैरिणी शुचिता तस्मै न प्रवेशं ददौ भुवि।
न वेदध्वनिरालम्बमम्बरे वितताार च॥ १९२ ॥
दर्शस्य दर्शनात् कष्टमग्निष्टोमस्य चानशे।
जघूर्णे पौर्णमासेक्षी सौमं सोऽमन्यतान्तकम्॥ १९३ ॥

कामयत इति तत्कामः शिनिकामभिन्नाचरिण्ये णः। परिभ्रमन् कचित् किञ्चिदपि परिचितं नाद्राक्षीत्॥ १८९ ॥

तप इति। अकाण्डे अनवसरे द्विष्टा विरुद्धा तापसा येन सः कलिः तस्मिन् पुरे स्वविद्विषां स्वविरोधिनां तपः चान्द्रायणादिचर्य्या स्वाध्यायो वेदपाठः यज्ञाः सोमादयः तेषां श्रियं समृद्धिं पश्यन्नुपततापं सन्तप्तः दुर्वारत्वादिति भावः॥ १९० ॥

कम्रमिति। स कलिः तत्र पुरे उपनम्रायाः स्वयमागतायाः विश्वस्याः सर्वस्याः स्त्रियाः कम्रं कमितारं रन्तारमित्यर्थः। नमिकम्पीत्यादिना रप्रत्ययः। वीक्ष्य तुष्टवान् तुतोष अथ तं कम्रं वामदेवो नाम देवताविशेषः। तस्याभ्युपासकं वीक्ष्य विभाव्य मम्लौ तदुपासकानां न काञ्चन स्वयमागतानां परिहरेदिति श्रुते रूपगमस्य धर्मत्वादिति भावः॥ १९१ ॥

वैरिणीति। वैरिणी विरोधिनी शुचिता शुद्धता तस्मै भुवि प्रदेशं न ददौ अम्बरे वा नभसि च वेदध्वनिः मन्त्रघोषः आलम्बनमवकाशं न वितताार॥ १९२ ॥

अनन्तरश्लोकद्वयं प्रक्षिप्तमिति पूर्वैरुपेक्षितं तथापि स्थितत्वाद् व्याख्यायते दर्शस्येत्यादि। सः कलिः दर्शस्य दर्शेष्टेः अग्निष्टोमस्य सोमयागविशेषस्य च दर्शनात्कष्टं महद्दुःखमानशे प्राप तथा पौर्णमासं

तेनादृश्यन्त वीरघ्नो न तु वीरहणो जिनाः ।
नापश्यत् सोऽभिनिर्मुक्तान् जीवन्मुक्तानवैक्षत ॥ १६४ ॥

स तुतोषाश्नतो विप्रान् दृष्ट्वा स्पृष्टपरस्परान् ।
क्षोमशेषीभवत्सोमभुजस्तान् वीक्ष्य दूनवान् ॥ १६५ ॥

दृष्ट्वा जनं रजोजुष्टं तुष्टिं प्राप्नोत् झटित्यसौ ।
तं पश्यन् पावनस्नानावस्थं दुःस्थस्ततोऽभवत् ॥ १६६ ॥

अधावत् क्वापि गां वीक्ष्य हन्यमानामयं मुदा ।
अतिथिभ्यस्तु तां बद्धा मन्दं मन्दो न्यवर्त्तत ॥ १६७ ॥

---

पूर्णमासेष्टिं दैक्षत इति दैक्षो तद्गर्णो सन् जुघूर्णे भ्रान्तोऽभूत् सोम सोमयागमन्तकं मृत्यु ममन्यत ॥ १६३ ॥

तेनेति । तेन कलिना वीरघ्ना रणे वीरघातिनो जनाः अमनुष्यकर्त्तके चेति चकारादच् अतएव क्वचिन्मनुष्यकर्त्तके चेति कौमारं सूत्रम् अदृश्यन्त वीरहणः क्षत्रियघातिनः भट्टभास्कराः अग्नित्यागिनो वा विरहा वा एष देवानां योऽग्नि मुद्वासयत इति श्रुते रित्यनेन अदृश्यन्त स कलि रभिनिर्मुक्तान् यान् सुप्तान् अभि सूर्य्योऽस्तमेति ते अभिनिर्मुक्ताः मुञ्चतेः कर्मणि क्तः । तान् पापिष्ठान्नापश्यत् किन्तु जीवन्मुक्तानात्मारामान् पुण्यानवैक्षत ॥ १६४ ॥

स इति । स कलिः स्पृष्टं परस्परं यैस्तान् स्पृष्टपरस्परं अश्नतो भक्षयतो विप्रान् दृष्ट्वा तुतोष क्षोमशेषीभवन्तं सोमं भजस्तान् वहुर्वायपूनित्यर्थ । वीक्ष्य ज्ञात्वा दूनवान् परितप्तवान् सोमभक्षणे परस्पर्शदोषाभावादिति भावः ॥ १६५ ॥

दृष्टेति । रजोभिर्जुष्टं जनं दृष्ट्वा झटिति द्राक् तुष्टिं असौ प्राप ततोऽनन्तरं रजोभि र्धूसरं जन पावनस्नानावस्थं पञ्चस्नायव्यज्ञानतिष्ठ जानन् दुःस्थो दूनोऽभवत् ॥ १६६ ॥

अधावदिति । मन्दो मूढोऽय कलिः क्वापि देशे हन्यमाना मालभ्यमानां गां वीक्ष्य मुदा अधावत् किन्तु तां गां अतिथिभ्योऽतिथ्यर्थं

छुष्टवान् स द्विजं दृष्ट्वा नित्यनैमित्तिकत्यजम् ।
यजमानं निरूप्यैनं दूरं दीनमुखोऽद्रवत् ॥ १९८ ॥
आननन्द निरीक्ष्यायं पुरे तत्रात्मघातिनम् ।
सर्वस्वारस्य यज्वानमेनं दृष्ट्वाऽथ विव्यथे ॥ १९९ ॥
क्रतौ महाव्रते पश्यन् ब्रह्मचारीत्वरीरतम् ।
जगौ यज्ञक्रियामग्नः स भाण्डाकाण्डताण्डवम् ॥ २०० ॥
यज्वभार्य्याश्वमेधाश्वलिङ्गालिङ्गिवराङ्गताम् ।
दृष्ट्वाचष्ट स कर्त्तारं श्रुतेर्भण्डमपण्डितः ॥ २० ॥

---

हन्यमानां वृद्धां मन्दं सखेदं वर्त्तेत महोक्षं वा महाजं वा श्रोत्रिया योऽपकल्पयेत् इति विधानादिति भावः ॥ १९७ ॥

छुष्टवानिति। स कलिः नित्यनैमित्तिकत्यजं दानहोमादिकर्मत्यागिनं क्विप्। द्विजं दृष्ट्वा छुष्टवान् अथैनं द्विजं यजमानं दीक्षितं निरूप्य निश्चित्य दीनमुखो विवर्णमुखः सन् दूरमद्रवत् पलायत न ददाति न जुहोति न वदतीति दीक्षितस्य तं निषेधे तेन दोषाभावादिति भावः ॥ १९८ ॥

आननन्देति। अयं कलिः तत्र पुरे आत्मघातिनं निरीक्ष्य आननन्द अथैनं आत्मघातिनं सर्वस्वारो नामात्माहुतिको यागविशेषः। तथा रघुवंशेऽप्युक्तं यो मन्त्रपूतां तनुमप्यहौषीदिति तस्य यज्वानं दृष्ट्वा तद्याजिनं विदित्वा स कलिः विव्यथे ॥ १९९ ॥

क्रतावित्ति। स कलिः महाव्रते महाव्रताख्ये क्रतौ ब्रह्मचारिणा इत्वर्या कुलटया सह रतं ब्रह्मचारी पुंश्चल्यः सम्वाद इति श्रुतिविहितं ग्राम्यभाषणम् असतो कुलटेत्वरीत्यमरः। इण्जिसर्त्तिभ्यः क्वरप्। पश्यन् यज्ञक्रियां भाण्डानां ग्राम्यभाषिणाम् अकाण्डताण्डवम् अनेकाल्पकारसमयविजृम्भणं जगौ भग्नं जीवितम् अमन्यतेत्यर्थः ॥ २०० ॥

यज्वेति। अपण्डितो मूर्खः स कलिः यज्वभार्य्यायाः यजमानस्य पत्न्या अश्वमेधे अश्वस्य लिङ्गेन मेहनेन यालिङ्गितवराङ्गतां संयोजितयो-

अथ भीमजया जुष्टं व्यलोकत कलिर्नलम् ।
दुष्टदृग्भिर्दुरालोकं प्रभयेव प्रभाविभुम् ॥ २०२ ॥

तयोः सौहार्दसान्द्रत्वं पश्यन् शल्यमिवानशे ।
मर्मच्छेदमिवानर्च्छ स तन्नर्मोक्तिभिर्मिथः ॥ २०३ ॥

अमर्षादात्मनो दोषात्तयोस्तेजस्वितागुणात् ।
स्प्रष्टुं दृशाप्यनीशस्तौ तस्मादप्यचलत् कलिः ॥ २०४ ॥

अगच्छदाश्रयान्वेषी नलद्वेषी स निष्क्रमन् ।
अभिरामं गृहारामं तस्य रामसमश्रियः ॥ २०५ ॥

नित्तां निरायत्त्वाश्वस्य पित्रं भविष्यत्यस्ये निधत्ते इति श्रुतिर्विहितामिति भावः । ह्यद्धा श्रुतेः कर्तारं वेदप्रणेतारं भगवन्तमदृष्ट्वा केनचिद्दृष्टे न प्रणीता वेदा इत्यमन्यतेत्यर्थः ॥ २०१ ॥

अथेति । अथ कलिः भीमजया भैम्या जुष्टं सेवितं दुष्टदृग्भिः पापदृष्टिभिरन्यत्र रोगोपहतदृष्टिभिः दुरालोकं दुर्दर्शं नलं प्रभया दीप्त्या जुष्टं प्रभाविभुं सूर्यमिव व्यलोकत अपश्यत् ॥ २०२ ॥

तयोरिति । सः कलिः तयोः भैमीनलयोः सुहृदो भावः सौहार्दं प्रेम युवादित्वादण् हृद्भगेत्यादिना उभयपदवृद्धिः । तेन सान्द्रत्वं सद्रत्वं पिच्छलत्वं पश्यन् शल्यमानशे इव प्रापेव तथा तयोः परस्परनर्मोक्तिभिः परिहासविशेषैः मर्मच्छेदं मानर्च्छेव प्रापेव ॥ २०३ ॥

अमर्षादिति । सः कलिरमर्षात् क्रोधादात्मनो दोषात् पिशुनत्वदोषात्तयो भैमीनलयो स्तेजस्वितागुणाच्च तौ दृशापि स्प्रष्टुं द्रष्टुमप्यनीशः सन् तस्मादपि देशादचलत् पलायत ॥ २०४ ॥

अगच्छदिति । नलद्वेषी सः कलिः आश्रयान्वेषी सन् अतएव तदलाभान्निष्क्रमन् रामसमश्रियो रामचन्द्रसमानकान्तेः तस्य नलस्य अभिरामं रमणीयं गृहारामं अगच्छत्

रक्षितत्वक्रतत्वेन बाधनं न तपोधनैः

मेने मानी मनाक् तत्र स्वानुकूलं कलिः किल ॥ २०६ ॥

दलपुष्पफलैर्देवद्विजपूजाभिसन्धिना ।

स नलेनार्जितान् प्राप तत्र नाक्रमितुं द्रुमान् ॥ २०७ ॥

अथ सर्व्वाङ्गिदामत्तिपूरणाय स रोपितम् ।

विभीतकं ददर्शैकं कुटं धर्म्मेऽप्यकर्मठम् ॥ २०८ ॥

स तं नैषधभूपस्य निकटं निष्कुटध्वजम् ।

बह्व मेने निजं तस्मिन् कलिरालम्बनं वने ॥ २०९ ॥

रक्षितेति। रक्षितानां स्वरूपलनानां लक्षेण शतसहस्रावृतत्वेन तत्र स्वक्षारामे तपोधनैः कर्तृभिः बाधनं नास्ति स्वस्येतिशेषः। अतएवोभयप्राप्तौ कर्मणीति षष्ठी न कर्त्तरि। तथैवं निर्बाधत्वात् मानी आग्रही कलिः स्वस्यानुकूलं निवासयोग्यं मेने किल तमाराममितिशेषः ॥ २०६ ॥

दलेति। सः कलिः तत्रारामे दलैः पत्रैः पुष्पैः फलैश्च देवानां द्विजानाञ्च पूजया अभिसन्धिना तदर्थाभिप्रायेण नलेनार्जितान् द्रुमान् आक्रमितुम् [illegible] न प्राप क्रमणं न प्रापेत्यर्थः। उदीच्यानां प्रादेशायं भागानुकारि[illegible] ॥ २०७ ॥

अथेति। असौ कलिः सर्वां सद्भिदाक्षगुल्मादद्रुराणामासक्तेः सम्यक् तस्य पूरणाय रोपितम् अङ्कुरोऽभिनवोद्भिद इत्यमरः। कर्मणि घटत इति घट त्वं कर्मठः कर्मणि घटोऽठच्। धर्मेऽप्यकर्मठ मनुपयुक्तं विभीतकं नाम एकं कुटं वृक्षं ददर्श अनोकहः कुटः सालः इत्यमरः ॥ २०८ ॥

स इति। स कलिः तत्र वने निजमात्मीयमालम्बनम् आश्रयं नैषधस्य नलभूपस्य निकटं नेदिष्ठं निष्कुटस्य गृहारामस्य ध्वजं चिह्नं गृहारामस्तु निष्कुटः इत्यमरः। तं विभीतकं बह्वधिकं यथा तथा मेने ॥ २०९ ॥

निष्पदस्य कलेस्तत्र स्थानदानाद्विभीतकः ।
कलिद्रुमः परं नासीदासीत् कल्पद्रुमोऽपि सः ॥ २१० ॥
ददौ पदेन धर्मस्य स्यातुमेकेन यत् कलिः ।
एकः सोऽपि तदा तस्य पदं मन्येऽमिलत्ततः ॥ २११ ॥
उद्भिद्विरचितावासः कपोतादिव तत्र सः ।
राज्ञः साग्नेर्द्विजात्तस्मात् सन्त्रासं प्राप दीक्षितात् ॥२१२॥
विभीतकमधिष्ठाय तयाभूतेन तिष्ठता ।
तेन भीमभुवोऽभीकः स राजर्षिरधर्षि न ॥ २१३ ॥

निष्पदस्येति। स विभीतकः अत्रत्यो निष्पदस्य निराश्रयस्य ले सत्रारामे स्थानदानादावासदानात्कलिद्रुमः परं कलिद्रुम एव ासीत् किन्तु कल्पद्रुमोऽप्यासीत् सङ्कल्पार्थदानादिति भावः। भूतावासः ।लिद्रुमः इत्यमरः ॥ २१० ॥

ददविति। यद्यस्मात्कलिः धर्मस्यैकेन पदेन स्थातुं ददौ इत्यर्थः। वैवत् मनागितस्ततः कारणात्स तदप्येकमेव तस्य कलेः पदं स्थानम- मलत् एकपदस्थानदानादेकवृक्षस्थानं प्राप्तमित्यर्थः। दानानुरूपं फल- सुत इति भावः ॥ २११ ॥

उद्भिदिति। उद्भिदि वृक्षे विरचितावासः कल्पितस्थितिः सः लिः साग्नेराहिताग्नेः सपाठरग्नेश्च द्विजात् द्विजातेर्वर्णिकादण्डजाच्च ।दीक्षितात् कृतदीक्षात् अन्यत्र उभयत्रापि वा ईक्षिताद्दृष्टात् तस्माद्राज्ञो ात्कपोतादुलूकाद्वायस इव तापं प्राप प्राप्तेति लिट् प्रापदिति पद- छेदे लुङ् ॥ २१२ ॥

विभीतकमिति। विभीतकमत्र मधिष्ठाय तिष्ठता तयाभूतेन नल- अन्वेषिणा सता तेन कलिना भीमभुवो भैम्या अभिकामयत इत्यभी

तमालम्बनमासाद्य वैदर्भीनिषधेशयोः ।
कलुषं कलिरन्विष्यन्नवात्सीद्वत्सरान् बहून् ॥ २१४ ॥
यथासीत् कानने तत्र विनिद्रकलिका लता ।
तथा नलच्छलासक्तिविनिद्रकलिकालता ॥ २१५ ॥
दोषं नलस्य जिज्ञासुर्बभ्राम द्वापरः क्षितौ ।
न दोषः कोऽपि लोकस्य मुखेऽस्तीति दुराशया ॥२१६ ।

कः कमिता अनुको ऽभीकः कमितेति कन्प्रत्ययान्तो निपातनात्साधुः । स राजर्षिर्नलो नाधर्षि नाभ्यभावि तं जनमाविष्टेन भीतेन पिशाचेन भीमभुवोऽयं करस्थानादभीको निर्भीकः कश्चिद्दुष्टमन्त्रवादिनाऽधर्षीति ध्वनिः । तेन च राजमन्त्रवादिनो रौपम्यं गम्यते ॥ २१३ ॥

तमिति । कलिः तं छिद्रमवलम्बनमासाद्य वैदर्भीनिषधेशयोः भैमीनलयोः कलुषमशुचित्वमन्विष्यन् बहून् वत्सरान् अत्यन्तसंयोगे द्वितीया । अवात्सीदुवास वसेर्लुङि सिचि सस्यार्धधातुकेति तत्वं वदव्रजेत्यादिना वृद्धिः ॥ २१४ ॥

यथेति । तत्र कानने वने यथा विनिद्रकलिका उन्निद्रकोरका लता आसीत्तथा नलस्य छले छलने आसक्त्याऽभिनिवेशेन विनिद्रो जागरूकः कलिः कालपुरुषितः यस्मिन् तस्य भावस्तत्ता आसीत् अत्रार्थभेदेऽपि विनिद्रकलिकालतेति शब्दमात्रसाम्यात्तथेत्युक्तम् ॥ २१५ ॥

दोषमिति । अथ द्वापरोऽपि नलस्य दोषमनाचारं जिज्ञासुर्लोकस्य मुखे वाचि अदोषो निर्दोषः कोऽपि नास्तीति दुराशया लोको हि सर्वत्र दोषदृष्टिपरत्वात्सर्वथा दोषदेव दूष्यति वक्ष्यति चेति दुराग्रहेण क्षितौ बभ्राम ॥ २१६ ॥

अमुष्मिन्नारामे सततनिपतद्दोहदतया
प्रसूनैरुन्निद्रैरनिशमसृतांशुप्रतिभटे ।
असौ बद्धालम्बः कलिरजनि कादम्बविहग-
च्छदच्छायाभ्यङ्गोचितरुचितया लाञ्छनमृगः ॥ २१७ ॥

स्फारे तादृशि वैरसेनिनगरे पुण्यैः प्रजानां घनम्
विघ्नं लब्धवतश्चिरादुपनतिस्तस्मिन् किलासीत् कलेः ।
एतस्मिन् पुनरन्तरेऽन्तरमितानन्दः स भैमीनला-
धाराद्धुं व्यधित स्मरः स्तुतिशिखावन्द्यावचूडं धनुः ॥ २१८ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।

अमुष्मिन्निति । सतत निपतद्दोहदतया मिलद्धूपादिसंस्कारतया सकलगुल्मलतादीनामकाले कुसुमोद्गमार्थं पुष्पफलानक द्रव्यं दोहदं स्यात् तत्क्रियेति शब्दार्णवे । उन्निद्रैर्विकसितैः प्रसूनैरनिशमसृतांशुप्रतिभटे चन्द्रतुल्ये अमुष्मिन्नारामे बद्धालम्बः कृताश्रयोऽसौ कलिः कादम्ब-विहगस्य धूसरवर्णविशेषस्य च्छदस्य पक्षस्य अभ्यङ्गोचितरुचितया चित्रप्रभा-लेपयोग्यवर्णतया लाञ्छनमृगोऽजनि जनितः चन्द्रस्याङ्के कलङ्कोऽभू-दित्यर्थः ॥ २१७ ॥

स्फार इति । प्रजानां पुण्यैर्धर्मैस्तादृशि तथा भीरसे वैर-सेने नलस्य नगरे घनं निरन्तरं विघ्नं कर्मोपपतिबन्धं लब्धवतः प्राप्तवतः कलेश्चिरकालमुपनतिः स्थितिरासीत्किल एतस्मिन् घने निरन्तरे अस्मि-न्नवकाशे अन्तरन्तःकरणे अमितानन्दः अतिहृष्टः स स्मरो भैमीनलाव-राद्धुं वशीकर्तुं स्तुतिशिखां कर्णौ वन्द्य सम्पन्ना चूडा कोटिर्यस्य तद् धनुः व्यधित विहितवान् [illegible] इत्यर्थः ॥ २१८ ॥

यातः सप्तदशः स्वसुः सुसदृशि छन्दप्रशस्तेर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥२१९॥

श्रीहर्षमिति। स्वसुः सोदर्याः. छन्दो नाम राजा तत्प्रशस्ते सुसते सदृशि अत्यन्तसदृशि तस्माच्छ्रीहर्षाद्भवतीति तद्भुवि एककर्तृकत्वा-त्सोदरत्वव्यपदेशः. गतमन्यत् ॥ २१९ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणमहोपाध्याय कोला-चलमल्लिनाथसूरिविरचितायां नैषधव्याख्यायां जीवातुसमाख्यायां सप्त-दशसर्गः समाप्तः ॥ १७ ॥

# नैषधचरितम्।

## अष्टादशः सर्गः।

---

ऽयमित्यमथ भीमनन्दिनीं दारसारमधिगम्य नैषधः।
तृतीयपुरुषार्थवारिधेः पारलम्भनतरीमरीरमत् ॥ १ ॥
आत्मवित् सह तया दिवानिशं भोगभागपि न पापमाप सः।
आहृता हि विषयैकतानता ज्ञानधौतमनसं न लिम्पति ॥ २ ॥

सोऽयमिति। सोऽयं नैषधो नलः इत्थं स्वयं परभार्गेण दारसार रेषु सारं स्थिरांशे सारो बले स्थिरांशे च इति विश्वः। अतएव पु- पूर्वनिर्देशः। भीमनन्दिनीं भैमीं नन्दादित्वात् ल्युट् प्रत्ययः। अधिगम्य प्य अथ तृतीयपुरुषार्थवारिधेः शृङ्गारसारस्य पारलम्भनेन परतीर- प्राप्तौ तरीं नावमिवं दमयन्तीं अरीरमत् रमयामास रमेर्णौ चङ्यत्रिन् गेरयोक्तताद्रूक्तं योनरावित्र रयोकुताकृगार्विति लक्षणात् ॥ १ ॥

आत्मेति। आत्मविदात्मज्ञानी स नलस्तया भैम्या दिवानिशं हर्निशं इन्द्वैकवद्भाव अत्यन्तसंयोगे द्वितीया। भोगभागपि सम्भोगवान- त्यर्थः। भजोण्विः। पापं नाप ननु नियच्छात्मेन्द्रियाणान्तु नरः पतन अतीति निषेधात् कथं दिवानिशं विषयलोलुपस्य न पापमत आह। आहृतेति तथा हि आहृता विकृता विषयेषु शब्दादिष्वेकतानता एकनिष्ठत्वं ज्ञानेन धौतमनसं क्षालितान्तःकरणं न लिम्पति न पात- इत्यर्थः। ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुनेति भगवद्वच- दितिभावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २ ॥

कुङ्कुमैणमदपङ्कलेपिताः क्षालिताश्च हिमवालुकाम्बुभिः ।
रेजुरध्वततशैलजस्रजो यस्य मुग्धमणिकुट्टिमा भुवः ॥ ७ ॥
नैषधाङ्गपरिमर्द्दमेदुरामोदमार्द्दवमनोज्ञवर्णया ।
यद्भुवः क्वचन सूनशय्यया भाजि भालतिलकश्रगल्भता ॥ ८ ॥
क्वापि यन्निकटनिष्कुटस्फुटत्कोरकप्रकरसौरभोर्मिभिः ।
सान्द्रमध्रियत भीमनन्दिनी नासिकापुटकुटीकुटुम्बताम् ॥ ९ ॥

वर्त्तयो दशा यासान्ताः । अन्यत्र कामबाणोत्पन्ना इत्यर्थः । सङ्गान्ति सुरभितैलानि यासान्ता दीपिकाः स्मरस्य स्फुरतो दोःप्रतापनिकरस्य भजतेजोमण्डलस्याङ्कुराणां श्रीरिव श्रीर्यासान्ताः सत्यः य सौधं क्वापि वितिमिरन्नमोरहितन्तेनिरे चक्रिरे ॥ ६ ॥

कुङ्कुमेति । कुङ्कुमैणमदयोः काश्मीरकस्तूरिकयोः पङ्केन लेपिताः दिग्धाः हिमवालुकाम्बुभिः कर्पूरोदकैः क्षालिता धौताः सिताभ्रो हिमवालुकेति कर्पूरपर्य्यायेत्यमरः । अध्वसु प्रवेशमार्गेषु तता विस्तृता शैलजस्य शैलेयस्य शिला कुसुमाख्यगन्धद्रव्यस्य स्रजो यासु ताः यस्य सौधस्य मुग्धाः सुन्दरा मणीनां कुट्टिमाः कुट्टिमरूपभुवः कुट्टिमोऽस्त्रीनिबद्धा भूरिति यादवः । अतद्गुणवत् मानान्य विशेषभाव इ पौनरुक्त्य सर्व्वाङ्गमस्तु वर्णनादुदात्तालङ्कारः ॥७॥

नैषधेति । नैषधस्य नलस्याङ्गपरिमर्द्देन मेदुराः सान्द्राः आमोदो मार्दवं मनोज्ञं वर्णाश्च यस्या तया क्वचन स्थितः सूनशय्यया कुसुमशयनेन यस्य सौधस्य भुयो भालतिलकप्रगल्भता ललाटिकालङ्कारभाक् प्राप्तेति निदर्शनालङ्कारः ॥ ८ ॥

क्वापीति । क्वापि क्वचित्प्रदेशे यस्य सौधस्य निकटे निष्कुटे गृहारामे स्फुटतां कोरकप्रकराणां कलिकानिवहानां सौरभोर्मिभिः परिमलपरम्पराभिः भीमनन्दिनी भैमी नासिकापुटानां कुटीकुटुम्बितां गार्हस्थ्यं सान्द्रं निरन्तरमध्रियत अधारि नन्दनविहारसुखमनुभूयते तथेति भावः ॥९॥

तामसीष्वपि तमीषु भित्तिगैरत्नरश्मिभिरमन्दचन्द्रिकः ।
यस्तपेऽपि जलयन्त्रपातुकासारदूरधुततापतन्द्रिकः ॥ १४ ॥
यत्र पुष्पशरशास्त्रकारिका शारिकाध्युषितनागदन्तिका ।
भीमजानिषधसार्वभौमयोः प्रत्यवैक्षत रते कृताकृते ॥ १५ ॥
यत्र मत्तकलविङ्कशारिकाश्लिष्यकेलिपुनरुक्तिवक्तयोः ।
क्वापि दृष्टिभिरवापि वापिकोत्तंसहंसमिथुनस्मरोत्सवः ॥ १६ ॥

कृतमङ्गलकथादिकौतुकः चित्रकथावर्णनादिविनोदो येन सः स्वयमेव सौधः कथयतीति भ्रान्तिकर इत्यर्थः । कौतूहलं विनोदः स्यात् कुतुकञ्च कुतूहलं इति हलायुधः । किञ्च सूत्राणां यन्त्रेण जनिता तया तज्जया विशिष्ट- चेष्टया दृष्टिमितनिमेषोन्मेषादिचेष्टाविशेषेणाश्चर्यं सञ्जयन्ति कुर्वन्तीति तथाभूताः बह्व्यः शालभञ्जिका दारुपुत्तलिकाः यस्य सः ॥ १३ ॥

तामसीष्विति । यः सौधः तामसीषु तमस्विनीष्वपि अण् प्रक- रणे ज्योत्स्नादिभ्य इत्युपसंख्यानान्मत्वर्थीयोऽण्प्रत्ययः । तमीषु रात्रिषु भित्तिगैः कुड्यगतैरत्नरश्मिभिः मणिप्रभाभिः अमन्दा चन्द्रिका यस्य सः यस्तपेऽपि ग्रीष्मेऽपि जलयन्त्रेभ्यः पातुकैः पतनशीलैः आसारैः सम्यक् दूरधुता तापतन्द्रिका यस्य सः ॥ १४ ॥

यत्रेति । यत्र सौधे पुष्पशरस्य शास्त्रस्य कारिका वक्त्री शारिकाभिः पक्षिविशेषैः । स चालः खखरा शारीति यादवः । अध्युषिता अधिष्ठिता नागदन्तिका भित्तिनिर्गतः दारुविशेषो यस्य दन्तिका नागदन्ताः स्युरिति यादवः । भैमीनलयोरते कृताकृतं प्रत्यवैक्षत इदं कृतमिदं कृतमिति अनुसन्धत्ते ॥ १५ ॥

यत्रेति । यत्र सौधे क्वापि प्रदेशे तयोर्भैमीनलयोः दृष्टिभिर्वापि- कोत्तंसानां दीर्घिकालङ्काराणां हंसमिथुनानां स्मरोत्सवः सुरतकेलिः मत्तैः कलविङ्कैः चटकैः शारिकाभिश्च आश्लेष्य केलिभिः ग्राम्यक्रीडाभिः पुनरुक्तवत् पुनरुक्तिमद्यथा तथा अपि वा तत्तुल्यमदर्शीत्यर्थः ॥ १६ ॥

यत्र वैणरववैणवस्वरैर्भृङ्गहुङ्कृतैरुपवनीपिकालिनाम्।
कङ्कणालिकलहैश्च नृत्यतां गोपितं सुरतकूजितं तयोः ॥ १७ ॥
लक्ष्मणारमृगशृङ्गभङ्गुरा स्वादुरुज्ज्वलरसैकसारणिः।
नानिशं त्रुटति यत् पुरः पुरा किन्नरीविकटगीतिझङ्कृतिः ॥ १८
भित्तिचित्रलिखिताखिलक्रमा यत्र तस्थुरतिहाससङ्कथाः ॥
पद्मनन्दनसुतारिरंसुतामन्दसाहसहसन्मनोभुवः ॥ १९ ॥

यत्रेति। यत्र सौधे वैणैर्वीणासम्बन्धिभी रवैः वैणवैः वेणुसम्बन्धिभिः स्वरैः उपवन्या आरामेऽपि पिकानामलिनां भृङ्गाणाञ्च हुङ्कृतैः हुङ्कारैश्च नृत्यतां नर्त्तकीजनानां कङ्कणालिकलहैः भूषणकलहैः भूषणावलीकलकलैश्च तयोर्दम्पत्योः सुरतकूजितं मणितादिकूजितं गोपितं तिरस्कृतम् अतो न विस्रम्भविघात इति भावः ॥ १७ ॥

लक्ष्मणेति। लक्ष्मणारमृगस्य शृङ्गवद्भङ्गुरा भङ्गवती एकत्र तयोश्चारणादन्यत्र स्वभावादितिभावः। अतएवोज्ज्वलरसस्य शृङ्गाररसस्य शृङ्गारः शुचिरुज्ज्वल इत्यमरः। एका मुख्या सारणिः कुल्या किन्नरीणां प्रवीणगायकानां विकटा विपुला गीतस्य झङ्कृतिः झङ्काराख्यस्वरः अनुकारिशब्दोऽयं अनिशं नित्यं पुरा न त्रुटति न त्रुटिता न विच्छिन्नेत्यर्थः। पुरा लङ् च स्मे इति भूते लुङ् अत्र गीतझङ्कृतेः शृङ्गाररससारणीयत्वेन रूपणाद्रूपकालङ्कारः ॥ १८ ॥

भित्तीति। पद्मनन्दनस्य ब्रह्मणः सुतया रिरंसुता रन्तुमिच्छुता सैवामन्दं महत्साहसं तेन हसन् स्वप्रयासमसाफल्यसन्तोषात् स्मयमानो मनोभूः कामो यासु ताः इतिहाससङ्कथा इतिहासोक्तवृत्तान्ता यत्र सौधे भित्तिषु चित्रलिखितां अखिलाः क्रमा विशेषा यासान्ताः तस्थुः ॥ १९ ॥

पुष्पकाण्डजयडिण्डिमायितम् यत्र गौतमकलत्रगामिनः ।
पारदारिकविलाससाहसं देहभर्त्तुरुदटङ्कि भित्तिषु ॥ २० ॥
उच्चलत्कलरवालिकैतवाद्वैजयन्तविजयार्जिता जगत् ।
यस्य कीर्त्तिरवदायति स्म सा कार्त्तिकीतिथिनिशीथिनीस्वसा॥२१
गौरभानुगुरुगेहिनीस्मरोद्भूतभावमिति वृत्तमाश्रिताः ।
रेजिरे यदजिरेऽभिनीतिभिर्नाटिकाभरतभारतीसुधा॥२२॥
शम्भुदारवनसम्भुजिक्रियामाधवव्रजवधूविलासयोः ।
गुम्फितैरुगनसा सुभाषितैर्यस्य हाटकविटङ्कमङ्कितम् ॥ २३ ॥

पुष्पेति । पुष्पकाण्डस्य पुष्पेषोः जयडिण्डिमायितं तद्वदाच-रितम् उपमानादाचारक्यजन्तात्कर्तरि क्तः । गौतमकलत्रगामिनोऽहल्या-गन्तुर्देहभर्तुरिन्द्रस्य परदारान् गच्छतीति पारदारिकः गच्छतौ पर-दारादिभ्य इत्युपसङ्ख्यानात् ठक् तस्य विलासो विजृम्भणं तदेव साहसं यत्र सौधभित्तिषु उदटङ्कि उट्टङ्कितमुन्मीलितम् ॥ २० ॥

उच्चलदिति । कृत्तिकाभिर्नक्षत्रेण युक्ता पौर्णमासी कार्त्तिकी नक्षत्रेण युक्तः काल इत्यण् सैव तिथि स्तस्या निशीथिनी रात्रिस्तस्याः स्वसा भगिनी सदृशीत्यर्थः । वैजयन्तस्त्वेन्द्रप्रसादस्य विजयेनार्जिता स्यात् प्रासादो वैजयन्त इत्यमरः । उच्चलत्कलरवाणां उड्डीनपारावतानां आलिकैतवाच्छ्रेणीव्याजादित्यपह्नवभेदः । यस्य कीर्तिः कान्तिः जगदवदा-यतिस्म तेऽपि तावन्तस्तत्र सन्तीति भावः दैपो लटि वा सायादेशः ॥ २१ ॥

गौरिति । गौरभानोश्चन्द्रस्य गुरुगेहिन्यां बृहस्पतिपत्न्यां स्मर-स्योद्भूतभावन्तु स्खलत्वं तदेवेति वृत्त वर्णकत्वमाश्रितास्तद्वर्णनपरा इत्यर्थः । भरतभारतीसुधाः भरतशास्त्रसारभूताः नाटिकाः रूपक-विशेषाः चतुरङ्कात् नाटिकेति उक्तलक्षणात् । यस्य सौधस्याजिरे प्राङ्गणे अभिनीतिभिरभिनयैः रेजिरे शुशुभिरे ॥ २२ ॥

शम्भ्विति । यस्य सौधस्य हाटकस्य विटङ्कं हिरण्मयकपोत-

अह्नि भानुभुवि दाससदारिकां यच्चरः परिचरन्तमुज्जगौ।
कालदेशविषयासहस्मरादुत्सुकं शुकपितामहं शुकः॥ २४॥
नीतमेव करलभ्यपारतामप्रतीर्य्य मुनयस्तपोऽर्णवम्।
अप्सरःकुचघटावलम्बनात् स्थायिनः क्वचन यत्र चित्रगाः॥२५॥
यत्र वीक्ष्य नलभीमसम्भवे मुह्यतोरतिरतीशयोरपि।
स्पर्द्धयेव जयतञ्च ययाय ते कामकामरमणी बभूवतुः॥ २६॥

पालिका हिरण्मय हेम हाटकं कपोतपालिकायां तु विटङ्कं पुं नपुंसक मिति चामरः। यथोदारवने देवदारुवने सम्भोगविक्रिया सम्भोगविहारः माधवस्य कृष्णस्य व्रजवधूविलासो गोपाङ्गनाविहार व्रजो गोष्ठमिषु इति यादव.। तयोर्विषये उपनता गुम्फितं विरचितैः सुभाषितैः सूक्तैर-ङ्कितं शुकविरचितशिवकृष्णाचरितं तत्र लिखितमित्यर्थः॥ २३॥

अह्नीति। यच्चरो यः सौधचारी शुक. कीरः कालदेशविषयाणां मसहनात् योग्यायोग्यविचाराक्षमात् स्मरात् कामवशादुत्सुक मासक्त मतएव अह्नि न रात्रौ भानुभुवि यमुनायां न विविक्ते कालिन्दी सूर्य-तनया यमुना यमनस्वसा इत्यमरः। दासदारिकां कैवर्तकन्यां सत्य-वतीमित्यर्थः। ननु कुलीनां कैवर्ते दास धीवरा वित्यमर.। परिचरन्तं रमयन्तं शुकपितामहं पराशर मुज्जगौ गायति स्म शुको व्याससुतं कीर इति विश्वः॥ २४॥

नीतमिति। करलभ्यपारतां करप्राप्यपारत्वं व्यासन्नफलत्वम् नीत-मेव तीर्थप्रायमेव तपोऽर्णव मप्रतीर्य्य तरणाहित्येत्यर्थः। अप्सरसां कुचाएव घटाः कुचघटाः घटः कुचौ निभायत्स्त्रीत्यमरः। तेषां मवलम्बनात् स्थायिनो विश्रान्ता तरणधान्ताः घटादिक मवलम्ब्य विश्राम्यन्तीति भाव। एवम्भूता मुनयो यत्र सौधे क्वचन प्रदेशे चित्रगाः स्थिता इत्यर्थ॥ २५॥

यत्रेति यत्र सौधे नलभीमसम्भवे नलभैम्यो वीक्ष्य स ह्रतो रत्यतो.

तत्र सौधसुरभूधरे तयोराविरासुरथ कामकेलयः।
ये महाकविभिरप्यवीक्षिताः पांशुलाभिरपि ये न शिक्षिताः॥२७॥
पौरुषं दधति योषिता नले स्वामिनि श्रिततदीयभावया।
यूनि शैशवमतीर्णया कियत् प्रापि भीमसुतया न साध्वसम्॥२८॥
दूत्यसङ्गतिगतं यदात्मना प्रागशिश्रवदियं प्रियं गिरः।
तं विचिन्त्य विनयव्ययं ह्रिया न स्म वेद करवाणि कीदृशम्॥२९॥

---

अतएव स्पर्द्धया मन्मथेनैव जयतोरभिभवतोः रतिरतीशयोरपि जयार्थं भवाय ते नलदमयन्त्यौ कामकामरमणी बभूवतुः तज्जयाय स्वयमन्ये ततोऽप्युत्कृष्टे कामतद्रमण्यौ बभूवतुः ते अतिशय्य स्थिते इत्यर्थः अभूतनद्भावेऽच्चः॥२६॥

तत्रेति अथ तत्र सौधसुरभूधरे प्रासादमेरौ तयोः भैमीनलयोः कामकेलयः कामकेलिविहाराः आविरासुः आविर्बभूवुः प्रादुराविः शब्दयोः शब्दशक्तिपरनियमात्तत्वाप्रत्ययवत् शब्दशक्तिपदकृतसामर्थ्यात् नास्ति भभाव।। ये केलयः अस्ता केलिः परिहारः स इति यादव।। महाकविभिर्वात्स्यायनप्रभृतिभिरप्यवीक्षिताः अदृष्टा ये पांशुलाभिः साधारणीभिरपि न शिक्षिता नाभ्यस्ताः॥२७॥

पौरुषमिति। पौरुषं पुरुषत्वं युवादित्वादण्प्रत्ययः। दधति दधाने स्वामिनि पत्यौ यूनि नले विषये क्रमाद्योषिता श्रित स्तदीयभाव स्तद्धीनत्व यया तया अस्वतन्त्रया शैशवमतीर्णया अद्याप्यनिःशेषितबाल्यया कर्तरि क्तः। भीमसुतया साध्वस सङ्कुमभय कियन्न प्रापि महदेव प्रापीत्यर्थः। तत्र रसोभवतः स्वामिनः कार्यं पत्युरत्यानन्दकरश्चेति प्रपञ्चित कुमारसम्भवसञ्जीवन्यां भावसाध्वसपरिग्रहादित्यत्र। अत्र भयहेतुनाऽनागतपौरुषादीनां त्रयाणां भैमीगतस्वात्वादीनां त्रयाणाञ्च यथासङ्ख्यं सम्बन्धाद्यथासङ्ख्यालङ्कारः॥२८॥

दूत्येति। प्राक् पूर्वं दूत्ये दूत्यकर्मणि सङ्गतिगत मिन्द्रदूत्यावस्था-

यत्त्वया सदसि नैषधः स्वयं प्राग्वृतः सपदि वीतलज्जया ।
तन्निजं मनसिकृत्य चापलं सा शशाक न विलोकितुं नलम् ॥ ३० ॥
आसने मणिमरीचिमांसले यां दिशं स परिरभ्य तस्थिवान् ।
तामसूयितवतीव मानिनी न व्यलोकयदियं मनागपि ॥ ३१ ॥
ह्रीभरान्निजनिमज्जनोचितं मौलिदूरनमनं दधानया ।
द्वारि चित्रयुवतिश्रिया तया भर्तृकृतिगतमप्रतीकृतम् ॥ ३२ ॥

आगतं [illegible] आगमिष्यति [illegible] आयाते नवोढा [illegible] इत्यादिना [illegible] । तं [illegible] विनयलोपं [illegible] भैमी कथं करवाणीति न वेद स्म इति इतिकर्तव्यतामूढाभवत् ॥ २९ ॥

यदिति । किञ्च प्राक् पूर्वं सपदि वीतलज्जया विगतलज्जया त्वया भैम्या सदसि नैषधः स्वयं वृत इति यन्निजमात्मीयं तत् स्वयंवरणरूपं चापलं मनसिकृत्य हृदि निधाय [illegible] सा भैमी नलं विलोकितुं न शशाक ॥ ३० ॥

आसन इति । स नलो मणिमरीचिभिर्मांसले पुष्टे आसने मणिपीठे यां दिशं परिरभ्य तस्थिवान् [illegible] । मानिनी इयं दमयन्ती तां प्रियपरिरब्धां दिशमसूयितवतीव [illegible] मनागपि ईषदपि न व्यलोकयत् [illegible] ॥ ३१ ॥

ह्रीति । ह्रीभरादिति निजं निमज्जनं [illegible] । मौलेर्मूर्ध्नो दूरनमनं दधानया द्वारि द्वारदेशे चित्रयुवतेः श्रीरिव श्रीर्यस्याः तया [illegible] । तया भैम्या भर्तृ [illegible] किञ्चिदपि न कृतमित्यर्थः ॥ ३२ ॥

वेश्म पत्युरविशन्न साध्वसाद् वेशितापि शयनं बभाज न ।
भाजितापि सविधं न साखपत् स्वापितापि न च सम्मुखाभवत् ॥३३॥
आत्मनापि हरदारसुन्दरी यत् किमप्यभिललाष चेष्टितुम् ।
स्वामिना यदि तदर्थमर्थिता मुद्रितस्तदनया तदुद्यमः ॥ ३४ ॥
ह्रीभराद्विमुखया तया भियं सञ्चितामननुरागशङ्किनि ।
स स्वचेतसि लुलोप सस्मरन् दूत्यकालकलितं तदाशयम् ॥३५॥
पार्श्वमागमि निजं सहालिभिस्तेन पूर्व्वमथ सा तथैकया ।
क्वापि तामपि नियुज्य मायिना स्वात्ममात्रसचिवावशेषिता॥३६

वेश्मेति । सा भैमी साध्वसात्पत्युर्वेश्म नाविशत् वेशिता कथञ्चित् सखीभिः प्रवेशिता शयनं तल्पं न बभाज न भेजे भाजिता प्रापितापि सविधं समीपं अत्यन्तसंयोगे हितीया । न स्वपत् न निदद्रौ स्वापितापि समीपे निद्रापिता सति सम्मुखा अभिमुखा नाभवत् नाभूत् एतेन नवोढाया मौग्ध्यात् लज्जाविजितमन्मथत्वमुक्तम् ॥ ३३ ॥

आत्मेति । हरदारा पार्वतीव सुन्दरी सा आत्मना स्वयमपि यत्किमपि चेष्टितुं यत्किञ्चन कर्तुमभिललाष स्वामिना पत्या तदर्थं तत्कारणार्थं अर्थिता यदि प्रार्थिता चेत्तर्हि अनया भैम्या तदुद्यमस्तस्य-नलस्योद्यमो मुद्रितः प्रतिबद्धो भवति स्वयं चिकीर्षितमपि न करोती-त्यर्थः ॥ ३४ ॥

ह्रीभरादिति । स नलः ह्रीभराद्विमुखया तया भैम्या अननुराग-शङ्किनि वैमुख्यदर्शनादनुरागाभावशङ्किनि स्वचेतसि सञ्चितां संक्रा-मितां भियं दूत्यकाले कलितमवगतं तस्या आशयं चित्तवृत्तं संस्मरन् लुलोप तदनुरागस्यानुसन्धानेन भयं नुनोदेत्यर्थः ॥ ३५ ॥

पार्श्वमिति । मायिना कपटपटुना तेन नलेन सा भैमी पूर्वमा-लिभिः सखीभिः सह निजं पार्श्वं समीपं स आगमि आगमिता

सन्निधावपि निजे निवेशितामालिभिः कुसुमशस्त्रशास्त्रवित्।
आनयद्व्यवधिमानिव प्रियामङ्कपालिवलयेन सन्निधिम् ॥ ३७ ॥

प्रागचुम्बदलिके ह्रियानतां तां क्रमादुन्नतां कपोलयोः।
तेन विश्वसितमानसां झटित्यानने स परिचुम्ब्य सिष्मिये ॥ ३८ ॥

लज्जया प्रथममेत्य कुङ्कृतः साध्वसेन बलिनाथ तर्जितः।
किञ्चिदुच्छ्वसित एव तद्धृदि न्यग्बभूव पुनरर्भकः स्मरः ॥ ३९ ॥

वल्लभस्य भुजयोः स्मरोत्सवे दित्सतोः प्रसभमङ्कपालिकाम्।
एककश्चिरमरोधि बालया तल्पयन्त्रणनिरन्तराङ्गया ॥ ४० ॥

गमेर्ण्यन्तात्कर्मणि लुङ् मित्वाद्ध्रस्वत्वम्। अर्थकया तया आल्या सहाव-रोपिता अथ तानेकामपि क्वापि नियुज्य स्वात्ममात्रं स्वयमेव सचिवोऽन्त-कचरी यस्याः सा अवशयिता विविक्तमकरोदित्यर्थः ॥ ३६ ॥

सन्निधाविति। कुसुमशस्त्रशास्त्रवित् कामशास्त्रपारगः स आली-भिर्निजे सन्निधौ निवेशितामपि प्रियां विविच्य व्यवधिमानिवाथ व्यवहित इव अङ्कपालिं प्रयोज्य तद्वलयेन तत्रापि चालिङ्गनपूर्वमानयदिति कामशास्त्रादिति भावः ॥ ३७ ॥

प्रागिति। प्राक् पूर्वं अलिके ललाटपट्टके अचुम्बत् अतः ह्रिया नतां नम्रमुखीं क्रमात् उन्नतां किञ्चिदुन्नमितमुखीमित्यर्थः। तां कपो-लयोर्गण्डयोः अचुम्बत् तेन विश्वसितमानसां विस्रब्धचित्तां तां दम-यन्तीं झटिति द्रागानने मुखे परिचुम्ब्य सिष्मिये स्मितवान् स्वनु प्रवेश-लाभादिति भावः ॥ ३८ ॥

लज्जयेति। स्मर एवार्भकः शिशुः अप्रगल्भावस्थत्वात्तथा रूपणम्। तस्याः हृदि किञ्चिदुच्छ्वसित एव पूर्वोक्तचुम्बनाद्युपलालनेन कि-ञ्चिदुच्छ्वसितः सन्नेव पुनर्लज्जया ह्रिया एत्यागत्य कुङ्कृतः कुङ्कारेण वारितः अथ तथाप्युद्गमने बलिना ततोऽपि प्रबलेन साध्वसेन त्रासेन पुंसा तर्जितो भर्त्सितः सन् न्यग्बभूव सङ्कोच ॥ ३९ ॥

वल्लभस्येति। स्मरोत्सवे सुरते प्रसभं बलात् अङ्कपालिकां आलिङ्गनं

हारसाधिमविलोकने मृषाकौतुकं किमपि नाटयन्नयम् ।
कण्ठमूलमदसीयमस्पृशत् पाणिनोपकुचधाविना धवः ॥ ४१ ॥
यत्त्वयास्मि सदसि स्रजाञ्चितस्तन्मयाऽपि भवदर्हणाऽर्हति ।
इत्युदीर्य निजहारमर्पयन्नस्पृशत् स तदुरोजकोरकौ ॥ ४२ ॥
नीविसीम्नि निहितं स निद्रया सुभ्रुवो निशि निपिहसम्विदः ।
कम्पितं शयमपासयन्निजं दोलनैर्जनितबोधयाऽनया ॥ ४३ ॥

ऽपरीरम्भ आश्लेषो परिष्वङ्गः पगूहनम् । आलिङ्गनमपि क्रोडीकरणं अङ्कपाल्यपीति यादवः । लिप्सतोर्लातुमिच्छतो रालिङ्गनप्रहतयो रित्यर्थः । ददातेः सन्नन्तात्कर्तरि शतृप्रत्ययः सनि मीमेत्यादिना इत्त्वेऽभ्यासलोपः । अङ्कमस्य भजतोरेकक एकाकी भुजः अङ्कपाये कन्प्रत्ययः । तल्पयन्त्रणे तल्पाक्रमणे निरन्तरःलया अव्यवधानया निरन्तराश्लिष्टतल्पयेत्यर्थः । न लय विरमतीति निदधः तल्पनिःश्लिष्य कर मनुत्पदित्यर्थः ॥४०॥

हारेति । धवः पतिरयं नलः हारस्य साधिम्नो रामणीयकस्य विलोकने किमपि मृषा कौतुकं नाटयन्नुरकृतं कुचसमीपे धावतीति तद्धाविना कुचलङ्घिणा पाणिना अमुष्या इदम् अदसीयं त्यदादित्वाद् वृद्धाच्छः । कण्ठमूलमस्पृशत् ॥ ४१ ॥

यदिति । हे प्रिये ! यद्यस्मात्त्वया सदसि स्रजा वरणस्रजा अञ्चितः पूजितोऽस्मि अञ्चेः पूजायामिति इडागमः नाञ्चेः पूजायामित्यनुनासिकलोपप्रतिषेधः । तन्मयापि भवत्या अर्हणा पूजा अर्हति सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । अर्हतीत्युक्ते इत्युदीर्य निजं हारमर्पयन् स नलः तस्याः उरोजकोरकौ कुचकुड्मलावस्पृशत् ॥ ४२ ॥

नीवीति । स नलो निशि निद्रया निपिहसम्विदो लुप्तसंज्ञायाः सुभ्रुवः प्रियायाः नीविसीम्नि नीवीप्रदेशे निहितं कम्पितं कम्पमिति सात्विकाङ्कितः । निजं शयं पाणिं दोलनैः पाणिव्यापारैः जनितबोधया प्रबुद्धया अनया प्रियया प्रयोज्यया अपासयन् निरासयामास ॥ ४३ ॥

स प्रियोरुयुगकञ्चुकांशुके न्यस्य दृष्टिमथ सिस्मिये नृपः ।
आववार तदथाम्बराञ्चलैः सा निराकृतिरिव त्रपाहृता ॥ ४४ ॥
बुद्धिमान् व्यधित तां क्रमादयं किञ्चिदित्थमपनीतसाध्वसाम् ।
किञ्चि तन्मनसि चित्तजन्मना ह्रीरनामि धनुषा समं मनाक् ४५
सिस्मिये हसति तेन न स्म सा प्रीणितापि परिहासभाषणैः ।
स्वे हि दर्शयति ते परं क्वाऽनर्घ्यदन्तकुरुविन्दमालिके ॥४६॥
वीक्ष्य भीमतनयास्तनद्वयं मग्नहारमणिमुद्रयाङ्कितम् ।
सोढकान्तपरिरम्भगाढता सा त्वमानि सुमुखी सखीजनैः ॥४७।

---

स इति । स नृपः प्रियाया ऊरुद्युगस्य कञ्चुके वर्मभूते अंशुके दृष्टिं न्यस्य सिस्मिये स्मितवान् तदेव दृष्ट्वा नतिभावः । अथ सापि निराकृतिरिव आकाररहितेव मानाद्दृष्टोरुयुगेत्यर्थः । अतएव त्रपाहृता लज्जामग्ना इति तदूरुयुगं अम्बराञ्चलैर्वस्त्रान्तैराववार आवृतमप्यनावृतमिव मानस्यैवेति त्रपातिशयोक्तिः ॥ ४४ ॥

अथ शनैर्मौग्ध्यत्यागात् मध्यमावस्थां प्रतिपेदे इत्याह बुद्धिमानिति । बुद्धिमानुपायज्ञोऽयं तां प्रियां क्रमादित्थं मुक्तरीत्या किञ्चिदपनीतसाध्वसामपसारितभयां व्यधित विहितवान् किन्तु चित्तजन्मना कामेन तस्या मनसि ह्री धनुषा समं मनागनामि मिथ्याभावत्वाद्दृष्टिः । शनैर्लज्जात्यागकारेण कामः स्वयम् उत्थित इत्यर्थः । अत्र हि नमनधनुर्नमनयोः कार्यकारणयोः पौर्वापर्य्येण सहोक्त्यलङ्कारः ॥ ४५ ॥

सिस्मिय इति । सा तेन परिहासभाषणैः परिहासोक्तिभि प्रीणिता हर्षितापि प्रौढोगमनलक्षणेन क्रमः पूर्वप्रौढ्येनुक्रमेण्य । सिस्मिये न तु हसति स्म स्मितमेवाकरोत् न तु हसितमिति गाम्भीर्योक्तिः । हसितलक्षणं स्मितमिति भेदः । तथा हि क्वा स्वी दन्ता एव कुरुविन्दाः पद्मरागाः कुरुविन्दस्तु मुक्ता यां पद्मरागे हे । अनर्घ्ये सुशोभने तन्मालिके स्वे आत्मीये ते हि परं दर्शयति ॥ ४६ ॥

वीक्ष्येति । मग्नानामाश्लेषादन्तःप्रविष्टानां हारमणीनां

याचते स्म परिधापिकाः सखीः सा स्वनीविनिविडक्रियां यथा।
अन्वमिन्वत तथा विहस्य ता वृत्तमत्र पतिपाणिचापलम् ॥४८॥

कुर्व्वती निचुलितं ह्रिया कियत् सौहृदाद्विवृतसौरभं कियत्।
कुड्मलोन्मिषितसूनसेविनीं पद्मिनीं जयति सा स्म पद्मिनी॥४९॥

नाविलोक्य नलमासितुं स्मरो ह्रीर्न वीक्षितुमदान्मृगीदृशः।
तद्दृशः पतिदिगाचलन्नथ व्रीडिताः समकुचन्मुहुः पथः ॥५०॥

स्वया पदेनाङ्कितं भीमतनयस्तनद्वयं वीक्ष्य सखीजनैः सुसूक्ष्मा सा भैमी स्नेह. कान्तस्य यः परिरम्भ स्तस्य गाढता दार्ढ्यं यया सा सत्य-मानि गाढ परिरब्धेति अनुमितेत्यर्थः ॥ ४७ ॥

याचत इति। यथा परिधापिकाः वस्त्रबन्धिनी. सखीः स्वस्मा-त्मनो नीविनिविड़क्रियां दृढ़बन्धं याचते स्म तथा ताः सख्योविहस्य अत्र नीविदेशे पत्यु. पाणिचापल माकर्षणं वृत्तं भूतमन्वमिन्वत अनुमि-तवत्यः। अन्यथैतत्प्रार्थनानुपपत्तेरिति भाव मिनोतेर्लङि तङ् ॥ ४८ ॥

कुर्वतीति। पद्मिनी पद्मिनीजातिः स्त्री कमलिनी च सा भैमी कियद्दाविवृत्तं ह्रिया निचुलित निगूहितं कियत् सुहृदयस्य भावात्सौ-हार्द्दात् स्नेहाद्युवादित्वादण्प्रत्यय.। हृदयस्य हृल्लेख यदण्लेखेष्वपि हृद्भाव इत्युभयपदवृद्धिः। विवृतं सौरभं मनोज्ञत्वं सौगन्ध्यञ्च यस्य तच्च कुर्वती कुड्मलोन्मीलितानि च सूनानि सेवत इति तत्सेविनीं तद्वतीं पद्मिनीं कमलिनीं जयति स्म तद्वद्भातीत्यर्थः ॥ ४९ ॥

नेति। स्मरः मृगीदृशः सुभ्रुवो भैम्याः नलम् अविलोक्यासितुं नादात् ह्रीः वीक्षितुं नादात् तदा तस्याः दृशो दृष्टय. पत्युर्दिशा तन्मार्गेण मुहुरचलन् अथ व्रीड़िताः सत्य. पथस्तन्मार्गात्समकुचन् सङ्कुचिताः ॥ ५० ॥

नेति। अनया भैम्या पतिर्नेत्रयोर्लक्ष्यतां विषयतामपि नानायि न नीत. तथा परोक्षतां विषयतामपि नानायि कुतः यद्यस्माद्विलोकने

नानया पतिरनायि नेत्रयोर्लक्ष्यतामपि परोक्षतामपि ।
वीक्ष्यते स्म खलु यद्विलोकने तत्र तत्र नयने ददानया ॥ ५१ ॥

वासरे विरहनिःसहा निशां कान्तयोगसमयं समैहत ।
सा ह्रिया निशि पुनर्दिनोदयं वाञ्छति स्म पतिकेलिलज्जिता ॥ ५२ ॥

तत् करोमि परमभ्युपैषि यन्मा ह्रियं व्रज भियं परित्यज ।
आलिवर्ग इव नेऽहमित्यमूं शश्वदाश्वसनमूचिवान्नलः ॥ ५३ ॥

येन तन्मदनवह्निना स्थितं ह्रीमहौषधिनिरुद्धशक्तिना ।
सिद्धिमद्भिरुदतेजि तैः पुनः स प्रियप्रियवचोऽभिमन्त्रणैः ॥ ५४ ॥

निमित्ते तत्र तत्र नयने ददानया तेषु तेषु विषयेषु दत्तदृष्ट्या तया वीक्ष्यते स्म खलु अवर्जनीयतया वीक्षित एव प्राय इति भावः ॥ ५१ ॥

वासर इति । सा भैमी वासरे विरहस्य निःसहा इति पचाद्यच् । ह्रिया कान्तयोगसमयं प्रियसमागमकालं निशां समैहत ऐच्छत निशि पुनः पत्युः केलिषु लज्जिता सती दिनोदयं दिनप्रादुर्भावं वाञ्छति स्म ॥ ५२ ॥

तदिति । हे प्रिये ! त्वत्प्रियं तदेव करोमि यदभ्युपैषि अङ्गीकरोषि ह्रियं न व्रज भयं परित्यज अहं ते आलिवर्गः सखीजन इव इत्यमूं प्रियां नलः शश्वत् मुहुः पुनः पुनः शश्वदित्यमरः । आश्वसनं सान्त्ववचनमूचिवान् ॥ ५३ ॥

येनेति । येन तन्मदनवह्निना तस्याः कामाग्निना ह्रीरेव महौषधिस्तया निरुद्धशक्तिना प्रतिबद्धशक्तिना सता स्थितं तस्मिन् भावे क्तः । स कामाग्निः सिद्धिमद्भिः सिद्धशक्तिकैः पूर्वोक्तैः प्रियस्य पत्युः प्रियवचोभिरेवाभिमन्त्रणैर्मन्त्रप्रयोगैः पुनरुदतेजि उत्तेजितः तिज निशातने इति धातोर्ण्यन्तात् कर्मणि लुङ् । औषधप्रतिबद्धोऽग्निः प्रतिमन्त्रेण प्रज्वलितस्यो भवतीति भावः रूपकालङ्कारः ॥ ५४ ॥

यद्विधूय दयितार्पितं करं दोर्द्वयेन पिदधे कुचौ दृढम्
पार्श्वगं प्रियमपास्य सा ह्रिया तं हृदि स्थितमिवालिलिङ्ग तत्५५
अन्यदस्मि भवतीं न याचिता वारमेकमधरं धयामि ते ।
इत्यसिस्वददुपांशुकाकुवागुपमर्द्द हठात्तिरेव तम् ॥ ५६ ॥
चुम्बनादिषु बभूव नाम किं तद्यथा भयमिहापि मा कृथाः ।
आलपन्निति तदीयमादिमं स व्यधत्त रसनावलिव्ययम् ॥५७॥
अस्तिवाम्यभरमस्तिकौतुकं सास्तिघर्मजमस्तिवेपथु ।
अस्तिभीति रतमस्तिवाञ्छितं प्रापदस्तिसुखमस्तिपीडनम् ॥५८॥

यदिति । सा भैमी दयितेनार्पितं करं विधूय दोर्द्वयेन भुजयुगेन कुचौ दृढं यथा तथा यत्पिदधे आच्छादयामास तत्तस्मात् ह्रिया पार्श्वगं बहिःसमीपस्थं प्रियं अपास्य निरस्य हृदि स्थितन्तमालिलिङ्गेव आलिङ्गयती किमित्युत्प्रेक्षा ॥ ५५ ॥

अन्यदिति । हे प्रिये ! भवती मयान्यत्किमपि याचिता अर्थयिता त्वन्दोह्यादित्वाद्द्विकर्मता । नास्मि किन्तु एकवारं मुहूर्तं ते तवाधरं धयामि पिबामि धेट् पानार्थः प्रार्थनायां लोट्येमिप् । इतीत्थमुपांशु मन्दङ्काकुवाग्विकृतस्वरोक्तिः सोऽयं नलः उपमर्द्दं हठात्तिर्बलात्कारर्हत्तियस्य स एव सन् तमधरमसिस्वदत् स्वादितवान् स्वदेर्णौ चङ्युपधाया ह्रस्वः ॥ ५६ ॥

चुम्बनेति । हे प्रिये ! चुम्बनादिषु कृतेषु किं नामानिष्टं बभूव न किञ्चिदित्यर्थः । तत्तस्मादिह करिष्यमाणेऽपि वृथा भियं मा कृथाः, इत्युदीर्य अयं नलः सुगदृश प्रियायाः आदिममाद्यं आदेश्चेति वचनान्मप्रत्ययः । रसनावलिव्ययं काञ्चीमोचनञ्चकार ॥ ५७ ॥

अस्तीति । सा भैमी अस्तिवाम्यस्य सर्वत्र वक्रतायाः भरः आत्यन्तिकत्वं यस्मिन् तत् सर्व्वत्रकार अस्तिक्षीरादिवचनमिति बहुव्रीहिः । एवमुत्तरत्रापि द्रष्टव्यं कौतुकमौत्सुक्यं घर्मजं स्वेदः वेपथुः कम्पः सा-

ह्रीस्तवेयमुचितैव यन्नवस्तावके मनसि मन्मथागमः।
तत्तु निस्त्रपमजस्रसङ्गमाद्व्रीडमावहति मामकं मनः॥५९॥
इत्युपालभत सम्भुजिक्रियारम्भविघ्नघनलज्जितैर्जिताम्।
तां तथा स चतुरोऽथ सा यथा तमुमेव तमनु त्रपामयात्॥६०॥
प्रातरात्मशयनाद्विनिर्यतीं सन्निरुध्य यदसाध्यमन्यदा।
तन्मुखार्पणमुखं सुखं भुवोजम्भजित्त्रिदिवशचीमचीकरत्॥६१॥

स्त्रिक्रमाद्वोपलक्षणं एतद्धि विदित ममेदं मामकं मनस्तु स्वपत्नीनव-सङ्गमाद्दाक्ष्यिण्यं मनोरथसुखमालिङ्गनादौ पीडितं नखदन्तक्षतादि-व्रणमन्तरतं प्रापत्॥ ५८॥

ह्रीरिति। हे प्रिये! तवेयं ह्रीरुचितैव यद्यस्मात्तावके मनसि मन्मथागमो मन्मथाङ्कुरित नवः साम्प्रतिकः तत् निस्त्रपं निर्लज्जं मामकं मदीयं मनः अजस्रसङ्गमान्नित्यसमागमादेव व्रीडमावहतीति॥ ५९॥

इतीति। सम्भुजिक्रियारम्भस्य सम्भोगव्यापारोपक्रमस्य विघ्नैः प्रति-बन्धकैः घनलज्जितैर्निबिडव्रीडैः भावे क्तः। जितात्मा प्रियाञ्चतुरः स नल-स्तया उपालभत यथा सा प्रिया तमनु तं प्रतित्वमेव अदित्वा ह्रिकत्वा-दिदमाह। त्रपामयात् उक्तोपलम्भमय न त्रप कृच्छ्राविवत्यर्थः॥ ६०॥

प्रातरिति। भुवो जम्भजित् भूदेवेन्द्रो नलः प्रातरात्मशयनाद्वि-निर्यतीं निर्गच्छन्तीं त्रिदिवशचीम् लोकेन्द्राणीन्तां प्रियां सन्निरुध्य अन्य-दा अनन्तरक्षणे असाध्यमलभ्यं सर्वामिलनादिति भावः। तदनुभूतवर मुखार्पणमुख मुखचुम्बनप्रमुख सुखमचीकरत् तया कारयामासेत्यर्थः। करोतेर्णौ च ङ्युपधाह्रस्वादिकोऽन्यतरस्यामिति विकल्पाण्णिकर्तुः कर्मत्वं ॥ ६१॥

नायकस्य शयनादहर्मुखे निर्गता मुदमुदीक्ष्य सुभ्रुवाम् ।
आत्मना निजनवस्मरोत्सवस्मारिणीयमहृणीयत स्वयम् ॥६३॥
तां मिथोऽभिदधतीं सखीं प्रियस्यात्मनश्च स निशाविचेष्टितम् ।
पार्श्वगः सुरवरात् पिधां दधद् दृश्यतां स्मृतकथो हसन् गतः ॥६४॥
चक्रदारविरहेक्षणक्षणे बिभ्यती धवहसाय साभवत् ।
क्वापि वस्तुनि वदत्यनागतं चित्तमुद्यदनिमित्तवैकृतम् ॥६५॥

नायकस्येति । अहर्मुखे ऊधसि रोः सुपीत्यह्नो नकारस्य रेफादेशः । नायकस्य शयनान्निर्गता इत्थं भैमी सुभ्रुवां सखीनां मुदं स्वसम्भोगदर्शन-जन्यमिति भावः । उदीक्ष्य आत्मना मनसा निजं नवं स्मरोत्सवं विस्रम्भ-सम्भोगं स्मरतीति तत् स्मारिणी सती स्वयमेवाहृणीयत तत्प्रकाशनादजि-हेत् त्रपायां ह्रीश्चेति जिहेति लज्जते हृणीयते इति भट्टमल्लः । कण्ड्वा-दियगन्ताल्लङ् । तत्र हृणीङिति ङित्करणादात्मनेपदम् ॥ ६३ ॥

तामिति । स नलः प्रियस्य पत्युरात्मनश्च निशाविचेष्टितं रात्रिवृत्तं मिथोरहसि सखीरभिदधतीं सखीभ्यः कथयन्तीं ब्रुवेरर्थवत्त्वाद् द्विकर्म-कत्वम् । तां प्रियां पार्श्वगः समीपस्थो हसन् सुराणामिन्द्रादीनां वराद्दत् पिधामन्तर्धां आतश्चोपसर्गे इत्यङ् प्रत्ययः । वष्टि भा गुरिरल्लोपमित्यकारलोपः । दधत् स्मृतकथः स्मृतप्रियावचनः सन् दृश्यतां गतः ॥ ६४

अथास्याः प्रियविरहासहिष्णुतामाह चक्रेति । चक्रदाराणां रात्रौ चक्रवाकवनितायाः विरहेक्षणक्षणे वियोगदर्शनकाले बिभ्यती स्वयं लप्स्यन्ती सा भैमी धवस्य प्रियस्य हसायाभवत् अकाण्डत्रासा-ज्जहासेत्यर्थः । स्वनहसोर्वेति विकल्पादप्प्रत्ययः । अथवा युक्तं भयमित्यत आह । क्वापीति । क्वापि रहसि विजने अनागतं वस्तु आगाम्यर्थं एव उद्यदुदयमानमनिमित्तवैकृतमाकस्मिकविकारो यस्य तत्तादृक् चित्तं

चुम्बितुं न मुखमाचकर्ष यत् पत्युरन्तरमृतं ववर्ष तत्।
सा नुनोद न भुजं यदर्पितं तेन तस्य किमभून्न तर्पितम्॥६६॥
नीतयोः स्तनपिधानतां तया दातुमाप भुजयोः करं परम्।
वीतबाहुनि ततो हृदंशुके केवलेऽप्यथ स तत्कुचद्वये॥६७॥
याचनान्न ददतीं नखार्पणं तां विधाय कथयान्यचेतसम्।
वक्षसि न्यसितुमात्ततत्करः स्वं बिभेद मुमुदे स तन्नखैः॥६८॥
स प्रसह्य हृदयापवारकं हर्तुमक्षमत सुभ्रुवो बहिः।
ह्रीमयं न तु तदीयमान्तरं तद्विनेतुमभवत् प्रभुः प्रभुः॥ ७८॥

वदतीत्यर्थः। चक्रविरहदर्शनात् बुद्धा स्फुटोनिज आगामिप्राभातिकविरहएव हेतुभूत इतितात्पर्य्यार्थः॥ ६५॥

चुम्बितुमिति। सा प्रिया चुम्बितुं मुखं न आचकर्ष इति यत्तदनाकर्षणं पत्युरन्तरन्तःकरणे अमृतं ववर्ष तत्तुल्यमित्यर्थः। अर्पितमुपरिन्यस्तं भुजं न नुनोद न निरास तेनाङ्गीकारेण तस्य नलस्य सम्बन्धि किं न तर्पितमभूत् नाप्यायितं सर्वाङ्गसन्तर्पणमभूदित्यर्थः॥ ६६॥

नीतयोरिति। स नलः तया स्तनपिधानतां नीतयोस्तद्दोर्युगे ततो नीतबाहुन्यपसारितभुजे हृदंशुके स्तनोत्तरीये अथ केवले अपसारितांशुके तत्कुचद्वयेऽपि परं भुजं करं दातुमर्पयितुमाप करद्वानमवापेत्यर्थः। अत्रैकस्य करस्य क्रमादनेकेषु भुजांशुककुचेषु वृत्तिकथनात्क्रमेणैकमनेकस्मिन्नित्याद्युक्तलक्षणः पर्यायालङ्कारभेदः॥ ६७॥

याचनादिति। याचनाद्यनान्नखार्पणं न ददतीं नखक्षतमकुर्वन्तीं तां प्रियां कथया केनचित्कथाव्याजेन चितिपृक्षेत्यादिना अङ् प्रत्यय। अन्यमानसां व्यासक्तचित्तां विधाय वक्षसि स्वोरसि न्यसितुमात्ततत्करो गृहीतप्रियाकरः सन् तन्नखैः प्रियानखैः स्वमात्मानं बिभेदाभिनत् व्यदारयत् ननन्द च॥ ६८॥

स इति। प्रभुः स्वामी स नलः सुभ्रुवः बहिर्बाह्यं हृदयापवारक-

स स्मरेण बलिनाप्यहापिता ह्रीक्षमे भ्रममशोभताबला।
भाति चापि वसनं विना न तु व्रीडधैर्यपरिवर्जने जनः॥७०॥
आत्थ नेति रतयाचितं न चेन्मामतोऽनुमतवत्यसि स्फुटम्।
इत्यमुं तदभिलापनोत्सुकं धूनितेन शिरसा निरास सा॥७१॥
या शिरोविधुतिराह नेति ते सा मया न किमियं समाकलि।
तन्निषेधमसङ्गताविधिर्व्यक्तमेव तव वक्ति वाञ्छितम्॥७२॥

मुत्तरीयं प्रसह्य हर्तुं अशकत तदीयं दमन्तीय मान्तरं अन्तर्वर्ति ह्रीमयं नतु तद्दयापयारकं विनेतु मनुनेतुं प्रभुः समर्थोऽभवत्॥ ६९॥

सेति। बलिना स्मरेण ह्रीक्षमे लज्जाधैर्ये अहापिता अत्याजिता जहातेर्ण्यन्तात् सन्वद्भावे द्विकर्मकादप्रधाने कर्मणि क्तः। सा अबला भ्रममशोभत तथा हि जनो वसनं विनापि भाति व्रीड धैर्ययोः परिवर्जने परित्यागे तु न भाति इति न शोभते नतु निर्लज्जधैर्या इति भावः॥ ७०॥

आत्थेति। हे प्रिये! रतयाचितं सुरतभिक्षां मां नेति नात्थ न च ब्रवीषि चेत् ततः प्रतिषेधात् स्फुटं व्यक्तमनुमतवत्यसि अप्रतिषिद्ध मनुमतं भवतीति न्यायात् इति भावः। इतीत्थं तस्या अभिलापने उत्सुकममुं प्रियं सा भैमी धूनितेन कम्पितेन धूञ्प्रीञोर्नुग्वक्तव्यः। शिरसा निरास अहो अत्यन्ताभिमतार्थेऽपि निषेधशीलता स्त्रीणामिति भावः॥ ७१॥

येति। हे प्रिये! या ते शिरोविधुतिः कार्यों नेत्याह निषेधं ब्रूते सेयं शिरोविधुतिर्मया समकलि स्त्रहीतार्थैवेत्यर्थः। कलयतेः कर्मणि लुङ्। तस्य शिरोविधुतिरूपस्य निषेधस्य असङ्गता विषमेतरसङ्गता सैव विधिः द्वौ नञौ प्रकृतमर्थं ब्रूत इति न्यायात्तव वाञ्छितमभिलाषं व्यक्तमेव वक्ति वचेर्लट् निषेधार्थमपि शिरोविधूननं व्यर्थमेव भवतीत्यर्थः॥ ७२॥

नाथ नाथ शृणवानि तेन किं ते न वाचमिति तां निगद्य सः।
सास्म दूत्यगतमाह तं यथा तज्जगाद मृदुभिस्तदुक्तिभिः ॥७३॥

नीविसीम्नि निविडं पुराऽरुणत् पाणिनाथ शिथिलेन तत्करम्।
सा क्रमेण न न नेति वादिनी विघ्नमाचरदमुष्य केवलम् ॥७४॥

रूपवेषवसनाङ्गवासनाभूषणादिषु पृथग्विदग्धताम्।
सान्यदिव्ययुवतिभ्रमक्षमा नित्यमेत्य तमगान्नवा नवा ॥७५॥

नेति। हे प्रिये! नाथ नाथ नाननुभसि सम्भ्रमे द्विरुक्तिः। तेनानालपनेन ते तव वाचं न शृणवानि किं न शृणुयां किं शृणुयामेवेत्यर्थः। अस्मान्वनानिषेधः। तां प्रियां निगद्य स नलः सा प्रिया दूत्यगतं दूत्यागमनागतं तमात्मानं यथा येन प्रकारेणाह स्म उक्तवती तत् सर्वं मृदुभिस्तस्याः उक्तिभिः जगादेत्यर्थः। तदा तया निःशङ्कत्वमालम्ब्य सम्प्रति किमर्थं वृथा सङ्कुचसीत्यर्थः ॥ ७३ ॥

नीवीति। सा प्रिया नीविसीम्नि वस्त्रग्रन्थिदेशे तत्करं प्रियहस्तं पुरा प्रथमं पाणिना निविडं भृशं अरुणत् रुद्धवती रुन्धेः कर्त्तरि लङ्। क्रमेण केवलं अथ शिथिलेन मनाक् चलितेन पाणिना ननर्नेति वादिनी वाचिकनिषेधमेव कुर्वती अमुष्य प्रियकरव्यापारस्य विघ्नमाचरत् क्रमात् प्रियकरव्यापारमसहिष्टेत्यर्थः। अत्रैकस्मिन् नीविदेशे क्रमादनेकव्यापारसम्बन्धोक्तिपर्य्याय अलङ्कारभेदः ॥ ७४ ॥

रूपेति। रूपं सौन्दर्य्यं वेषं नेपथ्यं वसनं वस्त्रं अङ्गवासना धूपादिना शरीरसंस्कारः भूषणं कङ्कणादि तान्यादिर्येषां तेषु शोभासाधनेषु पृथग्विदग्धतां विलक्षणशोभां नित्यमेत्य अतएव नवा नवा आभीक्ष्ण्ये नित्यार्थे द्विर्भावः। सा भैमी अन्या काचित् दिव्या युवतिरिति भ्रमे भ्रान्तिजनने क्षमा समर्थासीति तं नलम् अगात् इणो गा लङ् ॥ ७५ ॥

इङ्गितेनेति। सा भैमी इङ्गितेन चेष्टया कटाक्षादिचेष्टितेन निजं रागसागरं चटुभिः प्रियवादैः गुणज्ञतां पतिगुणाभिज्ञतां परिचर्य्यया

दूङ्गितेन निजरागसागरं संविभाव्य चटुभिर्गुणान्नताम् ।
भक्तताश्च परिचर्य्ययानिशं साधिकाधिकवशं व्यधत्त तम् ॥७६॥
स्वाङ्गमर्पयितुमेत्य वामतां रोपितं प्रियमथानुनीय सा ।
आतदीयहठसम्भुभुक्तुतां नान्वमन्यत पुनस्समर्थिनम् ॥७७॥
आद्यसङ्गमसमादराण्यधाद्दुर्लभाय दधती कथञ्चन ।
अङ्गकानि घनमानवामताव्रीडलम्भितदुरापतानि सा ॥७८॥
पत्युरागिरिशमातरु क्रमात् स्वस्य चागिरिजमालतं वपुः ।
तस्य चार्हमखिलं पतिव्रता क्रीड़ति स्म तपसा विधाय सा ॥७९॥

भक्ततां भक्तिमत्त्वञ्चानिशं संविभाव्य सम्यग्ज्ञापयित्वा यथन्तासिचि रूपं । तं प्रियम् अधिकाधिकवश मत्यन्तवशम्बद प्रकारे गुणवचनस्येति द्विरुक्तिः कर्मधारयवद्भावात्सुपोलुक् । व्यधत्त इङ्गिताद्यनुमितै. रागा-दिद्विगुणै स्तस्याः सोऽत्यन्तवशम्बदोऽभूदित्यर्थः ॥ ७६ ॥

स्वाङ्गमिति । सा दमयन्ती स्वाङ्ग मर्पयितु वामतां वक्रता मेत्याथ रोपितं प्रियमनुनीय प्रसाद्य अथार्थिन मङ्गार्पणकाङ्क्षिणं तं प्रियं तदीया प्रियसम्बन्धिनी या हठाद्बलात् सम्भुक्तुता सम्भोक्तुमिच्छा तावत्पर्यन्त मातदीयहठसम्भुभुक्तुताम् आङोमर्यादाभिविध्योरित्यव्ययीभावेन नपुंसकह्रस्वत्वम् । नान्वमन्यत स्वप्रियप्रसादनमात्रे स्वयं प्रवृत्तिः न सम्भोगे ऽत्यपि रागवेग इति भावः ॥ ७७ ॥

आद्येति । सा प्रिया घनै निविडैर्मानवामताव्रीडैः कोपवक्रता-मन्दाक्षैर्लम्भिता प्रापिता दुरापता दौर्लभ्यम् येषां तानि दुर्लभान्यङ्गानि कथञ्चन कृच्छ्रेण वल्लभाय दधती धारयन्ती आद्यसङ्गमेन हेतुना समादराणि तुल्याकाङ्क्षाण्यधात् दधार अर्पितवतीत्यर्थः ॥ ७८ ॥

पत्युरिति । पतिव्रता सा दमयन्ती तपसा अस्खलितचारित्ररूपेण क्रमात्पत्युर्नलस्य आगिरिशं गिरिशं ईश्वर मारभ्य आतरु तरु-पर्य्यन्त स्वस्यात्मनश्च आगिरिजं गिरिजां पार्वतीम् आरभ्य आलत

न स्थली न जलधिर्न काननं नाद्रिभूर्न विषयो न विष्टपम्।
क्रीड़िता न सह यत्र तेन सा सा विधैव न यया यया न वा॥८०॥

नम्रयांशुकविकर्षणि प्रिये वक्त्रवातहतदीप्रदीपया।
भर्त्तृमौलिमणिदीपितास्तया विस्मयेन ककुभो निभालिताः॥८१॥

कान्तमूर्द्धि दधती पिधित्सया तन्मणेः श्रवणपूरमुत्पलम्।
रत्नमर्चनमिवाचरत् पुरः सा स्ववल्लभतनोर्मनोभुवः॥८२॥

तं पिधाय मुदिताथ पार्श्वयोर्वीक्ष्य दीपमुभयत्र सा स्वयोः।
चित्तमाप कुतुकाद्भुतत्रपातङ्कसङ्कटनिवेशितस्मरम्॥ ८३ ॥

लतापर्यन्त सर्वत्राभिविधावव्ययीभाव । वपुर्देवगन्धर्वोरगमृगविहङ्गादिदेहस्वशरीर तया तस्य वपुष्येऽह मनुरूप मखिलं क्रीडायाः साधनञ्च विधाय निर्माय क्रीडति स्म निरङ्कुशमहिमत्वात्सर्वत्रतानामिति भाव ॥ ७८ ॥

नेति। सा भैमी तेन नलेन सह यत्र क्रीडिता न क्रीडितवती कर्त्तरि क्तः सा स्थली अकृत्रिमभूमि. नास्ति जानपदेत्यादिना अकृत्रिमार्थे ङीप्. एवं स जलधिर्नास्तीति योज्य। विषयोदेश. किञ्च सा विधा प्रकार न नास्ति यया विधया क्रीडितवती नवा धेनुकादिप्रन्यप्रकारेण तेन सह विजहारेत्यर्थ. ॥ ८० ॥

नम्रेति। प्रिये अंशुकविकर्षिणि सति नम्रया नतया वक्त्रवातेन फुत्कारेण हतदीप्रदीपया तया भैम्या भर्त्तृमौलिमणिना दीपिता प्रकाशिताः ककुभो दिशो विस्मयेन निभालिताः दृष्टा ॥ ८१ ॥

कान्तेति। सा प्रिया तस्य मणेः पिधित्सया पिधातुमिच्छया कान्तस्य मूर्ध्नि श्रवणपूरकमुत्पलं दधती सती रत्नं रतिकर्म कर्त्तुं पुरः कर्मादौ स्ववल्लभस्य तनरूपस्य तस्य नलमूर्त्तेर्मनोभुवः कामस्य रत्नाधिवतस्यार्चनं मादरमिवेत्युत्प्रेक्षा। ८२ ॥

तमिति। सा भैमी तं शिरोमणिं पिधाय कर्णोत्पलेनाच्छाद्य मु-

एककस्य शमने परं पुनर्जाग्रतं शमितमप्यवेक्ष्य तम् ।
जातवह्निवरसंस्मृतिः शिरः सा विधूय निमिमील केवलम् ॥८४॥

पश्य भीरु ! न मयापि दृश्यसे यन्निमेषितवती दृशावसि ।
इत्यनेन परिहस्य सा तमः सन्निधाय समभोजि लज्जिता ॥८५॥

चुम्ब्यसेऽयमयमङ्क्यसे नखैः श्लिष्यसेऽयमयमर्प्यसे हृदि ।
नो पुनर्न करवाणि ते गिरं त्यज त्यज तवास्मि किङ्करा ८६

दिता अथ स्थयोरुभयतोभयोः पार्श्वयोर्दीपं वीक्ष्य कुतुकं कौतुकम् अद्भुतालोकनादद्भुतस्य निर्वापितस्य पुनः प्रादुर्भावात्त्वरा वस्त्राकर्षणात् आतङ्कः शङ्का भीतिर्वा पुरुषसन्निधानात् तेषां सङ्कटः सम्बाधः स्तत्र निवेशितः निरुद्धः स्मरो यस्मिन् तत्तादृक् चित्तम् अपि तया प्रहृष्टोऽपि कामः सदा किञ्चित् सङ्कुचित इवासीदित्यर्थः ॥ ८३ ॥

एककेति । एककस्य दीपस्य शमने निर्वापणे सति शमितमपि पूर्ववन्निर्वापितमपि पुनर्जाग्रतं नल स यया ज्वलन्तं नाभ्यस्ताच्छतु-रिति नुमः प्रतिषेधः । अपरन्तं दीपमवेक्ष्य सा जाता वह्नेर्वरस्य या दाहपाकोपयिकी तनु शित्यादिनोक्तवरदानस्य संस्मृतिर्यस्याः सा सती शिरो विधूय कम्पयित्वा दुर्वारत्वं निश्चित्येत्यर्थः । निमिमील केवलं स्वयं निमीलिताक्षी जाता भीरूणामेष स्वभाव इति भावः ॥ ८४ ॥

पश्येति । हे भीरु ! भयशीले ! भियः क्रुक्लुकनाविति क्रुप्रत्ययः । मयापि न दृश्यसे पश्य यद्यस्माद्दृशौ निमेषितवती निमीलितवती असि तदितीत्थमनेन नलेन परिहस्य लज्जिता सा तमः अन्धकारं सन्निधाय समभोजि सम्भुक्ता अन्यथा भुक्तानां दुराराध्यत्वादिति भावः ॥ ८५ ॥

अथान्धकारकल्पनादौ फलयुग्मेनाह चुम्ब्यस इत्यादि । मायिनो वचनचतुरा सा भैमी अयं चुम्ब्यसे नखैः रङ्क्यसे चिह्न्यसे अयं श्लिष्यसे अयं हृदि हृदये अर्प्यसे पुनस्ते तव गिरमाज्ञां न नो करवाणि करवा-ण्येव कुर्वीतेति निवारणे त्यज त्यज तव किङ्करा दास्यस्मि किं यत्तत् वस्तुषु कञ्विधानमित्यङ्प्रत्यये टाप् ॥ ८६ ॥

इत्यलीकरतकातरा प्रियं विप्रलभ्य सुरते ह्रियं च सा।
चुम्बनादि वितताार मायिनी किं विदग्धमनसामगोचरः ॥८७॥
स्वेप्सितोद्भ्रमितभावलम्पया दीपिकाचपलया तमोघने।
निर्विशङ्करतजन्मतन्मुखाकूतदर्शनसुखान्यभुङ्क्त सः ॥८८॥
यद्भ्रुवौ कुटिलिते तया रते मन्मथेन तदनामि कार्मुकम्।
यत्तु हुं हुमिति सा तदाव्यधात्तत्स्मरस्य शरमुक्तिहुङ्कृतम् ॥८९॥
ईर्ष्यितोपदिशतीव नर्तितुं तत्क्षणोदितमुदं मनोभवम्।
कान्तदन्तपरिपीडिताधरा पाणिधूननमियं वितन्वती ॥९०॥

इतीति। इतीत्थं मलीकं यथा तथा रतकातरा रतकातर्यं नाटयन्ती ह्रियं प्रियञ्च विप्रलभ्य प्रतार्य सुरते चुम्बनादि विततार ददौ तथा हि विदग्धमनसां कुशलधियां किमगोचरः अविषयः किं किमसाध्यमित्यर्थः। प्रियवाक्यभीतेर्विसृज्य विजहार आपत्काले नास्ति मर्यादेति न्यायादिति भावः ॥ ८७ ॥

स्वेति। स नलः तमसा घनो मेघस्तस्मिन् स्वेप्सितेन स्वेच्छया उद्भ्रमितं वोत्पादितं वोद्भ्रमितमाभा सा च सा लम्पा च तया तयोक्तया दीपिकया दीपिकेव चपला विद्युत् विद्युच्चञ्चला चपलापि चेति यादवः। तया निर्विशङ्करताज्जन्म येषां तेषां तस्याः मुखाकूतानां मुखचेष्टितानां दर्शनाद्यानि सुखानि तान्यभुङ्क्त स्थिरप्रकाशे तद्विस्रम्भविघातभयात् क्षणिकप्रकाशेन तच्च अन्वभुङ्क्त दर्शनसुखमन्वभूदित्यर्थः ॥ ८८ ॥

अथ चेष्टितान्याह यदित्यादि। तया रते भ्रुवौ कुटिलिते नखदन्तादिपीडनेषु वक्रिते तदैव मन्मथेन कार्मुकं धनुरपि नमितं सा तदा तत्काले हुं हुमिति यदकार्षीत् सुखातिरेकजनितहुङ्कृतं स्मरस्य शरमुक्तिहुङ्कृतं बाणमोक्षकालहुङ्कारः तत्सर्वं तयोर्हृद्दीपकमभूदित्यर्थः ॥ ९० ॥

ईर्ष्यितेति। कान्तस्य दन्तैः परिपीडिताधरा अतएव पाणिधूननं

सा शशाङ्क परिरम्भदायिनी गाहितुं हृदुरः प्रियस्य न ।
चक्रमे स च न भङ्गुरभ्रुवस्तुङ्गपीनकुचदूरतां गतम् ॥ ९१ ॥

बाहुवल्लिपरिरम्भमण्डली या परस्परमपीडयत्तयोः ।
आस हेमनलिनीमृणालजः पाश एव हृदयेशयस्य सः ॥ ९२ ॥

वल्लभेन परिरभ्य पीडितौ प्रेयसीहृदि कुचाववापतुः ।
केवलीमदनयोरुपाश्रये तत्र हंसमिलितोपधानताम् ॥ ९३ ॥

चित्तवर्ती इव दमयन्ती ततन्तो विधुनननृगे उदितहृद सङ्कातरुं मनोभुवं नलितु मुपदिशती न्यत्यं कर्तव्यरदिशन्तीव स्थिता आक्लिन्दये नुर्मिति विकल्पात्मभवः ईजिता प्रियेणेतिशेषः ॥ ९० ॥

सेति । परिरम्भदायिनी आश्लिष्यन्ती सा प्रियस्य हृदं हृदयालमुरः अतएव गाहितुम् अभिव्याप्तुं न शशाकेत्याहाभ्यय.धिक्येनाधिकालङ्कारभेदः । स नलश्च भङ्गुरभ्रुवः प्रियाया तुङ्गपीनकुचाभ्यां दूरताङ्गतमुरो गाहितुं न चक्रमे न शशाकेति सम्बन्धेऽप्यसम्बन्धरूपाति शयोक्तिः ॥ ९१ ॥

बाह्विति । तयोः सम्बन्धिनीभ्यां बाहुवल्लिभ्यां परिरम्भः स एव मण्डली वेष्टनं परस्परमपीडयत् स हेमनलिनीमृणालजातस्तज्जः हृदये शेत इति हृदयेशय कामः अधिकरणे शेतेरित्यच्प्रत्ययः । शयवास-वासिष्वकालादित्यलुक् । तस्य पाशः पाशात्मा बन्ध एवास्त स्थित इत्युत्प्रेक्षा ॥ ९२ ॥

वल्लभेनेति । वल्लभेन प्रियेण परिरभ्याश्लिष्य पीडितौ मण्डलीकृतौ कुचौ एव केवलौ मदनयोरतिकामयो रुपाश्रये अवष्टम्भविशेषे आसन्दि-मञ्चक. खट्वोपाश्रयो मसूरकस्तरण इति यादवः । तत्र प्रेयस्याः हृदि वक्षसि हंसे वर्तुले मिलिते सङ्गते उपधाने उपबर्हे उपधानं तूपबर्हमित्यमरः । तयोर्भावस्तत्ता तां गण्डोपधानतां अवापतुरित्युत्प्रेक्षा ॥ ९३ ॥

तत्प्रियोरुयुगलं नलार्पितैः पाणिजस्य मृदुभिः पदैर्बभौ।
उत्प्रशस्ति रतिकामयोर्जयस्तम्भयुग्ममिव शातकुम्भजम् ॥९४॥
बह्वमानि विधिनापि तावकं नाभिमूरुयुगमन्तराङ्कम्।
स व्यधादधिकवर्णकैरिदं काञ्चनैर्यदिति तां पुराह सः ॥९५॥
पीडनाय मृदुनी विगाह्य तौ कान्तपाणिनलिने स्पृहावती।
तत्कुचौ कलशपीननिष्ठुरौ हारहासविहृते वितेनतुः ॥ ९६ ॥
या कुरङ्गमदकुङ्कुमाञ्चितौ नीललोहितरुचौ वधूकुचौ।
स प्रियोरसि तयोः स्वयम्भुवोराचचार नखकिंशुकार्चनम्॥९७

तदिति। तत्तादृश प्रियायाः ऊरुयुगलं नलेनार्पितैर्न्यस्तैः मृदुभिः अनतिक्षतैः पाणिजस्य नखस्य पदैश्चिह्नै रुन्नता प्रशस्तिर्यस्य तदुत्प्रशस्ति शातकुम्भजं हिरण्मयं रतिकामयो जयस्तम्भयुग्ममिव बभौ इत्युत्प्रेक्षा। ९४।

बह्विति। हे प्रिये! नाभिमूरुयुगं चान्तरा तन्मध्यवर्त्ति अन्तरान्तरेण युक्ते इति द्वितीया अन्तराशब्दो मध्यमाधेयप्रधानमाचष्ट इति काशिका। तावकमङ्कं वराङ्गं विधिना वेधसापि बह्वमानि बहु मत इतः यस्मादिदमङ्कमधिकवर्णकैरुत्कृष्टवर्णैः काञ्चनैः कृत्वा व्यधात् निर्मितं तां प्रियां स नलः पुराह उक्तवान् पुरा लड् चस्मे इति भूते लट्॥९५॥

पीडनायेति। कलशवत्पीनौ निष्ठरौ कठिनौ च तस्याः कुचौ कर्त्तारौ मृदुनी कोमले तथापि तौ तादृक्कुचौ विगाह्य प्राप्य पीडनाय पीडनं कर्त्तु स्पृहयती व्याप्रियमाणेत्यर्थः। कान्तस्य पाणिनलिने करकमले कर्मणी हारएव हासस्तेन विहृते तिरस्कृते वितेनतुश्चक्रतुः द्वयस्यार्थप्राप्ताः परिहासास्पदमभवतीति भावः॥९६॥

येति। कुरङ्गमदकुङ्कुमाभ्यां कस्तूरिकाकश्मीराभ्यां अञ्चितौ लेपितौ अतएव नीला च सा लोहिता च वर्णोवर्णेनेति तत्पुरुषसमासः। सा रुच्ययो स्तौ नीलः कण्ठे लोहितः केशेष्विति नीललोहितः तस्य इति

अम्बुधेः कियदनुत्थितं विधुं स्वानुबिम्बमिलितं व्यडम्बयत् ।
चुम्बदम्बुजमुखीमुखं तदा नैषधस्य वदनेन्दुमण्डलम् ॥९८॥

पूगभोगबहुताकषायितैर्वासितैरुदयभास्करेण तौ ।
चक्रतुर्निधुवनेऽधरामृतैस्तत्र साधु मधुपानविभ्रमम् ॥ ९९ ॥

आह नाथवदनस्य चुम्बतः सास्म शीतकरतामनन्तरम् ।
सीत्कृतानि सुदती वितन्वती सत्त्वदत्तपृथुवेपथुस्तदा ॥ १०० ॥

रुग्णयोः स्तौ बधूकुचौ प्रियायाः उरसि स्वयम्भुवोः स्वत उत्पन्नयोः ईश्वरमूर्त्योश्च तयोः कुचयोः स नलो नखैः नखक्षतैरेव किंशुकैः पलाशकुसुमैरर्चनमाचचारेति गम्योत्प्रेक्षा ॥ ९७ ॥

अम्बुधेरिति । तस्याः अम्बुजमुख्याः प्रेयस्याः मुखं चुम्बत् पिबत् नैषधस्य वदनेन्दुमण्डलं तदा अम्बुधेः कियत् किञ्चिदनुत्थितम् ओषन्न्यून मुदितं स्वानुबिम्बेन स्वप्रतिबिम्बेन मिलितं यक्तं विधुं इन्दुं व्यडम्बयनुचकार तदा मुखयोर्मिथः संश्लेषात् कात्स्न्येनादृश्यमानत्वादिदमुपमीतम् ॥ ९८ ॥

पूगेति । तौ कामिनौ तत्र निधुवने रते व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतं पूगः क्रमुक इत्यमरः । पूगभोगः क्रमुकभक्षणं ताम्बूलचर्वणमिति यावत् । तस्य बहुतया बाहुल्येन कषायितैः सञ्जातकषायरसैः उदयभास्करेण कर्पूरविशेषेण वासितैः सुरभितैः अधरामृतैः साधु मधुपानस्य विभ्रममिव विभ्रमं लीलाञ्चक्रतुरिति सादृश्याक्षेपान्निदर्शनालङ्कारः ॥ ९९ ॥

आहेति । तदा अधरपानकाले सीत्कृतानि वितन्वती वेदनया सीत्कारान् कुर्वती सत्त्वेन दत्तः सर्वगुणक्षतः पृथुर्न पृथुः कम्पाख्यः सात्त्विको यस्याः सा सुदती भैमी चुम्बतः स्वयं पिबतो नाथवदनस्य प्रियमुखस्य शीतकरतां शीतांशुत्वं शीतकारित्वञ्च क्रमो हेलित्यादिना तात्कालिके टप्रत्ययः । अनन्तरं मयङ्क्मेवाह स्म ज्ञापयामासेत्यर्थः । अन्यथा कथं सीत्कारादिकार्यमिति भावः ॥ १०० ॥

चुम्बनाय कलितप्रियाकुचं वीरसेनसुतवक्त्रमण्डलम् ।
प्राप भर्तुममृतैः सुधांशुना सक्तहाटकघटेन मित्रताम् ॥१०१॥
वीक्ष्य वीक्ष्य पुनरैक्षि सामुना पर्य्यरम्भि परिरभ्य चासकृत् ।
चुम्बिता पुनरचुम्बि चादरात्तृप्तिराप न कथञ्च नापि च ॥१०२॥
छिन्नमप्यतनु हारमण्डलं मुग्धया सुरतलास्यकेलिभिः ।
न व्यतर्कि सुदृशा चिरानपि स्वेदबिन्दुकितवक्षसा हृदि ॥१०३॥
यत्तदीयहृदि हारमौक्तिकैरासि तत्र गुण एव कारणम् ।
अन्यथा कथममुत्र वर्तितुं तैरशाकि न तदा गुणच्युतैः ॥१०४॥

चुम्बनायेति । चुम्बनायाधरामृतपानाय कलितोहस्तगृहीतः प्रियाकुचोयेन तन्नलमुखबिम्बं कर्त्तृ, अमृतैः भर्त्तुं पूरयितुं सक्तो हस्तगतो हाटकस्य कनकस्य घटो यस्य तेन सुधांशुना चन्द्रेण मित्रतां सदृशतां प्राप अमृतसम्भरणाय कनककलशहस्त आगतः साक्षादमृतांशुरिवेत्युत्प्रेक्षयामृतकरत्वं व्यज्यत इति अलङ्कारेण वस्तुध्वनिः ॥ १०१ ॥

वीक्ष्येति । अमुना नलेन सा प्रिया वीक्ष्य वीक्ष्य मुहुर्वीक्ष्यापि पुनरैक्षि ईक्षिता सा असकृत्परिरभ्यापि पुनः पर्यरम्भि परिरब्धा रभेर्णिच्युपधाया नुमागमः । सा असकृत् चुम्बिताप्यदरात् पुनरचुम्बि चुम्बिता कथञ्चनापि तृप्तिं नापि रागातिरेकादिति भावः सर्वत्र कर्मणि लङ् । १०२ ॥

छिन्नमिति । सुरतलास्येन नाट्येन या केलिभिः छिन्नमप्यतनु महत् हारमण्डलं मुक्ताकलापः स्वेदबिन्दव एव बिन्दुकाः स्वार्थे कः ते अस्य सञ्जाताः स्वेदबिन्दुकितं तारकादित्वादितच् । तद्वक्षो यस्या तया मुग्धया सुदृशा भैम्या चिरादपि हृदि चित्ते न व्यतर्कि न व्यभावि स्वेदबिन्दुः हारभ्रमादिति भावः अतएव भ्रान्तिमदलङ्कारः ॥ १०३ ॥

यदिति । तदीये भैमीसम्बन्धिनि हृदि वक्षसि हारमौक्तिकैरासि स्थितमिति यत् आसेर्भावे लङ् । तत्र स्थितौ गुण

एकवृत्तिरपि मौक्तिकावलिश्छिन्नहारविततौ तदा तयोः ।
छाययान्यहृदयेऽपि भूषणा श्रान्तिवारिभरभाविते ऽभवत् ॥१०७॥
वामपादतललुप्तमन्मथश्रीमदेन सुखवीचिणाऽनिशम् ।
भुज्यमाननवयौवनामुना पारसीमनि चचार सा मुदाम् ॥१०८॥
आन्तरानपि तदङ्गसङ्गमैस्तर्पितानवयवानमन्यत ।
नेत्रयोरमृतसारपारणां तद्विलोकनमचिन्तयन्नलः ॥ १०९ ॥

सत्वं कान्त्यादिष्वेव कारणम् अन्यथा गुणच्युतैः गुणभ्रष्टैर्हार-मौक्तिकै स्तदा तस्मिन् समये अमुत्राम्मिन्वक्षसि वर्त्तितुं कथं नाशाकि न शक्तञ्च ततोगुणएवात्रकारणं अन्यथापतनप्रसङ्गादनुपादेयत्वाच्चेति भाव ॥ १०६ ॥

एकेति। तदा तत्काले तयोरुभयोर्मध्ये एकस्मिन्नलएव वृत्ति-र्यस्याः सापि मौक्तिकावलिः छिन्ना हारवितति र्मुक्ताकलापो यस्य त-स्मिन् पुंस्त्वात् पुंवद्भाव। श्रान्तिवारिभरेण स्वेदपूरेण भाविते प्लाविते ऽन्यस्याः भैम्याः हृदये सर्वनाम्नो वृत्तिमात्रे पूर्ववदस्य पुंवद्भावः। छायया प्रतिबिम्बेन विभूषणमभवत् अत्रैकस्यैव हारस्योभयत्र भूषणत्वेना-सम्बन्धेऽपि सम्बन्धोक्ते रतिशयोक्ति रलङ्कारः ॥ १०७ ॥

वामेति। वामपादस्य तलेनाधःप्रदेशेन लुप्तीकृतो मन्मथस्य श्रियो मदः सौन्दर्यदर्पो येन तेनानिशं सुखवीचिणा अनाकृष्टदृष्टिना अमुना नलेन भुज्यमानं नवयौवनं यस्याः सा भैमी मुदामानन्दानां पा-रसीमनि चचार परमानन्दमापेत्यर्थः ॥ १०८ ॥

आन्तरानिति। नलः तस्याः अङ्गसङ्गमैर्बाह्यावयवसम्पर्कैरान्तरा-नवयवांस्तर्पितानाप्यायितानमन्यत तस्याः विलोकनं साक्षात्कारं नेत्रयोः स्वाक्ष्णोरमृतसारस्य पारणाममृतविशेषस्वादमचिन्तयदभावयत् ॥ १०९ ॥

तत्क्षणावहितभावभावितद्वादशात्ममितदीधितिस्थितिः ।
स्वां प्रियानभिमतक्षणोदयां भावलाभलघुतां नुनोद सः ॥११३॥

स्वेन भावभजने स तु प्रियां बाहुमूलकुचनाभिचुम्बनैः ।
निर्ममे रतरहःसमापनागर्वसारसमसंविभागिनीम् ॥ ११४ ॥

विश्लथैरवयवैर्निमीलया लोमभिर्द्रुतमितैर्विनिद्रताम् ।
सूचितं श्वसितसीत्कृतैश्च तौ भावमक्रमजमध्यगच्छताम् ॥११५॥

---

तदिति । स नलस्तस्मिन् क्षणे अवहितभावेनावहितत्वेन भाविता ध्याता द्वादशात्ममितदीधित्योः सूर्याचन्द्रमसोः स्थितिर्येन सः सन् आत्मनोऽनभिमतक्षणे असंभूतकाले उदयः प्रादुर्भावो यस्या स्वां भावलाभस्य च्युतिसुखप्राप्तेर्लघुतामाशुभावितां नुनोद निवारयामास तत्काले हृदि सोमार्कधारणा सिद्धिरिति रतिरहस्ये अत्र पुरुषव शक्याधिरयोग्या योषितो बहुशक्तिप्रयुक्तरसाभावशङ्कापि समूलकाषंकषितेति द्रष्टव्यम् ॥ ११३ ॥

स्वेनेति । किन्तु स नलो भावभजने स्वस्य च्युतिसुखे प्रसक्ते प्रियां बाहुमूलयोः कुचयोर्नाभौ च चुम्बनरूपायैः तेन स्वेन सह रतरहसः सुरतरहस्यस्य समापनागर्वसारे च्युतिसुखोत्कर्षे समसम्विभागिनीं निर्ममे समसंविभागिनीमुक्ते एतेन तयोर्विप्रलम्भवत् सम्भोगस्यापि समान-शक्तित्वमुक्तं भवतीत्यनुसन्धेयम् ॥ ११४ ॥

विश्लथैरिति । तौ द्वौ विश्लथैः शिथिलप्रायैरवयवैः निमीलया निमीलनेन भिदादित्वादङ् । द्रुतं झटिति विनिद्रतामितैः विकासं प्राप्तैः लोमभिः श्वसितैः निश्वासैः सीत्कारैश्च सूचितं ज्ञापितं स्रस्तता वपुषि मीलनं दृशौ मूर्च्छना चरति लाभलक्षणम् । स्नेपयन् स्वजघनं घनं सुख-स्वीकृतानि गलगर्जितानि चेत्युक्तत्वादिति भावः । अक्रमं युगपज्जातमक्रम-जन्मात्म्यानसुखमध्यगच्छतां प्राप्तवन्तौ एवञ्चोभयोः समरागता सम्भ-वति अन्यथा पूर्वच्युतस्योत्तरच्युतिं विनि वैराग्येन तद्भङ्गप्रसङ्ग इति भावः ॥ ११५ ॥

आस्त भावमधिगच्छतोः स्तयोः सम्मदेषु करजप्रसर्पणा ।
फाणितेषु मरिचावचूर्णना सा स्फुटं कटुरपि स्पृहावहा ॥११६॥
अर्द्धमीलितविलोलतारके सा दृशौ निधुवनक्लमालसा ।
यन्मुहूर्त्तमवहन्न तत् पुनस्तृप्तिरास्त दयितस्य पश्यतः ॥ ११७॥
तत्क्षमस्तमदिदीपत क्षणं तालवृन्तचलनाय नायकम् ।
तद्विधाधिभवदैवतं प्रिया वेधसोऽपि विदधाति चापलम् ॥११८॥

आस्तेति । भावं च्युतिसुखमधिगच्छतोस्तयोः सम्मदेष्वानन्दलाभेषु करजप्रसर्पणा नखक्षतकरणं सा आस्त स्थिता सा नखक्षतक्रिया कटुस्तीक्ष्णापि कटुरसापि च रसे कटुः कटु कार्य्ये त्रिषु मत्सरतीक्ष्णयोः इत्यमरः । स्पृहावहा रुचिकरी फाणितेषु विकारेषु मत्स्यण्डी फाणितं खण्डविकारे इत्यमरः । मरिचावचूर्णना चूर्णैरवध्वंसना तद्घूर्णनेव इत्यर्थः । स्फुटं सत्यापादि गयन्तात् गयास्त्रये इच । येयं सम्मदेषु नखार्पणा सा फाणितेषु मरिचार्पणा तद्वदिष्टैवाभूदित्यर्थः । अत्र वाक्यार्थयोः सादृश्ययोगेन सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धलक्षणो वाक्यार्थवृत्तिनिदर्शनाभेदोऽलङ्कारः ॥ ११६ ॥

अर्द्धेति । निधुवनक्लमालसा सुरतश्रान्तिमन्थरा सा प्रिया अर्द्धमीलिते इव विलोलतारके च तारकाक्ष्णः कनीनिकेत्यमरः । तादृशौ दृशौ यन्मुहूर्त्तं मात्रकालमवहत् तदवस्थे दृशावित्यर्थः । पश्यतो दयितस्य पुनस्तृप्तिर्नास्त नाभूदित्यर्थः ॥ ११७ ॥

तदिति । तत्सा क्षमस्तं नायकं नलं क्षणं तालवृन्तचलनाय व्यजनचालनाय व्यजनं तालवृन्तकमित्यमरः । अदिदीपत् दीपयति स्म प्रावर्त्तयदित्यर्थः । तद्विधाधिभवदैवतं स्मराधिदैवतं अधिकाद्धेत्यर्थः तद्विधा तादृशी तत्प्रकारा प्रिया सुरतश्रान्तिचेष्टा वेधसोऽपि चापलं विदधाति जनयति किमुतान्यस्येतिभावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ११८ ॥

स्वेदबिन्दुकितनासिकाशिखं तन्मुखं सुखयति स्म नैषधम् ।
प्रोषिताधरशयालुयावकं तद्विलुप्तपत्रकं कपोलयोः ॥ ११९ ॥

ह्रीणमेव पृथु सस्मरं कियत् क्लान्तमेव बहु निर्वृतं मनाक् ।
कान्तचेतसि तदीयमाननं तत्तदालभत लक्षमादरात् ॥ १२० ॥

स्वेदवारिपरिपूरितं प्रियारोमकूपनिवहं यथा यथा ।
नैषधस्य दृगपात् तथा तथा चित्रमापदपतृष्णतां न सा ॥ १२१ ॥

वान्तमाल्यकचहस्तसंयमन्यस्तहस्तयुगया स्फुटीकृतम् ।
बाहुमूलमनया तदुज्ज्वलं वीक्ष्य सौख्यजलधौ ममज्ज सः ॥ १२२ ॥

स्वेदेति । स्वेदबिन्दुकिता सञ्जातस्वेदबिन्दुका नासिका शिखा नासाग्रं यस्य तत्प्रोषिताधरशयालुयावकं पानान्निवृत्तौष्ठगतारक्तक कपोलयोर्विलुप्ततिलकं विलुप्तकपोलतमालपत्रं तमालपत्रं तिलकचित्रकाणि विशेषक मित्यमरः । तस्याः मुखं नैषधं सुखयति स्म ॥ ११९ ॥

ह्रीणमिति । पृथु भूयिष्ठं ह्रीणं लज्जितमेव कियत्सस्मरं बहु-क्लान्तमेव मनागेव निर्वृतं सुखितं तत्तदीयम् आननं प्रियामुखं तदा तत्-काले कान्तचेतसि आदरादासक्तेर्लक्षं लक्षसङ्ख्यामलभत बहुमत समभूदि-त्यर्थः । सर्वावस्थामनोहरं तन्मुखमिति भावः ॥ १२० ॥

स्वेदेति । नैषधस्य सा दृक्दृष्टिः स्वेदवारिणा परिपूरितं प्रियाया रोमकूपानां निवहं समूहं यथा यथा अपात् पिबति स्म पिबतेर्लुङि गातिस्थेत्यादिना सिचो लुक् । तथा तथा अपतृष्णतां नागत् वितृष्णा नाभूदित्यर्थः । चित्रं बहुकूपं सम्भृतोदकपानेऽपि तृष्णा नापैति विरुद्ध मित्यर्थः । लोकोत्तरवस्तुदर्शने तृष्णा बढ़त एवेति विरोधाभासो-ऽलङ्कारः ॥ १२१ ॥

वान्तेति । स नलः वान्तमुद्गीर्णं माल्यं येन तस्य कचहस्तस्य केशपाशस्य संयमे बन्धने न्यस्तं विन्यस्तं हस्तयुगं यया तया अनया निबद्ध स्फुटीकृतं उज्ज्वलं बाहुमूलं वीक्ष्य सौख्यजलधावानन्दसागरे ममज्ज ॥ १२२ ॥

सूनसायकनिदेशविभ्रमैरप्रतीततरवेदनोदयम्।
दन्तदंशमधरेऽधिगामुका सास्पृशन्मृदु चमच्चकार च॥१२७॥
वीक्ष्य वीक्ष्य करजस्य विभ्रमं प्रेयसार्जितमुरोजयोरियम्।
कान्तमैक्षत हसस्पृशं कियत् कोपसङ्कुचितलोचनाञ्चला॥१२८॥
रोषभूषितमुखीमिव प्रियां वीक्ष्य भीतिदरकम्पिताधरम्।
तां जगाद स न वेद्मि तन्वि! तं ब्रूहि शास्मि तव कोपरोपणम्॥१२९॥
रोषकुङ्कुमविलेपनात्मनागन्वगाचि कृशतन्ववाचि ते।
मृदयुक्तसमयैव रञ्जना मानने विधुविधेयमानने॥१३०॥

सूनेति। सूनसायकस्य कामस्य निदेशविभ्रमैराज्ञाविलासैः प्रतीततरो वेदनोदयो यस्मिंस्तं मदनपारवश्यादुत्पद्यमानदुःखमित्यर्थः। अधरे दन्तदंशं अधिगामुका प्राप्ता लषपतेत्यादिना उकञ् नलोकेत्यादिना षष्ठीप्रतिषेधः। सा भैमी कियत्किञ्चिच्चमत्कृता व्यथिता सती मृदु मन्दमस्पृशत् करतलेन दंशं परामृशदित्यर्थः॥१२७॥

वीक्ष्येति। इयं भैमी प्रेयसा प्रियतमेन उरोजयोः कुचयोरर्जितं करजस्य विभ्रमं नखक्षतं वीक्ष्य वीक्ष्य दर्शं दर्शं कियत्किञ्चित्कोपेन सङ्कुचिता मुकुलिता विलोचनाञ्चलाः कटाक्षाः यस्याः सा सती हसं स्पृशतीति तत्स्पृशं हसन्तं कान्तमैक्षत॥१२८॥

रोषेति। रोषेण भूषितमुखीमिव स्थितां प्रियां वीक्ष्य स नलो भीत्या दरकम्पिताधरमीषच्चलदधरं यथा तथा तां जगाद किमिति हे तन्वि! तव कोपरोपणं कोपजनकमपराधिनं न वेद्मि तं ब्रूहि शास्मि दण्डयामि॥१२९॥

रोषेति। ननु कृशतनु! कृशाङ्गि! सम्बुद्धौ नदीह्रस्वः। अवाच्यवचने अपशब्दश्रुतेः किन्तु। अवाचि वाचंयमे विधोरपि विधेया मानना पूजा यस्य तस्मिन्विधोरपि पूज्ये ते तवानने अयुक्तसमया अप्राप्तकाला रोषएव

क्षिप्रमस्तु रुजा नखार्दिजाः तावकीरमृतशीकरं किरत्।
एतदर्थमिदमर्जितं मया कण्ठचुम्बि मणिदाम कामदम्॥३१॥
स्वापराधमलुपत् पयोधरे मत्करः सुरधनुःकरस्तव।
सेवया व्यजनचालनाभुवा भूय एव चरणौ करोतु वा॥३२॥
आननस्य मम चेदनौचिती निर्दयं दशनदंशदायिनः।
प्रोष्यते सुदति! वैरमस्य तत् किं त्वया वद विदश्य नाधरम्॥३३

कुङ्कुमं तस्य विलेपनात् नागीपदस्त्वना भाव्देव निष्कलङ्के मुखे रोपकलङ्को माभूदित्यर्थः॥३०॥

क्षिप्रमिति। हे प्रिये! कण्ठचुम्बि कण्ठसङ्गि कामदमभीष्टदं मणिदाम मणिमालिका नखार्दिजाः नखदन्तक्षतादिजन्याः तावकी-स्त्वदीयाः रुजाः पीडाः भिदादित्वादङ्प्रत्ययः। क्षिप्रमस्तु निरस्य-तु इदं मणिदाम मया एतदर्थम् एतत्पीडानिरासार्थमेवार्जितं सम्पा-दितम्॥३१॥

स्वेति। हे प्रिये! तव पयोधरे स्तने मेघे च स्त्री स्तनाब्दौ पयो-धरावित्यमरः। सुरधनुर्नखाङ्कविशेष इन्द्रधनुश्च करोतीति तत्करः। दिवाविभादिनाटप्रत्ययः। मत्करो व्यजनस्य चालनचालनया धूननेन भवतीति तद्भुवा सेवया स्वापराधमलुम्पत् नुनोद लुम्पेर्लङीत्वात् चुरादेरिदेशः। भूयएव पुनरपि चरणौ करोतु सेवतां वा सामान्येन विशेष लक्षणा॥३२॥

आननस्येति। हे प्रिये! निर्दयं यथा तथा दशनदंश ददातीति तद्दायिनो दत्तवतो ममाननस्य मत्कस्यानौचिती अनौचित्यं चेत्तर्हि हे सुदति! सुदशने! त्वया अधरं विदश्य अस्याननस्य वैरं किं न प्रोष्यते न निर्यात्यते यद्दशनदंशस्य प्रतिदंशनमेव प्रतीकार इति भावः॥३३॥

दीपलोपमफलं व्यधत्त यस्तेपटाहृतिषु मच्छिखामणिः ।
नो तदागसि परं समर्थना सोऽयमस्तु पदपातुकस्तव ॥ १३४ ॥
इत्थमुक्तिमुपहृत्य कोमलां तत्पचुम्बिचिकुरश्चकार सः ।
आत्ममौलिमणिकान्तिभङ्गिनीं तत्पदारुणसरोजसङ्गिनीं ॥ १३५ ॥
तत्पदाग्रिमनखानुबिम्बनैः स्वैः समेत्य समतामियाय सः ।
रुद्रभूमविजिगीषया रतिस्वामिनोपदशमूर्त्तिताभृता ॥ १३६ ॥
आस्व्यतैव कुरु कोपलोपनं पश्य नश्यति कृशा सखीनिशा ।
एवमेव न निशान्तरे वरं रोषशेषमनुरोत्स्यसि क्षणम् ॥ १३७ ॥

दीपेति । हे प्रिये ! पटाहृतिषु वस्त्राकर्षणेषु मच्छिखामणिः सो तव कवरी दीपलोपं दीपनिर्वापणमफलं यश्चकार निष्फलीचकार तदागसि तस्मिन्नपराधे समर्थना समाधानं नो परं नास्त्येव किन्तु सोऽयं शिखामणिः तव पदपातुकः पादपाती लपपतेति उकञ् अस्तु प्रणिपात एवात्र प्रतीकारः ॥ १३४ ॥

इत्थमिति । स नलः इत्थमुक्तप्रकारेण कोमलां ललितपदां उक्तिं वाणीं उपहृत्य उपायनीकृत्य तत्पचुम्बिनः शय्यावलम्बिनश्चिकुराः स्वकेशा यस्य सः, आत्ममौलिमणिकान्तिरेव भङ्गिनी तरङ्गिणी तत्पदे भैमीचरणे एव अरुणसरोजे कोकनदे तत्सङ्गिनीं तद्युक्तां चकार नमश्चकारेत्यर्थः । नद्योऽपि रक्तनीलकमलादियुक्ता भवन्तीति प्रसिद्धम् ॥ १३५ ॥

तदिति । सः नलः स्वैरखिलेषु पदयोः दशसु नखेषु अनुबिम्बनैः प्रतिबिम्बैः समेत्य दशभिर्मिलित्वा रुद्रेभ्य एकादशभ्यो भीतेर्विजिगीषया परिजिहीर्षया उप समीपे दशानामुपदशाः एकादशेत्यर्थः । सङ्ख्या व्ययेत्यादिना बहुव्रीहौ समासान्तो डच् टिलोपः । उपदशा मूर्तयो यस्य तस्य भावस्तत्ता तद्भृता एकादशमूर्तिभृता रतिस्वामिना कामेन समतां सादृश्यं मियाय एकादशरुद्रजिगीषया एकादशमूर्तिधारी साक्षात्काम इवालक्ष्यतेत्युत्प्रेक्षा ॥ १३६ ॥

आस्व्यतैव इति । हे प्रिये ! कोपस्य लोपनं निवर्तनं कुरु मा कुप्यस्वेत्यर्थः ।

साऽथ नाथमनयत्कृतार्थतां पाणिगोपितनिजाङ्घ्रिपङ्कजा ।
तत्प्रणामधुतमानमाननं स्मेरमेव सुदती वितन्वती ॥ १३८ ॥

तौ मिथो रतिरसायनात् पुनः सम्बुभुक्षुमनसौ बभूवतुः ।
चक्षमे न तु तयोर्मनोरथं दुर्जनीरजनिरल्पजीविता ॥ १३९ ॥

स्वप्नमात्तशयनीययोस्तयोः स्वैरमाख्यत वचः प्रियां प्रियः ।
तत्सवैरधरदानपानजैः सान्तरायपदमन्तरान्तरा ॥ १४० ॥

मध्येऽवसन्नस्य निशा उत्तरायणरात्रिः क्षपा अल्पा यस्य नश्यति निर्याति किन्तु निशान्तरे हेमन्तरात्रिरिव जाता तत्रापि न चिरमिति भावः । दोषेण मनुरोऽस्यसि अनुसर्तुमर्हसि वरं किञ्चित् प्रियमितीत्यमेव नलः व्याख्यत आह स्म चक्षिङो लुङि ख्याञादेशे तङ् अस्यति वक्ति ख्यातिभ्योऽङ् इति चोरङादेशः ॥ १३७ ॥

अथ प्रियप्रणामानन्तरं पाणिभ्यां गोपिते नखक्षतः स्पर्शभयाच्छादिते निजाङ्घ्रिपङ्कजे यया सा तस्य प्रणामेन धुतमानं निरस्तकोपम् अतएवाननं स्मेरं सस्मितमेव वितन्वती सा सुदती भैमी नाथं कृतार्थतां पूर्णकाम मनयत् ॥ १३८ ॥

ताविति । तौ द्वौ मिथो रतिरन्योन्यानुरागः सैव रसायनमौषधविशेषः यज्जराव्याधिविध्वंसि भेषजं तद्रसायनमिति वाग्भटः । तस्मात्प्रहृष्टहेतोः पुनः सम्बुभुक्षुणी सम्भोक्तुमिच्छुनी मनसी ययोः सम्भोक्तुकामौ बभूवतुः किन्तु दुर्जनी दुष्टजना परशुभद्वेषित्वादिति भावः । अल्पजीविता गतरात्रीणामतिह्रासादचिरस्थायिनी रजनिः तयोर्मनोरथं न चक्षमे न सेहे दुर्जनः परशुभासहोऽल्पजीवी चेति युक्तमिति भावः । अल्पावशिष्टत्वात् निद्रासम्भोगयोरपर्याप्तेति तात्पर्यम् ॥ १३९ ॥

स्वप्नमिति । स्वप्नं निद्रातुम् आत्तशयनीययोः प्राप्ततल्पयो स्तयोः प्रिययोः मध्ये प्रियः प्रियामधरयोरन्योन्यार्पणयोरन्योन्यदान

देवदूत्यमुपगत्य निर्दयं धर्मभीतिकृततादृशागसः ।
अस्तु सेयमपराधमार्जना जीवितावधि नलस्य वश्यता ॥ १४१ ॥
स क्षणः सुमुखि ! यत्त्वदीक्षणं तच्च राज्यमुरु येन रज्यसि ।
तन्नलस्य सुधयाऽभिषेचनं यत्त्वदङ्गपरिरम्भविभ्रमः ॥ १४२ ॥
शर्म किं हृदि हरेः प्रियार्पणं किं शिवार्द्धघटनं शिवस्य वा ।
कामये तव महेषु तन्वि ! तं नन्वयं सारिदुदन्वदन्वयम् ॥ १४३ ॥

पानाभ्यां जातैः सञ्जैरुत्सवैरानन्दैरन्तरान्तरा मध्ये मध्ये सान्तरायाणि सप्रतिबन्धानि विच्छिद्य विच्छिद्य प्रयोज्यमानानि पदानि पदाख्यशब्दा यस्मिं स्तद्वचो व क्य स्वैरं यथेच्छम् अस्यतावीवत् ॥ १४ ॥

किम् तद्वाक्य तदेव दर्शयति देवेत्यादि। हे प्रिये ! देवदूत्यं दूतकृत्य मुपगम्य निर्दयं यथा तथा धर्मभीत्या धर्मलोपभीत्या कृत तादृक् तथा प्रतिकूलाचरणरूपमागोऽपराधो येन तस्यापराद्धुर्नलस्य मम सम्बन्धिनी सेयं जीवितावधि जीवितान्तं यथा तथा वश्यता वशवर्तिता अगाद्गत इति यत्सत्य । अपराधस्य मार्जना परीहारः अस्तु यावज्जीव दास्यमेवास्य प्रतीकारं भवत्वित्यर्थः ॥ १४१ ॥

स इति। हे सुमुखि ! नलस्य स क्षणः उत्सवः क्षण उद्धर्षो मह उद्धवस्तूत्सवः। यत्त्वदीक्षणं त्वद्दर्शनम् उरु महद्राज्यञ्च तत् येन त्वं रज्यसि रक्ताभवसि कर्मणि रञ्जीत्यादिना श्यन् परस्मैपदञ्च। तदेव सुधया अभिषेचनं सुधाभिषिक्तस्य यत्त्वदङ्गस्य परिरम्भविभ्रम आलिङ्गनलीला तत्सम्बन्ध विना मे न किञ्चिद्रोचत इत्यर्थः ॥ १४२ ॥

शर्मेति। हरेर्विष्णोः हृदि वक्षसि प्रियार्पणं लक्ष्मीधारणं किं शर्म शिवस्य शिवाया गौर्याः अर्द्धे अर्द्धाङ्गे घटनं किं शर्म नेति भावः। किन्तु ननु तन्वि ! कृशाङ्गि ! इदानीं तव मया सह तं प्रसिद्धं सारिदुदन्वतो सरित्समुद्रयो रन्वय मननमय सहङ्गारं कामये मिथुनान्तर सम्पदवत् मिथ्यसङ्गमे भेदानवभासादिति भावः ॥१४३॥

दीयतां मयि हठा ममेति धीर्वक्तुमेवमवकाश एव कः ।
यद्विधूय तृणवद्ध्रुवस्मृतिं क्रीतवत्यसि दयापणेन माम् ॥१४४॥

शृण्वता निभृतमालिभिर्भवद्वाग्विलासमसकृन्मया किल ।
मोघराघवविसर्ज्यजानकी श्राविणी भयचलासि वीक्षिता ॥१४५॥

कुम्भपत्रविनिमीलितक्षुपात् कच्छपस्य धृतचापलात्पलात् ।
त्वन्मुखीषु सरटाच्छिरोधुतः स्वं भियोऽभिदधतीषु वैभवम् ॥१४६॥

त्वं मदीयविरहान्मया निजां भीतिमीरितवती रहःश्रुता ।
नोज्झितास्मि भवतीं तदित्ययं व्याहरद्धरमसत्यकातरः ॥१४७॥

---

दीयतामिति। हे प्रिये! मयि विषये ममेति धीः ममत्वबुद्धिर्हठाद् दीयतां तथा दीयतामित्येवं वक्तुम् अवकाश एव कः यद्यस्माद्ध्रुवस्मृतिं मित्र तृणवद्विधूय निरस्य दयैव पणो मूल्यं तेन मां क्रीतवती स्वीकृतवत्यसि क्रीतदासोऽस्मीति भावः ॥१४४॥

शृण्वतेति। हे प्रिये! आलिभिः सखीभिः सह भवत्या वाग्विलासम् सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः. असकृदनेकशो निभृतं गूढं शृण्वता मया मोघं व्यर्थमेव राघवस्य विसर्ज्या त्याज्या जानकीं सीतां शृणोतीति तच्छ्राविणी अतएव भयेन चला कम्पा सती तादृशकालश्रवणेन भय तद्भीता वीक्षिता दृष्टासि किल ॥१४५॥

अथ युग्मेनाह कुम्भेत्यादि शुम्भेति कचित्पाठः। कुम्भिकुम्भिसदृशनाथौ वनितौ क्षुपेन सदृशेन पत्रेषु विनिमीलिति सङ्कुचति यस्मात्तस्मात् क्षुपात् ह्रस्वशाखाशिफः क्षुपः स्तम्ब। तथा धृतचापलात् कच्छपस्य पलात् मांसात् सरटात् कृकलासात् शिरोधुतः कम्पितशीर्षः सन् त्वन्मुखीषु स्वं वीर्यं भियो वैभवं भयातिरेकमभिदधतीषु वर्णयन्तीषु सतीषु ॥१४६॥

त्वमिति। त्वम् मदीयविरहान्निजां भीतिं रहो रहसि ईरितवती उक्तवती रहः श्रुता मया श्रुतासि किन्तु तत्सत्यवाक्यश्रवणात्कारणात् भवतीं नोज्झितास्मि न त्यक्ष्यामि इत्यसत्यकातरो

सङ्गमय्य विरहेऽस्मि जीविका यैव वामथ रताय तत्क्षणम् ।
हन्त दत्थ इति रुष्टयावयोर्निद्रयाद्य किमु नोपसद्यते ॥ १४८ ॥
ईदृशं निगदति प्रिये दृशौ सम्मदात् कियदियं न्यमीलयत् ।
प्रातरालपति कोकिले कलं जागरादिव निशः कुमुद्वती॥१४८॥
मिश्रितोरु मिलिताधरं मिथः स्वप्नवीक्षितपरस्परक्रियम् ।
तौ ततोऽनु परिरम्भसम्पुटे पीडनां विदधतौ निदद्रतुः ॥१४९॥
तद्यातायातरंहःस्खलनकलितरतिश्रान्तिनिःश्वासधाराऽ-
जस्रश्वासिश्वभावस्फुटकथितमिथः प्राणभेदव्युदासम् ।

ऽन्तरभीः अयं नलः वर व्याहरन् अपरित्यागवरं ददावित्यर्थः । उक्त-
मस्त्रीक्षणादिभयश्रवणात् त्वया विरहभीतासि तथापि न भेतव्यमित्यर्थः
॥ १४७ ॥

सङ्गमय्येति । यैवाहं विरहे विरहदशायां वां युवां सङ्गमय्य स्वप्न-
सङ्गतिसुखमनुभाव्य जीविका जीवितवत्यस्मि अथेदानीन्तस्याः मम क्षणो-
ऽवकाश उपरतिरूपस्तं रताय सुरतायैव तद्दत्थ. तंप्रपद्यथः । ददातेर्लटि-
थम् । हन्त इति रुष्टया क्रुद्धया किमु तदित्युत्प्रेक्षा । निद्रया अद्य आ-
वयो नोपसद्यते न सन्निरुध्यते सीदतेर्भावे लट् ॥ १४८ ॥

ईदृशमिति । प्रिये नले ईदृशमीदृग्वाक्य निगदति सति तदा प्रातरु-
पसि कोकिले कलं यथातथा आलपति सति निशः सम्बन्धिनो जागराद्रा-
त्रिजागराद्धेतोः कुमुद्वतीव इय भैमी सम्मदात्सन्तोषात्कियद्दृशौ न्यमी
लयन्मीलयति स्म भ्राजभासेत्यादिना विकल्पादुपधादीर्घोलघोरित्य-
भ्यासस्य दीर्घः ॥ १४९ ॥

मिश्रितेति । ततोऽहङ्निर्मज्जनानन्तरन्तौ मिथः परस्परं मिश्रिता
ऊरू यस्मिन् मीलितावधरौ यस्मिन् कर्मणि तत्स्वप्नवीक्षिताः वासनाव-
शात् स्वप्नदृष्टाः परस्परक्रियाः चुम्बनादिव्यापाराः यस्मिन् कर्मणि तद्यथा

बालावक्षोजपत्राङ्कुरकरिमकरीमुद्रितोर्वीन्द्रवक्ष-
श्चिह्नाख्यातैकभावोभयहृदयमगाद्द्वन्द्वमानन्दनिद्राम् ॥१५०॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मा मल्लदेवी च यम्।
यातोऽस्मिन् शिवशक्तिसिद्धिभगिनी सौभ्रात्रभव्ये महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गोऽयमष्टादशः ॥ १५१ ॥

तथा परिरम्भसमुद्रे आलिङ्गनपञ्जरे पीडनां मिथः संश्लेषं विदधतौ कुर्वन्तौ निदद्रतुः निद्रासुखमनुबभूवतुः ॥ १५० ॥

तदिति। यातायातानां गतागतानां रंहसो वेगस्य छलेन कलिताः कथिताः रतिश्रान्तियोभिर्वासां निश्वासधाराणां निश्वासपरम्पराणां अजस्रव्याप्तिप्रभावेनानवरतमेलनेन स्फुटं कथितो मिथः प्राणभेदस्य व्युदासेऽभावो यस्य तद्बालायाः प्रियायाः वक्षोजयोः कुचयोर्याः पत्राङ्कुरकरिमकर्यः ताभिर्मुद्रितेनोर्वीन्द्रस्य वक्षसैव चिह्नेन लिङ्गेनाख्यातो व्याख्यात एकभावः ऐक्यं ययोस्ते उभये हृदये यस्मिंस्तत् एकाधिकरण्या-देकमितिभावः। वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोगस्तूक्तं प्राक्। तद्द्वन्द्वं आनन्दनिद्रां सुखशायिकां अगात् ॥ १५१ ॥

श्रीहर्षमित्यादि। शिवशक्तिसिद्धिर्नाम काचित् स्वकृतिः सैव भगिनी तया सह सौभ्रात्रं सुभ्रातृत्वं युवादित्वादण् प्रत्ययः। भ्राता च भगिनी च भ्रातरौ भ्रातृभगिन्यौ भ्रातरावित्यमरः। भ्रातृपुत्रौ स्वसृदुहितृभ्यामित्येकशेषः। तेन सौभ्रात्रेण भव्ये एककर्तृकत्वादित्थं निर्देशः। अष्टौ च दश च अष्टादश द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योरित्यात्वम्। तेषां पूरणोऽष्टादशः तस्य पूरणे डट् इति डट्। गतमन्यत् ॥ १५२ ॥

इति पदवाक्यप्रमाणपारावारपारीण श्रीमहोपाध्यायकोलाचल-मल्लिनाथसूरिविरचितायां जीवातुसमाख्यायां नैषधव्याख्यायां अष्टादशः सर्गः ॥ १८ ॥

# नैषधचरितम् ।

## ऊनविंशः सर्गः ।

निशि दशमितामालिङ्गन्त्यां विबोधविधित्सुभि-
र्निषधवसुधामीनाङ्कस्य प्रियाङ्कमुपेयुषः ।
श्रुतिमधुपदस्रग्वैदग्धीविभावितभाविक-
स्फुटरसभराभ्यक्ता वैतालिकैर्जगिरे गिरः ॥ १ ॥

अथ काव्ये प्रयोगे वैचित्र्यस्याप्यलङ्कारत्वादस्मिन् सर्गे तद्वैचित्र्यमाश्रित्य प्रभातवर्णनमारभते । निशीति । निशि निशायां पद्दन्नादिना निशादेशः । दशमी वयोऽवस्थाविशेषोऽस्याः अस्तीति दशमी वृद्धा वर्षीयान् दशमीज्यायानित्यमरः । वयसि पूरणादितीण् प्रत्ययः । तस्या भावस्तत्ता दशमिता त्वतलोर्गुणवचनस्य पुंवद्भावः । तामालिङ्गन्त्यां प्राप्नुवन्त्यां प्रभातकल्पायां सत्यामित्यर्थः । प्रियाया अङ्कमुत्सङ्गमुपेयुषः प्राप्तस्य निषधवसुधामीनाङ्कस्य निषधदेशमन्मथस्य नलस्य विबोधविधित्सुभिः विधातुमिच्छुभिर्गम्यादिपाठात् द्वितीया समासः । वैतालिकैर्बोधकरैर्वन्दिभिः वैतालिका बोधकरा इत्यमरः । श्रुतिमधुपदस्रजां श्रवणमधुपदपङ्क्तीनां वैदग्धी यद्रचनाचातुर्यं कौशिक्यादिवृत्तिसम्पत्तिः तया विभाविताः व्यञ्जिताः भावाः यस्य सन्तीति भाविकः रसबोधकविभावादिचतुर्विधविभाववान् मत्वर्थीयष्ठन् प्रत्ययः । अत एव स्फुटोऽभिव्यक्तः स्वादुत्वं प्राप्त इत्यर्थः । एवं विशेषणविशेषेषु रसेन शृङ्गारादिना भरमभ्यक्ताः रसभरिता इत्यर्थः । गिरो गीः तत्राद्यो वक्ष्यमाणाः जगिरे गीयन्ते स्म गायतेः कर्मणि लिट् ।

जय जय महाराज! प्राभातिकीं सुषमामिमाम्
सफलयतमां दानादक्ष्णोर्दरालसपक्ष्मणोः।
प्रथमशकुनं शय्योत्थायं तवास्तु विदर्भजा
प्रियजनमुखाम्भोजात्तुङ्गं यदङ्ग! न मङ्गलम्॥ २॥

वरुणगृहिणीमाशामासादयन्तममुं रुची-
निचयसिचयांशांशभ्रंशक्रमेण निरंशुकम्।
तुहिनमहसं पश्यन्तीव प्रसादमिषादसौ
निजमुखमितः स्मेरं धत्ते हरेर्महिषी हरित्॥ ३॥

अस्मिन् सर्गे हरिणीवृत्तं रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदेति लक्षणात् ॥

जयजयेति। हे महाराज! नल! जयजय अभीक्ष्णं सर्वोत्कर्षेण वर्त्तस्व 'नित्य वीप्सयोः' इति द्विर्भावः। इमां पुरोवर्त्तिनीं प्राभातिकीं सुषमां परमां शोभां दरमीषदलसानि पक्ष्माणि ययोस्तयोः अल्पार्थे त्वव्यय दरमिति यादव। अक्ष्णोर्दानाद्दर्शनोपात् सफलयतमां अतिशयेन सफलय तिङ्व्ययशादामुप्रत्यय। तव ते विदर्भजा वैदर्भी शय्याया सकाशादुत्थाय शय्योत्थायं अपादाने परीप्सायामिति णमुल्। परीप्सा त्वरा शिघ्रं प्रथमोत्थानं लभ्यते। अतएव प्रथमशकुन प्रथममङ्गलमस्तु तदा तस्यामेव प्रथमाक्षिपातादितिभावः। कुतइत्यत आह अङ्ग! भो! यद्यस्मात्प्रियजनस्य मुखाम्भोजात्तुङ्गमधिकं मङ्गलं नास्तीत्यर्थान्तरन्यासः॥ २॥

वरुणेति। असौ हरेरिन्द्रस्य महिषी हरित्प्राचीदिक् वरुणगृहिणीमाशां प्रतीचीन्दिशमासादयन्तं सङ्क्रामन्तममुं पुरस्थं रुचिनिचयोंऽशुसमूहः. कृदिकारादिति ङीप्। स एव सिचयः पटः सिचयो वस्त्र वसनं अंशुकमिति यादव। तस्य अंशांशस्य भ्रंशः वीप्सायां द्विरुक्तिः। क्रमेण निरंशुकं [illegible] शैषिकः कप्। विवसनस्य तुहिनमहसं चन्द्र

असहतितरास्ताद्दक् तारा न लोचनगोचरा-
स्तरणिकिरणा द्यामश्नन्ति क्रमादपरस्पराः ।
कथयति परिश्रान्तिं रात्रीतमः सहयुज्वना-
मयमपि दरिद्राणप्राणस्तमीदयितस्त्विषाम् ॥ ४ ॥
स्फुरति तिमिरस्तोमः पङ्कप्रपञ्च इवोच्चकैः
पुरुमितगरुच्चञ्चच्चञ्चूपुटस्फुटचुम्बितः ।

---

पश्यन्तीव प्रसादमिषात् प्राभातिकवैशद्यच्छलात् स्मेरं यस्मिन् तत् स्मेरं निजमुखं धत्तइव अत्र मिषशब्देन प्रसादरूपापह्नवेन पराङ्गनासङ्गतपुरुषदर्शनजन्मस्मितत्वोत्प्रेक्षणात् सापह्नवोत्प्रेक्षा ॥ ३ ॥

असहतेति । अतिशयेन महत्यो महतितराः प्रियादिषु पुंवद्भावप्रतिषेधः रूपकल्पेत्यादिना इस्वोत्सर्गः । ततोनञ्समासे असहतितराः स्वल्पाः तारा स्तारकाः तादृक् पूर्ववल्लोचनस्य गोचराः विषयाः नभवन्ति प्रत्येक् विषयत्वासम्भवात् बहुदोषापत्तौ वा ता न प्रसभादनेकवचनत्वनिबन्धेन तरणेरकस्य किरणाः अपरे परे च सततक्रिया अपरस्पराः सन्तः अपरस्पराः क्रिया सातत्यइति निपातनात् साधुः । क्रमाद्द्यामाकाशमश्नुवन्ति गच्छन्ति अयन्तमीदयितो निशापतिः दरिद्राणप्राणः क्षीणबल सन् दरिद्रातेः कर्त्तरि ल्युट् । नलान्तयोर्मिनोः प्राच इति यादयः । रात्रेस्तमांसि रादिकाराद्वाङीप् । तैः सह युध्वनां सह युद्धतां सहेचेति क्वनिप् । वनोन स इरति वक्तव्यात् इति पाठः । वनो रचेति ङीप् प्रत्ययो नास्ति । त्विषाम्भासां परिश्रान्तिं कथयति शोभासमुच्चयोऽलङ्कारः ॥ ४ ॥

स्फुरतीति । तिमिरस्तोम स्तमोराशिः पुरु भूयिष्ठं यथा तथा हितगरुतां पक्षिणां हंसानां तु श्वेतगरुतस्त्वमरः । चञ्चच्चञ्चूपुटैः स्फुटचुम्बित प्रलोलितः उच्चकैः महान् पङ्कप्रपञ्चः पङ्कराशिरिव स्फुरतीत्युपमा । कालि-

अपि मधुकरी कालिंमन्या विराजति धूमल-
च्छविरिव रवेर्लीलालक्ष्मीं करैरभिपातुकैः ॥ ५ ॥

रजनिवमथुप्रालेयाम्भःकणक्रमसंभृतैः
कुशकिसलयस्याच्छैरग्रेशयैरुदबिन्दुभिः ।
सुषिरकुशलेनायःसूचीशिखाङ्कुरमङ्कुरम्
किमपि गमितान्यन्तर्मुक्ताफलान्यनुमेनिरे ॥ ६ ॥

रविरुचिरुचामोङ्कारेषु स्फुटामलबिन्दुताम्
गमयितुममूरङ्गीयन्ते विहायसि तारकाः ।

आत्मानं मन्यत इति कालिंमन्या कृष्णात्मेत्यर्थः । वर्णाज्जानपदादिति ङीप् कालिशब्दोपपदात् मन्यते रात्ममाने खश्चेति खश् । अरुर्द्विषदित्यादिना मुमागमः । सा मधुकरी भ्रमर्यपि लीलालक्ष्मीं यत्नकृतशोभामभिपातुकैरभिकामुकैः लषपतेत्यादिना उकञ् न लोकेत्यादिना षष्ठीप्रतिषेधात्कर्मणि द्वितीया । रवेः करैः धूमलच्छविः कृष्णलोहितकान्तिरिव विराजति धूम्रधूमलौ कृष्णलोहिताविन्यमरः । अत्र कालिम्ना भ्रमर्या रविकरैर्लौहित्यादिविकारात् तद्गतेन तदुत्थापिता धूमलत्वोत्प्रेक्षेति सङ्करः ॥ ५ ॥

रजनीति । रजन्ये रात्रेः वमथुः करणीकराद्युद्भवा वमथुः करणीकर इत्यमरः । तेन ते प्रालेयाम्भसो हिमजलस्य ये कणाः तैः क्रमेण संभृतैरारब्धैः कुशकिसलयस्य जातावेकवचनं दर्भाङ्कुराणामित्यर्थः । अग्रे शेरत इति अग्रेशयैः अधिकरणे शेतेरित्यच् । सुषिरं छिद्रविधाने कुशलेनायसमयेन लौहस्य सूचीनां शिखाङ्कुरं परमाग्रभागमङ्कुरं सद्भिः किमपि किञ्चिद्गमितान्यन्तर्मुक्ताफलान्यनुमेनिरे अनुचक्रुरिति सादृश्यलक्षणा । अत्र दर्भाग्रबिन्दूनां मध्यसूच्यग्रनलमुक्ताफलैरुपमा प्रालेयाम्भःकणोपचयस्य रूपणाद्रूपकेण कविना रूपणाभिहितकदेशा-यतत्कदेत्यनयोरङ्गाङ्गिभावात् संकरः ॥ ६ ॥

रवीति । रवेः रुचय एव रुचो मन्त्रविशेषाः ककुभि प्रवाहे दिवि-

स्वरविरचनायासामुच्चैरुदात्ततयाहृताः
शिशिरमहसो बिम्बादस्मादसंशयमंशवः ॥ ७ ॥
व्रजति कुमुदे दृष्ट्वा मोहं दृशोरपिधायके
भवति च नले दूरं तारापतौ च हतौजसि ।
लघु रघुपतेर्जायां मायामयीमिव रावणि-
स्तिमिरचिकुरग्राहं रात्रिं हिनस्ति गभस्तिराट् ॥ ८ ॥

देव इयत इति तस्याविशेषकत्वान्न यत्वमुतेरिति भावः। तासामृचां ॐकारेषु स्फुटा व्यक्ता अमलाः स्वच्छाः बिन्दवोऽन्त्यवर्णाः यस्यास्ताङ्कमयितु विचार्यमि अमूस्तारका उन्नीयन्ते संभाव्यन्ते किन्तु आसामृचां स्वरविरचनायोदात्तानुस्वरसम्पादनार्थमुच्चैरत्यन्तमुदात्ततया हृद्यतया उच्चैरुदात्त इत्युक्तलक्षणस्वरविशेषतया च उदात्तः स्वरभेदे स्यात्काव्यालङ्कारहृद्ययोरिति विश्वः। अस्मात् शिशिरमहसश्चन्द्रस्य बिम्बादंशव आहृता अनेनेति शेषः. अन्यथा स्वांशवस्तारकाश्च गता इति भावः। असंशयमित्युत्प्रेक्षायामर्थाभावेऽव्ययीभावः ॥ ७ ॥

व्रजतीति। कुमुदे कैरवे कपिविशेषे च कुमुदः कैरवे रक्तपङ्कजे कुमुदः कपाविति विश्वः। दृष्ट्वा हिंसां कर्तुं दृष्ट्वा मोहं सङ्कोचं मूर्च्छनञ्च व्रजति तथा नले भवति नैषधे त्वयीव दृशोरपिधायके निद्रया निमीलिताक्षे इत्यर्थः। अन्यत्र नले कपिविशेषे दृशोरपिधायके भवति सति नलो योगे नले राशि पितृदेवे कपीश्वर इति विश्वः। तथा तारापतौ चन्द्रे सुग्रीवे च कनीनिमध्ययोस्तारा सुग्रीवगुरुयोषितोरिति विश्वः। दूरमत्यन्तं हतौजसि निस्तेजस्के सति मायामयीं मायाकल्पितां रघुपतेर्जायां सीतां रावणस्यापत्यं रावणिः इन्द्रजित् इञ्। लघु क्षिप्रं गभस्तिराट् सूर्यो रात्रिस्तिमिराण्येव चिकुरास्तेषु गृहीत्वा तिमिरचिकुरग्राहं स्वाङ्गे उपपदे णमुल्भावः हिनस्ति ॥ ८ ॥

त्रिदशमिथुनक्रीडातल्पे विहायसि गाहते
निधुवनधुतस्रग्मालश्रीभरं ग्रहसङ्कुलः ।
मृदुतरकराकारैः स्थूलां तूलोत्करैरुदरम्भरिः
परिहरति नाखण्डो गण्डोपधानविधां विधुः ॥ ९ ॥
दशशतचतुर्वेदीशाखाविवर्त्तनमूर्त्तयः
सविधमधुनालङ्कुर्वन्ति ध्रुवं रविरश्मयः
वदनकुहरेष्वध्येतॄणामयं तदुदञ्चति
श्रुतिपदमयस्तेषामेव प्रतिध्वनिरध्वनि ॥ १० ॥

---

त्रिदशेति । ग्रहैस्तदुपलक्षणं ग्रहसङ्कुलस्तारकागणः त्रिदशमिथु-नानां देवद्वन्द्वानां क्रीडातल्पे विहायस्याकाशे निधुवने सुरते धुतस्रग्भागानां निर्माल्यानां श्रीभरशोभाव्यतिरेकं गाहते किञ्चाखण्डोऽपि पूर्णोऽपि मृदुतरकरा एवाकारो येषां तैस्तदाकारं तादृशैः तूलोत्करैः तूलपटलैरुदरं बिभर्त्ति इति उदरम्भरिरुदरेण परिगतमध्यः स्थूलोदरः सन्नित्यर्थः फलेग्रहिरात्मम्भरि-श्चेति चकारान्निपातः । गण्डोपधानस्य कपोलोपधानस्य उपधानमुपबर्हं इत्यमरः । विधां प्रकारं न परिहरति गण्डोपधानत्वं भजते इत्यर्थः अत्र श्रियमिव श्रियं विधामिव विधामिति सादृश्याक्षेपात् उभयत्र निदर्शनो-त्थानात् सजातीयसङ्करः ॥ ९ ॥

दशेति । दश शतानि यासु ताः सहस्रसङ्ख्या इत्यर्थः । ताश्च ताश्चतु-र्वेदीशाखाश्चेति विशेषणसमासः अन्यथोभयपदवृद्धिप्राप्तौ वृद्धिः स्यादिति तासां विवर्त्तनं मूर्त्तिर्येषां ते तद्विवर्त्तनरूपा रवेः रश्मयो ध्रुवं सविधमलङ्कु-र्वन्ति समीपमुपगच्छन्ति कुतस्तत् तस्मात्तत्सान्निध्यादेव तेषां रश्मीनामेवायं श्रुतिपदमयो वेदाक्षरमयः प्रतिध्वनिरध्येतॄणां सूर्यशिष्याणां वदनकु-हरेषु उदञ्चत्युद्गच्छति अध्वनि सूर्यशिष्याध्ययनध्वनिव्याजेन तेषा-मेव वेदरश्मीनामेव प्रतिध्वनीनां प्रादुर्भावात्तत्सान्निध्यमनुमीय इत्यर्थः ॥ १० ॥

नयति भगवानम्भोजस्यानिबन्धनबान्धवः
किमपि मघवत्प्रासादस्य प्रघाणमुपघ्नताम् ।
अपसरदरिध्वान्तप्रत्यग्वियत्पथमण्डली-
लगनफलदश्रान्तस्वर्णाचलभ्रमविभ्रमः ॥ ११ ॥

नभसि महसां ध्वान्तध्वाङ्क्षप्रमापणपक्षिणा-
मिह विहरणैः श्येनम्पातां रवेरवधारयन् ।
शशविशसनत्रासादाशामयासीच्चरमां शशी
तदधिगमनात्तारापारावतैरुदडीयत ॥ १२ ॥

नयतीति । अम्भोजस्य पद्मकुलस्यानिबन्धनबान्धवो निर्व्याजबन्धुर्भगवान् सूर्यः अपसरन्त्यरीणि विरोधीनि ध्वान्तानि यस्यास्तस्याः प्रत्यग्वियत्पथमण्डल्यां पश्चिमाकाशमार्गे देशे लगनात् ध्वान्तोदयध्वंसनादित्यर्थः फलदः फलीभवन् अश्रान्तस्वर्णाचलभ्रमे विभ्रमो निरन्तरमेरुप्रदक्षिणीकरणप्रयासो यस्य स सन् किमपि कस्यापि हेतोर्मघवत्प्रासादस्य वैजयन्तस्य प्रघाणमलिन्दं प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठकः इत्यमरः । अगारैकदेशे प्रघणः प्रघाणश्चेति निपातः । उपघ्नतामाश्रयतां नयति प्रघाणमाश्रितवानित्यर्थः । सूर्य इवान्धकारं निरस्य क्षणादुदयाद्रिमाश्रित इत्यर्थः ॥ ११ ॥

नभसीति । ध्वान्तानामेव ध्वाङ्क्षाणां वायसानां प्रमापणे मारणे पक्षिणां श्येनानां ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि अथ शशादनः पत्त्री श्येन इति चामरः । महसां तेजसां नभसि विहरणैः विजृम्भणैः रवेः श्येनपातेऽस्यां अयति श्येनं श्येनंपाता श्येना खेटः घञः सास्यां क्रियेति श्येनतिलस्य पाते इति मुमागमः । तामवधारयन् निश्चिन्वन् शशी स्वाङ्कस्थस्य विशसनत्रासात्तद्भयात् चरमां पश्चिमां आशागमात् तस्यां इत्तान्तस्याधिगमनात् तद्वृत्तान्तज्ञानात् ताराभिरेव पारावतैः पक्षिविशेषैः पारा

असुरहितमप्यादित्योत्थां विपत्तिमुपागतम्
दितिसुतगुरुः प्राणैर्योक्तुं न किं कचवत्तमः ।
पठति लुठतीं कण्ठे विद्यामयं मृतजीवनीम्
यदि न वहते सन्ध्यामौनव्रतव्ययभीरुताम् ॥ १५ ॥

उदयशिखरिप्रस्थान्यह्ना रणेऽत्र निशः क्षणे
दधति विहरत्पूषाण्युष्मद्रुताभ्रजतुस्रवान् ।
उदयदरुणप्रह्वीभावादरादरुणानुजे
मिलति किमु तत्सङ्गाच्छङ्का नवेष्टकवेष्टना ॥ १६ ॥

इत्यर्थः । यामातिथ्यं अतिथ्यर्थं अतिथेरर्थः । स यामरूपमातिथ्यं सृजति सम्पादयति रूपकालङ्कारः ॥ १४ ॥

असुरेति । दितिसुतानां दैत्यानां गुरुः शुक्रः असुभिः प्राणै रहितं अचेतनमपि अन्यत्वासुरेभ्योहितमपि चतुर्थी तदर्थेत्यादिना समासः आदित्योत्थां सूर्य्योत्थाङ्कचपक्षे देवोत्थां तथा प्रवृत्तिभूतत्वात् तदुत्थत्वव्यपदेशः । विपत्तिमुपागतं तमोऽन्धकारं कचवत् चैनां वृहस्पतिपुत्त्रसञ्जीवनीविद्यार्थं शुक्रमुपागतः स दैत्यहतः पुनः शुक्रेणोज्जीवितइति भारतीकथा । तं कचमिव प्राणैर्योक्तुं कण्ठे च लुठतीं परिवर्तमाना मार्च्छनद्योरिति विकल्पान्नुमभावः । मृतजीविनीं विद्यां न पठति किं पठेदेव किं त्वयं शुक्रस्तत्काले सन्ध्यामौनव्रतव्ययाद्भयात् भीरुतां न वहते न धत्ते यदि अन्यथा कथमीदृग्विद्यावान् पुरोवर्तिन मन्धकारकर्तारमुपेक्षते इति भावः ॥ १५ ॥

उदयेति । अत्रास्मिन् क्षणे निशोनिशाया अह्ना दिवसेन रणे सति विहरत्पूषाणि सञ्चरत्सूर्य्याणि उदयशिखरप्रस्थानि सानूनि प्रस्थोऽस्त्री सानुमानयोरिति यादवः । ऊष्मणा द्रुतानां विलीनानामभ्रजतूनां धातुविशेषाणां स्रवान् दधति रक्तप्रवाहादिति भावः । य उदयत उद्य

रविरथहयानश्वस्यन्ती ध्रुवं वडवा बल-
प्रतिबलबलावश्यायिन्यः समीक्ष्य समीपगान् ।
निजपरिवृढं गाढप्रेमा रथाङ्गविहङ्गमी
स्मरशरपराधीनस्वान्ता वृषस्यति सम्प्रति ॥ १७ ॥
निशि निरशनाः क्षीरस्नेहः सुधाऽश्वकिशोरका
मधुरमधुरं ह्रेषन्त्येते विलोलितबालधि ।

अतोऽहतस्तानदेः सङ्गाभावाद्रात्मणःसमुद्रामरात् अवज्ञानुज्ञे गहरे मिलति चक्र इति सति तत्सङ्गादुगहर्दुर्मिलनात्प्रेतोर्नया इष्टका यया सा वेदना परिधिः यद्वा गद्गास्पद किम यद्यत्कमेतना न समत्सक्तेत् तदा-हलपञ्चायाप्रहृदयाद्दिणा नवेदकावेदना कष्टादिति समानवयो-त्प्रेक्षा ॥ १६ ॥

रवीति। बलप्रतिबलस्य बलप्रतिपक्षस्येन्द्रस्य बलेन सैन्येनावतिष्ठन्त इति तदवश्यायिन्यो वडवाश्वाः समीपगान् रविरथहयान् समीक्ष्य अश्वस्यन्ती कामयत इत्यर्थः। गाढप्रेमा दृढानुरागा अतएव स्मरशराणां पराधीनस्वान्ता परतन्त्रचित्ता रथाङ्गविहङ्गमी चक्रवाकी जातेरस्त्री-त्वादित्वात् ङीप्। निजपरिवृढं स्वकान्तं सम्प्रति उषःकाले वृषस्यति कामयत इत्यर्थः। ध्रुवमित्युत्प्रेक्षायाम्। वृष अश्व इत्यनेन क्यच् अश्ववृष-सुगागमो सत्यनीतौ क्यच्यनुरागादेव अश्ववृषयोर्मैथुनेच्छाया वक्तव्यमित्यर्थनियम ॥ १७ ॥

निशीति। हे महाराज ! निशि निरशना निराहारा अतएव क्षीरस्नेह क्षीरमात्मनो भक्ष्यमिच्छन्ति ते तथाश्वकिशोरका अश्व-बालका वालः किशोर इत्यमरः। विलोलितवालधि व्यालोलितपुच्छं यथा तथा सभा मधुरमधुरं मधुरप्रकारं ह्रेषन्ति स्वनन्ति किञ्च मणि-मन्थभूधरः मणिमन्थाचलः तद्वासिनां शिलानां लवणोपलविशेषाणां लेहायास्वादाय ईङ्क्षण ईक्षितवन्तः तेन चिरं वह्नुबलपालिति

तुरगसमजः स्थानोत्थायं क्षणान्मयि मन्मथ-
धरभवशिलालेहायेहाचरणो लवणस्यति ॥ १८ ॥
उडुपरिषदः किं नार्हत्त्वं निशः किमु नौचिती
पतिरिह न यत्ताभ्यां दृष्टो गणेयरुचीगणः ।
स्फुटमुडुपतेराश्मं वचः स्फुरन्मलिनाश्मन-
छवि यदनयोर्विच्छेदेऽपि स्मृतं वत न द्रुतम् ॥ १९ ॥

चणप् प्रत्ययः । तुरगाणां समजः समूहः पशूनां समज इत्यमरः । समुदो रजः पशुष्वित्यप्प्रत्ययः । क्षणन्मयि क्षणात्किञ्चिर्णीकं यथा तथेत्यर्थः । स्थानादुत्थाय स्थानोत्थायं अपादाने परीप्सायामिति णमुल् । लवण-स्यति लवणमात्मन इच्छति अश्वक्षीरेत्यादिना क्षीरलवणोर्लालसाया मसुगागम. लालसा तृष्णातिरेकः ॥ १८ ॥

उडुति । उडुपरिषदस्तारागणस्यार्हतोभावः अर्हत्त्वं नौचिती न कि ब्राह्मणादित्वात् ष्यञ्प्रत्यये अर्हतोनुमिति नुमागमः पित्वाङ्गाङ्-षिकात् ईकार इति वामनः यस्येति लोपः यस्य हल इति यकारलोपः । एतेनौचिती व्याख्याता । मम भावस्तु विशेषः निशोऽपिनौचितोकिमु व्यनौचित्यमेवाह यद्यस्मात् इह समये गणेयरुचीगणः परिगणेयकान्ति-चयः परिगणनीयकिरण इत्यर्थः । गणेरेय इत्यौणादिक एयप्रत्ययः । ईदृशः पतिश्चन्द्रः ताभ्यामुडुनिशाभ्यामपि न दृष्टः स्त्रीणां पत्युः क्षीणा-वस्थाने ईक्षण मनुचितमित्यर्थः । किञ्च अश्मन इयमाश्मनी तस्येदमित्यण् अश्मित प्रकृतिभाव. । स्फुरन्ती मलिना आश्मनी च्छवियस्य तन्नी-लाश्मनः सम्बन्धि उडुपतेर्वच अश्मविकार आश्म आश्ममयं विकारार्थे ऽण्प्रत्यय । अश्मनोविकार उपसङ्ख्यानमितिलोपः । स्फुटं सत्यं कुतः यद्य-स्मादनयोः स्वकान्तयोर्विच्छेदे वियोगेऽपि द्रुत शीघ्रं नस्मृतं वर्तेति खेदे उभावन्योन्यानुरागविरुद्धकारिणावित्यर्थः ॥ १९ ॥

अरुणकिरणे वह्नौ लाजानुडूनि जुहोति या
परिणयति तां सन्ध्यामेतामवैमि मणिर्दिवः।
इयमिव स एवाग्निभ्रान्तिं करोति पुरा यतः
करमपि न कस्तस्यैवोत्कः सकौतुकमीक्षितुम् ॥ २० ॥

रतिरतिपतिद्वैतश्रीकौ ! ध्रुवं विभ्रमक्षमाम्
प्रियवचसि यज्ञाचार्यौ वदामतमां ततः।
अपि विरचितो विघ्नः पुण्यद्रुहः खलु नर्मणः
परमपरुषे नैकस्यै वामुदेतु मुदेऽपि तत् ॥ २१ ॥

अरुणेति। या सन्ध्या अरुणस्यानूरोः किरणे तेजस्येव वह्नौ उडू-
न्येव लाजान् जुहोति सन्ध्यां वधूं दिवोमणिः सूर्योवरः परिणयति
उपगच्छति अवैमि वाक्यार्थः कर्म इत्युत्प्रेक्षेत्यर्थः। किञ्च इयं सन्ध्या
वधूरिव वरः सूर्योऽपि भ्रान्तिमारुणयात् अग्निविभ्रमं जनहोमानन्तर-
कार्य मग्निप्रदक्षिणं भ्रमणञ्च पुरा करोति करिष्यत्येव यावत् पुरा-
निपातयोर्लट्। किञ्च तस्येव परिणेतुर्द्युमणेः करमंशुं हस्तमपि बलि-
हस्तांशवः कराः इत्यमरः। सकौतुकं सकुतूहलं यथा तथा मङ्गलसूत्रञ्च कौतुकं
विषयाभोगे हस्तसूत्रे कुतूहल इति यादवः। ईक्षितुं को नोत्को नोत्सुकः
सर्वोऽप्युत्सुका एवेत्यर्थः ॥ २० ॥

रतीति। हे रतिरतिपत्योर्द्वैतस्य द्वित्वस्येव श्रीः ययोः तौ
द्वितीयौ रतिकामौ ! प्रियवचसि चाटुवादे ध्रुवं विभ्रमक्षमां स्त्रीव मति-
शयेन विभ्रम तथापि यज्ञाङ्गेषु आचार्यौ उपदेशादिकारिणौ
[illegible]। ततोवदामतमां सर्वस्माद् वदाम इत्यर्थः।
उभयत्रापि तिङश्चेत्यादिनामुप्रत्ययः। पुण्यद्रुहः सुकृतविरोधिनो नर्मणः
सुखविहारस्य विघ्नो विरचित अन्यैरपि यतः परुषे निष्ठुरे मुदे हर्षाय
तदपि वक्ष्यमाणं वचो वां युवयोर्मध्ये एकस्यै भैम्यै अरुचे रुचेऽ

भव लघु युताकान्तः सन्ध्यामुपास्स्व तपोमय !
त्वरयति कथं सन्ध्येयं त्वां न नाम निशानुजा ।
द्युतिपतिरथावश्यङ्कारी दिनोदयमाश्रिता
हरिपतिहरित्पूर्णभ्रूणायितः क्रियतः क्षणान् ॥ २२ ॥
मुषितमनसश्चित्तं भैमि ! त्वयाद्य कलाघटैः
र्निषधवसुधानाथस्यापि श्लथश्लथता विधौ ।

भावाय क्वचिदसामर्थ्यप्रतिषेधेऽपि नञ्समासः दृश्यते नोदेति न जायते किन्तुरूप एवेत्यर्थः । अप्रियमपि हितं वाच्यमेवेत्यतोवदाम इत्यर्थः ॥ २१ ॥

भवेति । हे तपोमय ! तपोनिष्ठ ! महाराज ! लघु शीघ्रं युता पृथक्-भूता कान्ता प्रिया यस्य सः । युताकान्तः विसृष्टकान्तो भव कान्तायन्दस्य प्रियादिपाठात् स्त्रियाः पुम्वदित्यादिना पूर्वपदस्य न पुम्बद्भावः अप्रियादिष्विति प्रतिषेधात् । सन्ध्यामुपास्स्व सेवस्व इयं निशानुजा सन्ध्या प्रातःसन्ध्या त्वां कथं नाम न त्वरयति तथा हि अथानन्तरन्दिनोदयन्दिनप्रादुर्भाव मवश्यङ्कारी स्वयन्दिनकर्त्ता स सन्नित्यर्थः । आवश्यकाधमर्ण्ययोरित्यादेरर्थकार्थे णिनिः मयूरव्यंसकादित्व त्समासः । आवश्यकार्थत्वादिह भविष्यतीत्यर्थः । अकेनोर्भविष्यदधमर्ण्ययेरितोकारान्तोक्तषष्ठीप्रतिषेधः सम्भवति अतएवात्र प्रत्युदाहरणं काशिकायां अवश्यं कारी कटस्येति तस्माद्दीनावयमिति द्वितीयाप्रयोगश्चिन्त्यः तद्योगषष्ठ्या दुर्वारत्वादिति । द्युतिपतिः सूर्यः हरिरिन्द्रः पतिर्यस्य तस्या हरितः प्राच्याः पूर्णभ्रूणः सम्पूर्णगर्भः गर्भो भ्रूण इमौ समावित्यमरः । सैवाचरितः उपमानक्यजन्तात्कर्तरि क्तः । क्रियतः क्षणान् अत्यन्तसंयोगे द्वितीया । आश्रितः न क्षणमपीत्यर्थः । अतः सत्वरमुत्तिष्ठेति तात्पर्यम् ॥ २२ ॥

मुषितेति । हे भैमि ! अद्य कलाघटैः कामकलानिवासैर्घटाः पुंसि च भूम्नि चेत्यमरः । त्वया मुषितमनसोहृतचित्तस्य निषधवसुधानाथस्य नलस्य विधौ अनुष्ठाने श्लथश्लथता अतिशिथिलता कर्मधारयवत्पु

उदधिनिरयद्भास्वत्स्वर्णोदकुम्भदिदृक्षुताम्
दधति नलिनं प्रस्थायिन्यः श्रियः कुमुदान्मुदा ॥ २५ ॥
प्रथमककुभः पान्थत्वेन स्फुटेक्षितवृत्रहा-
ण्यनुपदमिह द्रक्ष्यन्ति त्वां महांसि महः पतेः ।

चाचित्वेऽपि तन्निष्ठगुणगतातिशयविवक्षया तरप्प्रत्यय इति भगवान् भाष्यकारः । नद्याः शेषस्यान्यतरस्यामिति ह्रस्वः । सहचरीं सहचारिणीं पचादिषु चरडिति टित्करणेण ङीप् । एतां प्रियां क्षणं रह त्यज रहति त्यजति त्याग इति भट्टमल्लः । रहे भौवादिकाल्लोटि सिप् । नभः कर्त्तृ-स्तोकेन लेशेन मुक्ता स्तोकान्मुक्ताः करणे चेति शेषः कर्मणि क्तः कर्म कर्तरि वा क्तः । स्वयं मुक्तैरित्यर्थः तरणिकिरणैः करणैः समालभते आत्मान मनुलिम्पतीत्यर्थः । यत्तु शक्यं समालम्भनमित्यपीत्यनुलेपनपर्याय इति यादवः । किञ्च कुमुदात् अपादानात् नलिनं पद्मं प्रति गम्यमानोप-देशेन क्रियापेक्षया कर्मत्वं । प्रस्थायिन्यः प्रतिष्ठमानाः ग्रह्यादित्वात् णिनिः अत्र गमिगाम्यादिपाठादकेनोरिति षष्ठीप्रतिषेधात्कर्मणि द्विती-येति केचित् । तत्प्रतिष्ठते कर्मकत्व मनालोच्यत इत्युपेक्षणीयं । श्रियः शोभया मुदा हर्षेण उदकानि धीयन्ते ऽस्मिन्नित्युदधिः कर्मण्यधिकरणे चेति कप्रत्ययः । पयवासवाहनहृदयेषु चेत्युदादेशः । तस्मान्निरयन् नि-र्गच्छन् अयतेर्लटः शत्रादेशः । स चासौ भास्वांश्च सएव स्वर्णस्योदकुम्भः एक हलादौ पूरयितव्योऽन्यतरस्या मित्युदादेशः । तद्दिदृक्षुतां नलोकेत्यादिना षष्ठीप्रतिषेधे गमिगाम्यादिपाठात् द्वितीयासमासः । तासां भावस्तत्ता तां दधति दिदृक्षन्त इत्यर्थः । नवमन्दिरप्रवेशे पूर्णकुम्भदर्शनस्य मङ्गला-वहत्वादिति भावः ॥ २५ ॥

प्रथमेति । प्रथमककुभः इन्द्रदिशः पन्थानं गच्छतीति पान्थोनित्य-पथिकः पथोर्णनीनुप्रत्ययः पन्थ देशश्च । तत्त्वेन इन्द्रदिग्गतत्वेनत्यर्थः स्फुट-मीक्षितो वृत्रहा येन नि इनुहन्नित्यादिना सौ सर्वनामस्थाने दीर्घ । महःपतेः सूर्यस्य महांसि अनुपदं इन्द्रजणानन्तरमिह देशे त्वां द्रक्ष्यन्ति

पटिमवहनादूहापोहक्रमाणि वितन्वता
महह युवयोस्तावल्लक्ष्मीविवेचनचातुरीम् ॥ २६ ॥

अनतिशिथिले पुंभावेन प्रगल्भबलाः खलु
प्रसभमलयः पाथोजास्ये निविश्य निरित्वराः ।
किमपि मुखतः कृत्वा नीतं विनीय सरोजिनी
मधुरसमुपर्योगे जायां नवान्नमचीकरन् ॥ २७ ॥

मिहिरकिरणाभोगग्रासं प्रवृत्ततया पुरः
कलितचुलुकापोशानस्य ग्रहार्थमिदं किमु ।

ततः किं तत्र ह पटिमवहनात् ज्ञातव्य ज्ञातव्यस्य च वहनात् धार-
णात् । पटुत्व तारतम्ययोरिति शब्दः । ऊहापोहयोः सदसद्-
वृत्त्यागयोः क्रमाणि प्रकारान् तानि महांसि तद्व्यस्य तव च युवयो-
र्द्वयोरपि सर्वं निजसमिति त्वदादिकमेव । तावल्लक्ष्मीविवेचनचातुरीं
तावल्लावण्येन वितन्वता उभयदर्शिन सुभगतारतम्यं विविक्तं युक्त-
मित्यर्थः । ग्रहरिन्दुः ॥ २६ ॥

अनतीति । पुंभावेन पुंस्त्वेन हेतुना प्रगल्भबला स्त्रीभ्योऽपि
प्रबला अलयो भृङ्गा अनतिशिथिले ईषद्विकसिते पाथोजे पद्ममेवास्यं
तस्मिन् प्रसभं बलात् निविश्य निरित्वरा निर्गच्छन्तः दृशानर्गजसर्वित्वः
करप् । मुखतः मुखे कृत्वा सरोजिनीमधुरसं नलिनीरसमकरन्दरूपमास्वाद्यं
उपयोगे प्राप्ति विनीय दत्त्वा जायां स्वकान्ताः नलिनीं किमप्यवाच्यं
नवान्नं मचीकरन् कारयामासुः भोजयामासुरित्यर्थः । करोतेर्णौ च-
ङ्युपधाया ह्रस्वः । हृक्रोरन्यतरस्यामिति अणि कर्तुः कर्मत्वं । बली पुमान्
स्वल्परसमुखान्तर्गतमपि स्वादुमन्नं बलादाच्छिद्य भार्यायै प्रयच्छतीति
भावः ॥ २७ ॥

मिहिरेति । सरोजिनी दिनोदये प्रातःकाले प्राग्विकसितेनैकेन
हेतुना मिहिरकिरणा भुज्यन्त इत्याभोगं भोज्यं भोक्तुं प्रवृत्ततया इदं

इति विकसितनैकेन प्राग्दलेन सरोजिनी
जनयति मतिं साक्षात्कर्त्तुं जनस्य दिनोदये ॥ २८ ॥
तटतरुखगश्रेणीसांराविणैरिव साम्प्रतम्
सरसि विगलन्निद्रामुद्राऽजनिष्ट सरोजिनी ।
अधरसुधया मध्ये मध्ये वधूमुखलक्ष्मया
धयति मधुपः स्वादुङ्कारं मधूनि सरोरुहाम् ॥ २९ ॥
गतचरदिनस्यायुर्भङ्गे दयोदयसङ्कुच
त्कमलमुकुलक्रोडान्नीडप्रवेशमुपेयुषाम् ।
इह मधुलिहां भिन्नेष्वम्भोरुहेषु समायताम्
सह सहचरैरालोक्यन्तेऽधुना मधपारणाः ॥ ३० ॥

सरोजिनी अपोशान मपोशनं नाम कर्म पृषोदरादित्वात्साधुः । तस्य ग्टह धर्माचरणार्थं पुरः पूर्वं कलितो हृतचुलुकः पाणिबन्धनविशेषो यस्याः सा किमु । इति मतिं सुप्रोत्थया साक्षात्कर्तुं द्रष्टुं जनस्य जनयति ॥२८॥

तटेति । साम्प्रतं सम्प्रति सरसि सरोजिनी तटतरुषु खगश्रेणीनां सांराविणैः समन्ताद्रावैरिवेत्युत्प्रेक्षा । अभिविधौ भावइनिति स्वार्थे इनुण्प्रत्ययः । विगलन्निद्रामुद्रा विवर्तमाननिद्रा अजनिष्ट जाता जनेः कर्तरि लुङ् । मधुपः सरोरुहां मधूनि मकरन्दान् मध्ये मध्ये वधूमुखे स्वकान्तामुखे लक्ष्मया अधरसुधया स्वादुङ्कारं स्वादूकृत्य स्वादुनि णमुलिति णमुल्प्रत्ययः । मान्तनिर्देशादेव मकारान्तदीर्घभावः धयतीति धेटो लट् ॥ २९ ॥

गतेति । गतचरं गतपूर्वं भूतपूर्वं चरट् । तस्य जनस्यायुर्भङ्गे जीवितावसाने सति दयोदयात् कृपाविर्भावादिव सङ्कुचतां म्लानानां कमलमुकुलानां क्रोडेष्वभ्यन्तरेष्वेव नीडेषु कुलायेषु कुलायो नीडमस्त्रियां नना क्रोडं भुजान्तरमिति चामरः । प्रवेशमुपेयुषामन्तः प्रविशतामित्यर्थ

हिमगिरिदृषद्घाधादश्रीप्रतीतमदः स्मितम्
कुमुदविपिनस्याथो पाथोरुहैर्निजनिद्रया ॥ ३२ ॥
धयतु नलिने माध्वीकं वा न वाऽभिनवागतः
कुमुदमकरन्दौघैः कुक्षिम्भरिर्भ्रमरोत्करः ।
इह तु लिहते रात्रीतर्षं रथाङ्गविहङ्गमा-
मधु निजवधूवक्त्राम्भोजेऽधुनाऽधरनामकम् ॥ ३३ ॥
जगति मिथुने चक्राविव स्मरागमपारगौ
नवमिव मिथः सम्भुञ्जाते वियुज्य वियुज्य यौ ।

कुमुदवनगामिन्याः स्वनिद्राया निमित्तेन स्मितं विकसितं भावे निष्ठा। तदा तदा दृष्ट्वा इदानीं मन्निमित्ता दृष्टानि पद्मानि हसन्तीवेत्युत्प्रेक्षा-व्यञ्जकाप्रयोगाद्गम्या ॥ ३२ ॥

धयत्विति। कुमुदमकरन्दानामोघैः कुक्षिम्भरिः कुक्षिपूरकः फले-ग्रहि रात्मम्भरिश्चेति चकारात् कुक्षिम्भरिः सिद्धः। भ्रमरोत्करो भृङ्ग-सङ्घः सएवाभिनवागतोऽतिथिः नलिने माध्वीकं मकरन्दं धयतु वा रात्रावप्युदरपूरं पीतत्वादिति भावः। रथाङ्गविहङ्गमाः चक्र-वाकास्तु रात्रिं तर्षयित्वा रात्रितर्षन्तर्षयैरात्रिं नीत्वेत्यर्थः। कस्य-चित्तर्षोः क्रियातिरेकात्तृषिति णमुल्प्रत्ययः। इहाधुना निजवधूवक्त्रा-म्भोजे अधरनामकं मधु मकरन्दं लिहते आस्वादयन्ति ॥ ३३ ॥

जगतीति। जगति लोके मिथुने मिथुनेषु निर्धारणे सप्तमी जातावेकवचनं। चक्रौ चक्रवाकाविव स्मरागमपारगौ कामशास्त्रतत्त्वज्ञौ कामोपभोगे चतुराविस्यर्थः। अत्यन्ताङ्के डप्रत्ययः। कुत. यौ चक्रौ मिथो वियुज्य वियुज्य पुनः पुनः विश्लेष्य विश्लेष्य नवमिव इदं प्रथममिव सम्भु-ञ्जाते अन्यथा अरोचकभयादिति भावः। अत्र दृष्टान्तमाह यद्यस्मा-द्धिमः प्रतीकारसमर्थः अमृतभुजाम् अमृतहारिणां भर्त्ता अग्रेसरः

सततममृतादेवाहाराद्यदापदरोचकम्
तदमृतभुजां भर्त्ता शम्भुर्विषं बुभुजे विभुः ॥ २४ ॥
वियति युवतित्यागे रात्रीमुचं मिहिकारुचम्
दिनमणिमणिं तापे चित्ताग्निजाश्रु यियासति ।
विरहतरलजिह्वा बह्वाह्वयन्त्यतिविह्वला-
मिह सहचरीं नामग्राहं रथाङ्गविहङ्गमाः ॥ २५ ॥
स्वमुकुलमयैर्नेत्रैरत्यन्तमविष्णतया जनः
किमु कुमुदिनीं दुर्व्याचष्टे रवेरनवेक्षकाम् ।

शम्भुः सततम् अमृतस्याहारात् अशनात् न रोचत इत्यरोचकं कर्म तदाख्य रोगमापत् तत्तस्य देव विषं बुभुजे विजातीयभोगेनारुचिनिवृत्तिरिति भावः ॥ २४ ॥

वियतीति। इह समये रथाङ्गविहङ्गमाः पुंश्चक्रवाकाः युवतित्यागे कान्तावियोगे रात्रीमुचं रात्रित्यागिनं मुचेः क्विप् रुदिकारादीकारः। मिहिकारुचं चन्द्रं वियति सति तापे सन्तापे च निजचित्ताद्यपादानात् दिनमणिमणिम् यियासति यातुमिच्छति सति याते. सनन्ताच्छतृ गत्वादेश। विरहेण तरलन्त्यस्तरलायमाना आचारार्थे क्विबन्ताच्छतृ गत्वादेशः। ता जिह्वा येषान्ते तथा सन्तः अतिविह्वलाम् अतिविवशां सहचरीं प्रियां नामग्राहं नाम गृहीत्वा समभ्यासतिदेशे गृह्णाति णमुल्प्रत्यय. बहु वारम्वार माह्वयन्ति २५।

स्वेति। जनो लोकः स्वमुकुलमयैः निजमुकुलरूपैः निमीलितै रित्यर्थः। नेत्रैरत्यन्तमविष्णतया अक्षीभूतया कर्तरि भुवः खिष्णुच् इत्यभूततद्भावे कर्तरि खिष्णुच्प्रत्यय. खित्यनव्ययस्येति मुमः अरुर्द्विषदित्यादिना मुमागम। रवेरनवेक्षकामनवलोकनीं सतीम्। अवाविति पदच्छेदात् पर्वतेश्वर। कुमुदिनीं किमु किमिति दुर्व्याचष्टे दुर्वदति एका

लिखितपठिता राज्ञो दाराः कविप्रतिभासु ये
शृणुत शृणुतासूर्यम्पश्यां न सा किल भाविनी ॥ ३६ ॥
चुलुकिततमःसिन्धोर्भृङ्गैः करादिव शुभ्यते
नभसि बिसिनीबन्धोरभ्रच्युतैरुदबिन्दुभिः ।
श्रतदलमधुस्रोतः कच्छद्वयीपरिरम्भणा-
दनुपदमदः पङ्काशङ्काममी मम तन्वते ॥ ३७ ॥

भार्या प्रकृतिकठिना चञ्चला च द्वितीया पुत्रोऽनङ्गस्त्रिभुवनजयी मन्मथः पञ्चबाणः । शेषः शय्या वसतिरुदधिर्वाहनं पन्नगारिः स्मृत्वा स्मृत्वा स्वगृहचरितं काष्ठभूतो मुरारिः । अपवदतीत्यर्थः । ननु सूर्याविलोकनस्य विहितत्वादिति भावः । कविप्रतिभासु विद्याव्यवहारेषु ये राज्ञः चन्द्रस्य नृपस्य दारा राजा प्रभौ नृपे चन्द्र इति विश्वः । लिखिताश्च ते पठिताश्चेति विशेषणसमासः । राजदारा प्रसिद्धा इत्यर्थः । सा राजदारा कुमुदिनी सूर्यं न पश्यतीत्यसूर्यम्पश्या न भाविनी भविष्यति किल भविष्यति गम्या-दय इति साधुः । शृणुत शृणुताकर्णयताकर्णयताकोशे सम्भ्रमे वा द्वि-रुक्तिः । असूर्यम्पश्या राजदारायति राजनीत्यनुसारेण दृष्टप्रागल्भ्यात् कुमुदिन्या अपि राजदारत्वात् सूर्यानवेक्षणं युक्तमिति भावः । पर-मार्थतस्तु कैमुत्यन्यायेन पुरुषान्तरदर्शननिषेधपरमेतत् न सूर्यदर्शन-निषेधपरम् इति द्रष्टव्यम् अतएव काशिकागुप्तिपरञ्जैर्तादित्यादित्य-सूर्यललाटयोर्दृशितपोरिति खश्प्रत्ययः । पाश्रेत्यादिना दृशेः पश्यादेशः असूर्येभ्यः समर्थः समासः । सदृशोनां सम्बन्धत्वात् सूर्यनिषेधेत्वनभिधान-प्रत्ययोऽभिधानलुप्रवृत्त्यनुसामर्थ्ये विषसत्वात्समासोऽस्मादेव वचनादिति सकारः ॥३६॥

चुलिकितेति । नभसि भृङ्गैः चुलुकित चुलकीकृतः तमः सिन्धु-येन तथा बिसिनीबन्धोः सूर्यस्य करा अंशवो हस्ताश्च रभ्रच्युतैरवयवा-न्तरालगलितैः उदबिन्दुभिरिव शुभ्यत इत्युत्प्रेक्षा शुभे भावे लट् ।

घुसृणसुमनःश्रेणिश्रीणामनादरिभिः सरः-
परिसरचरैर्भासां पत्युः कुमारतरैः करैः।
अजनि जलजामोदानन्दोत्पतिष्णुमधुव्रता-
वलिशवलनाद्गुञ्जापुञ्जश्रियं ग्रहयालुभिः॥ ३८॥

रचयति रुचिः शोणीमेतां कुमारितरा रवे-
र्यदलिपटली नीलीकर्तुं व्यवस्यति पातुका।
अजनि सरसी कल्माषी तद्ध्रुवं धवलस्फुट-
त्कमलकलिकाषण्डैः पाण्डूकृतोदरमण्डला॥ ३९॥

धर्मित्वाद्गुणभावः। किञ्चामी भृङ्गाः शतदलमधुस्रोतसः कुशेशयमक-
रन्दप्रवाहस्य कञ्चहृदयोः परिरम्भणादभिव्याप्तेरनुक्षणमनुपदमसव्याः कवि-
हृदं पङ्काशङ्कां मम तन्वते॥ ३७॥

घुसृणेति। घुसृणसुमनःश्रेणीश्रीणां कुङ्कुमकुसुममालाशोभानां
धर्मीति नदीत्वप्रविष्टागमः। कुङ्कुमं घुसृणं वर्णमिति हलायुधः। अना-
दरिभिः अनादरकर्तृभिः तत्सदृशैरित्यर्थः। सरःपरिसरचरैः सरः-
प्रान्तवर्तिभिः कुमारतरैः बालकैर्भासां पत्युरर्कस्य करैः किरणैः। जल-
जामोदेन कमलपरिमलेन च आनन्दः तस्मादुत्पतिष्णव उत्पातुकाः
अलङ्कृञित्यादिना इष्णुच्। तेषां मधुव्रतानामावल्या शवलनाच्छबलवर्णी-
कृतेः गुञ्जापुञ्जस्य गुञ्जा तु कृष्णलेत्यमरः। श्रियमिव श्रियं शोभा-
मिति निदर्शनालङ्कारः। नलोकेत्यादिना षष्ठीप्रतिषेधः। ग्रहयालुभिः ग्राह-
कैः। अजनि भावे लुङ्। स्पृहिगृहीत्यादिना आलुच् ग्रहणं इत्यदन्ता-
च्चौरादिकाराम्भस्य। गुञ्जाबीजानां नीलमुखत्वादलिकमलयोगेनारुणकिशो-
रकान्तत्वमित्यर्थः॥ ३८॥

रचयतीति। यस्मादतिकुमारी कुमारितरा बालतरा घरूपेत्या-
दिना ह्रस्वः। रवेः रुचिरेतां सरसीं शोणीं रचयति शोणवर्णां करोति
शोणात् प्राचामिति विकल्पादीकारः। पातुका पतयालुः लषपतेत्यादिना

कमलकुशलाधाने भानोरहो पुरुषव्रतम्
यदुपकुरुते नेत्राणि श्रीगर्हत्वविवक्षुभिः ।
कविभिरुपमादानादम्भोजतां गमितान्यसा-
वपि यदतथाभावान्मुञ्चत्युलूकविलोचने ॥ ४० ॥

उरुड् । अलीनां पटली मण्डली नीलीकर्त्तुं अभततद्भावे च्विः । व्यवस्यति व्याप्रियते तस्मात्सरसी धवलैः स्फुटद्भिः विकसद्भिश्च कमलकलिकानां षण्डैः कदम्बैः कदम्बे षण्डमस्त्रियामित्यमरः । पाण्डूकृतं धवलीकृतम् अभूततद्भावेच्विः । तदुदरमण्डलं मध्यभागो यस्याः सा सती कल्माषी चित्रवर्णा गौरी गौरादित्वात् ङीषिति भोजराज । अजनि जाता दीपजनेत्यादिना कर्त्तरि लुङ् चिण् । अ्रुर्थमिलितेक्षायाम् अत्र सरस्याः स्वगुणत्यागेन काणाद्यनुगुणस्वीकारात्तद्गुणालङ्कारस्तावत् तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणा इति लक्षणात् तत्रैकगुणसंक्रान्तिपरिपद्यात् षण्डपुण्डरीकपाण्डुसंक्रमद्वारा कल्माषस्वीकारोत्प्रेक्षणात्तद्रूपणोत्प्रेक्षयो रङ्गाङ्गिभावेन सङ्करः ॥ ३६ ॥

कमलेति । कमलानां कुशलाधाने क्षेमविधाने भानो. पुरुषाभिमानिनः व्रतं पुरुषव्रतं दृढनियम इत्यर्थः । अहो चित्रम् अथवा अहो पुरुषाभिमानवान् पुरुष इति मयूरव्यंसकादिष कैयटः । तस्य व्रतं दृढमित्यर्थ । कुतः यद्यस्मादसौ श्रीगर्हत्वं नेत्राणां शोभाश्रयत्वं विवक्षुभिः वक्तुमिच्छुभिः योगविभागात् द्वितीयासमासः । कविभिरुपमानात्मादृश्यभावादम्भोजतां गमितानि अम्भोजत्वेन रूपितानि नेत्राण्यप्युपकुरुते विकासयतीत्यर्थः । यदपि यद्यस्माच्च अतथाभावादौपमानिकाम्भोजस्याप्यभावादित्यर्थः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । उलूकस्य पेचकस्येति विलोचने मुञ्चति । अन्नदो जलदश्चैव विप्रो व्याधिचिकित्सकः । त्वयः स्वर्गाय गच्छन्ति विना दत्तेन पार्थिव ! । भीतत्वेन मीलितात्वादिति भावः । अन्वयव्यतिरेकाभ्याम् अम्भोजदृष्टस्यैव सहस्र-

सुरपरिवृढः कर्णात् प्रत्यग्रहीत् किल कुण्डल-
द्वयमथ खलु प्राच्यै प्रादान्मुदा स हि तत्पतिः ।
विधुरुदयभागेकं तत्र व्यलोकि विलोक्यते
नवतरकरस्वर्णस्त्रावि द्वितीयमहर्मणिः ॥ ४३ ॥
दहनमविशद्दीप्तिर्याऽस्तङ्गते गतवासर-
प्रथमसमयप्राप्ते पत्यौ विवस्वति रागिणी ।

माणिक्यानि पद्मरागाः तेषां खनिराकरम् । ध्वान्तेन श्यामां पिधायिकामाच्छादिकां रजनिमेव दृषदं शिलां विभूय कतमेन जनेन विमुद्रिता न जाने खलु अत्र सूर्यमण्डलादिषु खनित्वाद्यारोपादूपकालङ्कारः ॥ ४२ ॥

सुरेति । सुराणां परिवृढ इन्द्रः प्रभौ परिवृढ इति निपातनात् साधुः । कर्णाद्राधेयात् कुण्डलद्वयं ताटङ्कयुगं प्रत्यग्रहीत्किल ततो निकृत्य गात्राणि शस्त्रेण निशितेन सः । प्रायच्छद्देवराजाय दिव्यं वर्म सकुण्डलमिति भारतवचनात् । तत्रोत्प्रेक्षते अथ प्रतिग्रहानन्तरं प्राच्यै दिशे मुदा प्रादात् हि यस्मात्स इन्द्रः तस्याः प्राच्याः पतिः ततो दानं युक्तमित्यर्थः । तत्र तयोर्मध्ये उदयं भजतीत्युदयभाक् उद्यन्नभजोखिः । विधुरेकं कुण्डलं व्यलोकि विलोक्यते स्म नवतरान् प्रत्यग्रतरान् करानेव च स्वर्णान् स्रावयति विदारयतीति तत्स्रावि अहर्मणिः दिनमणिः रोरिति रेफादेशः । द्वितीयं कुण्डलम् ॥ ४३ ॥

दहनमिति । रागिणी रक्तवर्णा अनुरागिणी च या दीप्तिर्गतवासरप्रथमसमयन्दिनावसानं अत्यन्तसंयोगे द्वितीया । पत्यौ स्वामिनि भर्तरि च विवस्वति सूर्ये अस्तमस्ताद्रिमदर्शनङ्गते सति अस्तस्तु चरमः क्ष्माभृददर्शनमिति चामरः । दहनमग्निमविशत् अग्निं वादित्यः सायं प्रविशतीतिश्रुतेरितिभावः । अतोऽनन्तरं हटाद्बलादधरभुवनादधोलोकात् पातालान्नरकाच्चोद्धृत्य तरणेः पत्युरर्कस्य कृता अमरपति-

न खलु शकिता शीलं कालप्रसूतिरसौ पुरा
यमयमुनयोर्जन्माधानेऽप्यनेन यथोज्झितुम् ॥ ४६ ॥

रुचिरचरणः सूतोरुश्रीसनाथरथः शनिम्
शमनमपि स त्रातुं लोकानसूत सुताविति।
रथपदकृपासिन्धुर्बन्धुर्दृशामपि दुर्जनै-
र्यदुपहसितो भास्वानस्मान् हसिष्यति कः खलः ॥ ४७ ॥

शिशिरजरुजां घर्मं शर्मोदयाय तनूभृता-
मथ खरकराश्यानास्यानां प्रयच्छति यः पयः।

विस्त्र.। भृश. पुनः पुनः प्रसूय जनयित्वा तथाचिराभ्यास मभजत तथादौ कालस्यानेहसः कृष्णस्य च प्रसूतिः जननं पुरा पूर्वकाले यमयमुनयो र्जन्माधाने जननेऽप्यनेन रविणा उज्झितुन्त्यक्तु न शकिता न शक्ता कर्मणि क्तः। कर्मणि निष्ठाया मिड़ागमः। तत्र कालशब्दे वाच्यप्रतीयमानयो रभेदाध्यवसायेन भगवतो भानो. प्रत्यहं कालप्रसूत्याभ्यासादपत्येष्वपि शमनयमुनादिषु कालप्रसवित्वमुत्प्रेक्ष्यते तत्र कालयोः कृष्णानेहसो-रभेदाध्यवसायइति तयोरेकत्वेनात्र सङ्करः ॥ ४६ ॥

रुचिरेति। रथपदेषु रथाङ्गनामपक्षिषु यः कृपासिन्धुश्चक्रवाकानां त्रातेत्यर्थः। तथा दृशां लोकचक्षुषां बन्धुः प्रकाशकइत्येवंशोभास्वानपि रुचिरचरणः सन् वस्तुतस्तु विपरीतवृत्तिः सन्तापकादित्यादिति। सदयं सूतया प्रसूतया ऊर्व्या श्रिया सूतस्य सारथेरुरुश्रिया शोभया च सनाथः सहितोरथो यस्य सः सक्थि क्लीबे पुमानूरु सूतः पत्त च सारथि रिति चामरः। स देवः शनिं शनैश्वरं क्रूरग्रहमितिभावः। शमनं च सुतौ पुत्त्रौ लोकांस्त्रातु मसूतेति दुर्जनैः यस्मादुपहसितः परिहसितः अस्मान् खलः को न हसिष्यति कैमुत्येनार्थान्तरापादानादर्थापत्तिरलङ्कारः ॥ ४७॥

शिशिरेति। शिशिरजा हिमजा रुक् पीड़ा येषां तेषान्तनूभृतां शरीरिणां शर्मोदयाय सुखाविर्भावाय एवमुत्तरत्र कोऽप्यनुषङ्गनीयं घर्मं

अपि च शमनस्वासौ तातस्ततः किमनौचिती
यदयमुदयः कह्लाराणामुदेत्यपमृत्यवे ॥ ५० ॥

उडुपरिवृढः पत्यामुक्तां सतीं यदपीडय-
द्यदपि बिसिनीं भानोर्जायां जहास कुमुद्वती ।
तदुभयमनः शङ्के सङ्कोचितं निजशङ्कया
प्रसरति नवार्के कर्कन्धूफलारुणरोचिषि ॥ ५१ ॥

श्रुतिमयतनोर्भानोर्जानेऽवनेरधराध्वना
विहरणमतः शाखाः साक्षाच्छतानि दश त्विषाम् ।

त्वं सर्वादेशः सुर्यश्च किञ्चनः सन् निन्दाक्षमा प्रतीकारे सन्निधत्ते। निजात्मितुरस्मात् सूर्यादधीत्य चिकित्सामस्य भिषज्यतद्व चिकित्सतः किमितुत्प्रेक्षा। कण्ड्वादौ भिषजेति पाठाद्यपन्त्र्यटितङ् उत्थापयति भैषज्ये चिकित्सति भिषज्यतीति भट्टमल्लः। अपिचासौ सूर्यः शमनस्य यमस्य तातो जनकस्ततः किमित्युत्प्रेक्षा। अयमभानुरुदयः सन् कह्लाराणां सौगन्धिकानां कह्लारमित्यमरः। अपमृत्यवे अकालमरणाय उदेति सा अनौचिती अनौचित्यदस्वयोः पितृवन्सर्वापकारित्वमुचितं पितुस्तु रवेरङ्ककमलहारित्वमनुचितं इत्यर्थः ॥ ५० ॥

उडुपेति। उडुपरिवृढश्चन्द्रः पत्या भर्त्रा भानुना मुक्तां सतीं साध्वीं बिसिनीं यदपीडयत् कुमुद्वती कुमुदिनी कुमुदनड्वेतसेभ्यः ड्मतुप्। भानोर्जायां बिसिनीमपि जहास। अतोऽस्मात्कारणात्कर्कन्ध्वाः कर्कन्ध्वः पक्वबदरीफलमित्यर्थः। कुण् प्रत्ययः। तत्फलावदरुणरोचिषि नवार्के बालार्के प्रसरति सति तयोः कुमुद्वतीचन्द्रयोरुभयं द्वन्द्वं निजशङ्कया स्वाभिभवहेतुना सङ्कोचितन्निस्तेजितं शङ्के इत्युत्प्रेक्षा सर्वथा सन्द्रोहेष्वात्मानं कलुषयतीति भावः ॥ ५१ ॥

श्रुतीति। अवनेरधराध्वना[illegible]मार्गेण च एतच्च यर्णस्थानमात्रोपलक्षण

निशि निशि सहस्राभ्यां दृग्भिः शृणोति सहस्वराः ।
पृथगहिपतिः पश्यत्यस्य क्रमेण च भास्वराः ॥ ५२ ॥

बहु न खरता येषामग्रे खलु प्रतिभासते
कमलमुकुलस्तेऽमी भानोः प्रवालरुचः कराः ।
उचितमुचितं ज लेख्य नः प्रवेशिभिरायतैः
क्रियदवयवैरेषामालिङ्गिताङ्गुलिवल्गुना ॥ ५३ ॥

अधरोह्यङ्ग्रहीन इतियादवः । विहरणक्रतो विहारकृतः सञ्चरत आवि-र्भवतश्च श्रुतिमयतरो वेदात्मकत्वमस्यास्य भानोर्मितया रश्मीनां दशशतानि सहस्राणि सहस्रमेव सहस्ररश्मिरूपेण परिणता इत्यर्थः । स्वरैरुदात्तादिभिरनुवर्तन्त इति सहस्वराः. सस्वरः शोभनमजनस्येति सहशब्दस्य विकल्पात्सहभावः । पृथक् साहुर्येण भास्वराः भासनशीलाः भाजभासेत्यादिना वरः । शाखाः वेदभागान् शाखाश्च शाखा वेदप्रभेदे च बाह्वोः पार्श्वद्रुम कृदोरिति यादवः । अहिपतिः शेष निशिनिशि प्रतिनिशं शाखाया द्विभावः । एतल्लोकापेक्षया निशात्युक्तं । तत्र तदा सूर्यसञ्चारेण निशाभावात् सहस्राभ्यां सहस्रसङ्ख्याभिः दृग्भिरक्रमेण यौगपद्येन साक्षादपरोक्षं शृणोति पश्यति शेषस्य चक्षुःश्रवस्त्वात् शाखानां वाङ्मात्मकत्वं न आवरणत्वोपदेशात् रश्मिपरिणामेन चाक्षुषत्वाच्चेतिभावः । जाने इत्युत्प्रेक्षा रूपकसङ्कीर्णा चेयं सुरोत्रेति व्यक्रमेण एकेन दृक् सहस्रेण शृणोति अपरेण दृक्सहस्रेण पश्यतीति विश्वेश्वरभट्टारकव्याख्यानं चिन्त्यं । दृशां प्रत्येकमुभयशक्तियुक्तानां शक्तिप्रविभागायोगात् तस्मात् प्रत्येकस्योभयशक्तिमत्त्व. दृष्टाह्लस्य च तेजः शब्दोभयात्मकत्वात्सर्वाभिरेव दृग्भिः सर्वान् शाखा युगपत् पश्यति शृणोति चेति रमणीयम् ॥ ५२ ॥

बह्वीति । येषां कराणां अंशूनां हस्तानामग्रे प्रत्यग्रावस्थायां बह्वति न खरता अतितीक्ष्णता प्रतिभासते एतस्याग्रे अग्रभागे अङ्कुरसखर-ता अङ्कुरसखरत्वं प्रतिभासते नखोऽसौ सखरोऽस्तियामितिसमासः । कमलानां

नय नयनयोर्द्राक् पेयत्वं प्रविष्टवतीरमू-
र्भवनवलभीजालान्नाला इवार्ककराङ्गुलीः ।
भ्रमदणुगणाक्रान्ता भान्ति भ्रमन्त्य इवाशु याः
पुनरपि धृताः कुन्दे किं वा न वर्द्धकिना दिवः ॥ ५४ ॥
दिनमिव दिवाकीर्त्तिस्तीक्ष्णात् क्षुरात् सवितुः करात्
तिमिरकबरीलूनां कृत्वा निशां निरदीधरत् ।

सुहृदो बन्धवः अन्यत्र तत्सदृशाः प्रवालरुचः उभयत्र विद्रुमभासः अमी-
भानोः कराः अंशवो हस्ताश्च जालेषु गवाक्षविवरेषु कियत् स्तोकं
अन्तः प्रवेशिभिः प्रविष्टैरायतैर्दीर्घैरवयवैः एकदेशैरेषां कराणां अङ्गुली-
नां करशाखानां अङ्गुल्यः करशाखा इत्यमरः । वल्गुता चारुता आलि-
ङ्गिता प्राप्तेति विशेषणसङ्कीर्णा निदर्शनाभेदः । अङ्गुलं शब्दो देशीत्याहुः
उचितमुचितं कराणामङ्गुलिसमर्पणमुचितमित्यर्थः । आभीक्ष्ण्ये द्वि-
रुक्तिः ॥ ५३ ॥

नयेति । भवनवलभीनां गृहविशेषाणां जालात् प्रविष्टवतीरन्तः
प्रविष्टास्ता इव स्थिताः कमलकाण्डायिता इत्यर्थः । अमूः पुरोवर्त्तिनीः
अर्कस्य कराइव कराः हस्ताः श्लिष्टरूपकं बलिहस्तांशवः कराः इत्यमरः ।
तेषामङ्गुलीः करशाखाः तन्नयनयोः पेयत्वं नय पश्येत्यर्थः । अथ तां
दर्शनीयतामुत्प्रेक्षया दर्शयति याः कराङ्गुलयः भ्रमद्भिरणुगणैः त्रसरेणु-
जालैः क्रान्ता वेष्टिताः सत्यः आशु भ्रमन्त्य इव भान्तीत्युत्प्रेक्षा । भ्रमणे-
कारणमुत्प्रेक्षते पुनरपि दिवः स्वर्गस्य वर्द्धकिना विश्वकर्मणा तक्षा तु
वर्द्धकिस्त्वष्टेत्यमरः । कुन्दे चक्रभ्रमे शर्म कुन्दश्च यन्त्रकमिति यादवः ।
धृता वा न किं पुरा किल सन्ध्यादेव्या स्वर्गे सूर्यभार्यया दुष्प्रापस्य मात-
रश्चेत्यत्रोक्तेन सुप्रापश्चकारेति पौराणिकी कथा चानुसन्धेया ॥ ५४ ॥

दिनमिति । दिनं कर्त्तृ रात्रौ निषेधात् दिवाकीर्त्त्यते इति दिवा-
कीर्त्तिर्नापितस्य क्षुरी मुण्डी दिवाकीर्त्तिर्नापिता स्तापसा नरा इत्यमरः ।

तारागङ्कविलोपकस्य जलजं तीक्ष्णत्विषो भिन्दतः
सारम्भं चलता करेण निविडां निष्पीडनां लम्भितः।
छेदार्थोपहृताम्बुकम्बुजरजोजम्बालपाण्डूभव-
च्छङ्खच्छित्करपत्रतामिह वहत्यस्तंगतार्द्धो विधुः ॥ ५७ ॥
यत्पार्थोजविमुद्रणप्रकरणे निर्निद्रयत्यंशुमान्
दृष्टीःपूरयति स्म यज्जलरुहामक्ष्णा सहस्रं हरिः ।

यशस्तुलं भ्रमः यस्य शङ्खस्य सोदर्यौ भ्राता स प्रसिद्धो लिखितो लिखिताख्यो द्विजेन्द्रो ब्राह्मणोत्तमः दिवि स्वर्गेऽस्ति अर्थात्तस्य । किञ्चेह लोके श्रद्धाकरं विश्वासजनकम् अस्य लिखितस्य करच्छेदमपि पश्य इह हारिणो यस्य कलङ्कोपहार माप कलङ्को नितरां स्थाने दण्डस्य स्थानं कारणम् अत्र शान्तिपर्वणि सुद्युम्नोपाख्यानं ततः स पृथिवीपालो लिखितस्य महात्मनः । करौ प्रच्छेदयामास धृतदण्डो जगाम स इति । अत्र विशेषणविशेष्ययोरपि श्लिष्टत्वादभिधायाः प्रकृतार्थक्रियार्थत्वात् प्रकृतार्थध्वनिरेवेति सङ्क्षेपः मन्दाक्रान्तावृत्तम् ॥ ५६ ॥

तारेति। तारास्तारकाएव शङ्काः तेषां विलोपकस्य विनाशकस्य छेदकस्य जलजं पद्मं शङ्खञ्च जलजं शङ्खपद्मयोरिति विश्वः । छिन्दतो नयतः छेदकस्य तीक्ष्णत्विषस्तीग्मांशोः सारम्भं स प्रयत्नं चलतास प्रियमाणेन करेणासिना हस्तेन च निविड़ां गाढां निष्पीडनां स्तम्भनावरोधनञ्च लम्भितः प्रापितः अस्तमदर्शनगतमर्द्धं यस्य स विधुरस्मात् स्तम्भितचन्द्रछेदार्थं शीघ्रमुच्छेदसिध्यर्थ मुपहृतमर्पितपदमम्बुकम्बुजं छिद्यमानं शङ्खजं यद्रज स्तदेव जम्बालः कर्दमस्तेन पाण्डूभवच्छुभ्रीभवत् शङ्खं छिनत्तीति शङ्खछित् तत्करपत्रं क्रकचः क्रकचोऽस्त्री करपत्रमित्यमरः । तस्य भाव स्तत्तां वहति चेत्युत्प्रेक्षा ॥ ५७ ॥

यदिति। यद्यस्मा दंशुमानर्कः पाथोजविमुद्रणप्रकरणे पद्मविकासप्रस्तावे दृष्टीर्दृशो निर्निद्रयति विकासयति यद्यस्माच्च हरिर्विष्णुः जल·

साजात्यं सरसीरुहामपि दृशामप्यस्ति तद्वास्तवं
यन्मूलाऽऽद्रियतेतरां कवितृभिः पद्मोपमा चक्षुषः॥ ५८॥

अवैमि कमलाकरे निखिलयामिनीयामिक
श्रियं श्रयति यत् पुरा विततपत्रनेत्रोदरम्।
तदेव कुमुदं पुनर्दिनमवाप्य गर्भभ्रम-
द्विरेफरवघोरणाघनमुपैति निद्रामुदम्॥ ५९॥

दृशां शिवपूजाकमलानां सहस्रसङ्ख्याम् अक्ष्णा स्वनेत्रेण पूरयति स्म पूर्णां चकार। उक्तं हरिस्तेसाहस्रं कमलबलिमादाय विधिना यदेकोनं तस्मिन् निजमुदहरन्नेत्रकमलमिति। तस्मात् सरसीरुहामपि वास्तवं पारमार्थिकं, स वस्तुजमन्यथा पद्मोल्लासप्रकरणबाध द्विजातीयेन चक्षुषा कनकमयपूरणयदर्चितकमलसङ्ख्यापूरणायोगाद्भेति भावः। कवितृभिः कविभिश्च यत्कालात्य सनद्धरः यस्याः मूला चक्षुषः पद्मेनोपमा औपम्यमाद्रियतेतरां सत्क्रियतेतरां तिङ् व्ययादाम्प्रत्ययः। वैभाव्येन सद्वस्तुनोरपि सुवर्णरजतयोरुपमायोगादिति भावः॥ ५८॥

अवैमीति। यत्कुमुदं कर्तृ कमलाकरे सरसि विततानि विस्तृतानि पत्राण्येव नेत्राणि उदराणि यस्य तत्तादृशं सन्निखिलायां यामिन्यां यामिको जागरिता तत् श्रियमिव श्रियमिति साऽध्यासेपादिदर्शनाभेद। पुरा श्रयति श्रयति स्म पुरा लुङ् चेति चकाराद्भूते लट्। तदेव कुमुदं पुनः दिनमवाप्य गर्भे अन्तः भ्रमतां द्विरेफाणां भ्रमराणां रवघोरणा शब्दाधिक्यं यस्यां तां घोरशब्दइति नौदादिकाद्भावे ल्युट्। निद्रामुदं निद्रासुखं पुनरुपैति रात्रौ जागरितो हि दिवा निद्रातीतिभावः। अवैमीत्युत्प्रेक्षायाम् एकस्मिन् कुमुदे अनेकयो निद्राजागरयोः क्रमेण प्रत्यभिधानादेकस्मिन् अथवा अनेक मित्युक्तलक्षणपर्यायलङ्कारेण पूर्वोक्तनिदर्शनमङ्कीर्णा। पृथिवीवृत्तं जसौ जसयलावसुग्रहयतिश्च पृथिवी गुरुरिति लक्षणात्॥ ५९॥

द्रुह किमुपसि पृच्छाशंसिकिंशब्दरूप-
प्रतिनियमितवाचा वायसेनैष पृष्टः ।
भण फणिभवशास्त्रे तातङः स्थानिनौ का-
विति विहिततुहीवागुत्तरः कोकिलोऽभूत् ॥ ६० ॥

दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत् कोऽप्यधीती कपोतः
कण्ठे शब्दौघसिद्धिक्षतबहुकठिनीशेषभूषानुयातः ।
सर्वं विस्मृत्य दैवात् स्मृतिमुपसि गतां घोषयन्त्यो घुमन्नाम्
प्राक्संस्कारेण सम्प्रत्यपि धुवति गिरः पट्टिकापाठजन्म ॥ ६१ ॥

द्रुहेति। द्रुह्योऽपसि पृच्छां शंसतीति पृच्छाशंसी प्रश्नवाचकः
प्रश्नोऽनुयोगः पृच्छा चेत्यमरः। तस्य किंशब्दस्य रूपे रूपविशेषे काविति
विप्रलम्भप्रथमाद्विवचनान्ते प्रतिनियमितमिति व्यक्तवाचा व्यक्तवाक्ये-
तेन काविति व्यक्तवाक्येनेत्यर्थः। वायसेन काकेन फणिनोभवे तस्य शास्त्रे
पाणिनीये तातङः स्थानिनौ कौ भवत इति पृष्टः
कोकिलः विहिता प्रयुक्ता च तुहि इति वाक् सैवोत्तरं प्रतिवचनं यस्य
स कार्यति तुहीति कोकिलकूजितेन पूर्वोक्तप्रश्नोत्तरत्वमुत्प्रेक्ष्यते ॥ ६० ॥

दाक्षीति। दाक्षीपुत्रस्य पाणिनेस्तन्त्रे शास्त्रे अधीतमनेनाधीती
दाक्षीपुत्रतन्त्र इत्यर्थः। इष्टादिभ्यश्चेतीनिप्रत्ययः सप्तमी विभागेनोक्तस्य
विषयस्य कर्मण्युपसङ्ख्यानात् सप्तमी कोऽपि विद्वानयं कपोतः मूढ-
य कपोतः कण्ठे शब्दौघेषु सिद्धौ अभिव्यक्त्यर्थं क्षता घर्षणेन चूर्णिता
बह्वी या कठिनी खटी रोपणविशेषः कठिना कठिनायां तु कठिने तु
प्रयुज्यत इत्यर्थः। तस्याः शेषोऽवशिष्टप्रचूर्णशेषः स एव भूषा तयाऽ-

पौरस्त्यायां घुसृणसुमनःश्रीजुषो वैजयन्त्याः
सोमैश्चित्तं हरति हरिति नीरकण्ठैर्मयूखैः ।
भानुर्जाम्बूनदरुचिरसौ शक्रसौधस्य कुम्भः
स्थाने पानं तिमिरजलधेर्भाभिरेतद्भवाभिः ॥ ६२ ॥

छिन्ने रेव तमस्तमालगहनग्रासे दवीभावुकै-
रुस्रैरग्य महस्तपत्नसदृशि व्यश्राणि घस्रोत्सवः ।
घर्माणां रयचुम्बितं वितनुते तत् पिष्टपिष्टीकृत-
ध्वान्तादिग्व्योमतमोऽघमर्षणमधुना माघं निदाघद्युतिः ॥ ६३ ॥

नुयातो [illegible] ननु सर्वं विसृज्य निर्गम्येत्येव सम्बन्ध इति भावः । चन्द्रिकापाठेन चन्द्रिकापाठजनकफलपाठजन्येन प्राक्कर्म्मा-रेण प्राक्भवाभ्यासमनया देवान् कर्माभिः स्मृतिं गतां घुसृणां दाधा-स्वदाविति स्वकोक्तौ बोधयन् घुणाक्षरस्तत्त्वं कवयन् सम्मत्यर्पामि शिरो धुनोतीति धूनयामास प्रेक्ष ॥ ६१ ॥

पौरस्त्यायामिति । भानुः [illegible] पौरस्त्यायां दक्षिण पश्चात् पुर-स्यन् तस्यां हरित [illegible] दिशि घुसृणस्य कुङ्कुमस्य सुमनसां या श्रीः शोभा तज्जुषस्तज्जुषायाः वैजयन्त्याः पताकायाः सोमैरपत्यैः स्तद्भवैरित्यर्थः । अपत्यं सोमं तयोः समेत्यर्थः । नीरकण्ठं वालिम-दर्शयित्वं हरति मनोहरो भवतीत्यर्थः । किञ्च जाम्बूनदरुचिरुदयरा-गात् कनककान्तिरसौ भानुः शक्रस्य सौधस्य वैजयन्तस्य कुम्भः सौधाग्र-वर्तिकलश इति ख्यातः एतद्भवाभिरिति एतद्भवाभिः कुम्भभवाभिः भाभिः प्रभाभिस्तिमिरजलधेः पानं उत्पन्नं सौ [illegible] इति [illegible] पक्षे । स्थाने युक्तं [illegible] स्थाने दत्सम । कुम्भसम्भवस्य जलधिपान उचित मिति [illegible] ॥ ६२ ॥

छिन्न इति । छिन्ना खण्डिता वा छिन्नाः महा व्यापन्त्यादिना बहुव्रीहिः

दूरारूढस्तिमिरजलधेर्वाडवश्चित्रभानु-
र्भानुस्ताम्यद्वनरुहवनीकेलिवैहासिकोऽयम् ।
न स्वात्मीयं किमिति दधते भास्वरश्वेतिमानम्
द्यामद्यापि द्युमणिकिरणश्रेणयः शोणयन्ति ॥ ६४ ॥
प्रातर्वर्णनयाऽनया निजवपुर्भूषाप्रसादानदा-
द्देवी वः परितोषितेति निहिताभान्तः पुरीभिः पुरः ।

वह्निर्वाडवो हवसमामान्तः । तैस्तन्मात्रैरेव तमएव तमःकगहनं तस्य धामं गिलने दवीभावुकैर्वह्निभवद्भिः दवदावौ वनानलाविल्यमरः । अभूतत-द्भावेच्वि अस्य च्चावितीकार. लषपतेत्यादिना उकञ् प्रत्ययः । अस्य निदाघद्युतेरस्तैः करैः सहस्रपत्रसरसि पद्माकरेषु घर्मो न्मुखो व्यश्राणि विश्राणितः श्रणदाने कर्मणि क्त इति क्तः । तस्मान्निदाघद्युतिः सूर्य पिष्टपिष्टीकृत कृतकरणात्तत्प्रायीकृतं प्स्मादिग्व्योम नमोऽघमतएव अघम् एनः पङ्कः दुःखव्यसनेष्वघमित्यमरः । रयचुम्बितं रयव्याप्त धर्मांशुः-मातपानामेष मधुना मोघं व्ययमेव वितनुते ॥ ६३ ॥

दूरेति । तिमिरजलधेर्वाडवश्चित्रभानुर्वडवाग्निः तिमिरसंहर्त्रे-त्यर्थः । ताम्यन्त्या क्राथन्त्या वनरुहवन्याः पद्मवनस्य केलिषु क्रीडासु विहासः प्रयोजनं यस्य वैहासिको टीनो प्रयोजनमिति ठञ् । अयं भानुर्दूरमारूढो दूरारूढः द्युमणेः किरणश्रेणयोऽद्यापि द्यामाकाशं शोणयन्ति शोणां कुर्वन्ति किमिति स्वात्मीयं निजं भास्वरं श्वेतिमानं श्वैत्यं मितभास्वरत्वं न दधते न धारयन्ति तस्मादुद्यातुमय सूचितः कालइ-त्यर्थः ॥ ६४ ॥

प्रातरिति । हे वन्दिनः ! अनया प्रातर्वर्णनया प्रभातवर्णनया परि-तोषिता देवी वोयुष्माभ्यं निजवपुषो भूषणान्येव प्रसादान् पारितोषिका-ण्यदात् इत्युक्तेति शेषः गम्यमानार्थत्वात् अप्रयोगः । आन्तःपुरिकाभि

सूता मण्डनमण्डलीं परिदधुर्माणिक्यरोचिर्मय-
क्रोधावेगसरागलोचनरुचा दारिद्र्यविद्राविणीम्॥ ६५॥
आगच्छन्नभणतामुषः क्षणमथातिथ्यं दृशोरानशे
स्वर्गङ्गाम्बुनि वन्दिनां कृतदिनारम्भाप्लुतिर्भूपतिः।
आनन्दादतिपुष्पकं रथमधिष्ठाय प्रियायौतुक-
प्राप्तं तैरवरागतैरविदितप्रासादतो निर्गमः॥ ६६॥

अन्तःपुरे नियुक्ताभिः तत्र नियुक्तया ठञ्। पुरोऽग्रे निहितां माणिक्यरोचिर्मय्यार्मणिमय्याः पद्मरागप्रभायाः क्रोधावेगेन क्रोधरसेन सरागया लोचनरुचा दारिद्र्यस्य विद्राविणीं मुत्पाटनीं तपस्विनीं मित्युत्प्रेक्षा मण्डनमण्डलीमाभरणराशिं सूता वन्दिनः सूतः पारदः वन्दिनोरिति विश्वः। परिदधुर्धारयामासुः॥ ६५॥

आगच्छन्निति। अथ भूपतिर्नलः स्वर्गङ्गाम्बुनि मन्दाकिनीप्रवाहे कृतदिनारम्भाप्लुतिः कृतप्रातःस्नानः सन् प्रियायाः यौतुके उपाहरणे प्राप्तं भीमदत्तमतिक्रान्तं पुष्पकमतिपुष्पकमिति अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः द्विगुप्राप्तापन्नेत्यादिना परवल्लिङ्गताप्रतिषेधः। तं रथमधिष्ठायाध्यास्य आगच्छन् प्रत्यागच्छन् उषःक्षणं भणतां तथैव प्रातःकालं वर्णयतामेव अर्थिनां वन्दिनां दृशोर्दृगामित्यर्थः। आतिथ्यमानशे प्राप्तस्तैर्दृष्ट इत्यर्थः। अश्नोतेश्चेति नुडागमः। अपरागतैरनपेतैः तत्रैव स्थितैरपीत्यर्थः। तैर्वन्दिभिः प्रासादतः निर्गमोऽविदितो येन सः अतएव पूर्वश्लोके देव्यैव पारितोषिकं दत्तमित्युक्तम्॥ ६६॥

श्रीहर्षमिति। एकां मुख्यां नवार्धघटनामपूर्वार्धरचनां त्यजतो यस्य विधेः परार्धहृद् तस्य पूरार्धहृदिति विधत्तेऽस्तीति मध्यमलोपः

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
एकां न त्यजतो नवार्थघटनामेकान्नविंशो महा
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः॥६७॥

एकोनऊनविंशः एकान्नविंशः एकोनविंश इत्यर्थः। ऊनार्थे चात्र नञ् तत इति काशिका विग्रहे न समासः एकादिश्चैकस्य चादुगिति नञ् प्रकृतिभावः एकशब्दस्य उगागमश्च गतमन्यत्॥६७॥

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचल-
मल्लिनाथविरचितायां नैषधव्याख्यायां जीवातुसमाख्यायां
एकोनविंशतिः सर्गः।

# नैषधचरितम् ।

## विंशः सर्गः ।

सौधाद्रिकुट्टिमानेकधातुकाधित्यकातटम् ।
स प्राप रथपाथोभृद्वातजातजवो दिवः ॥ १ ॥

ततः प्रत्युद्गगाद्भैमी कान्तमायान्तमन्तिकम् ।
प्रतिची सिन्धुवीचीव दिनोद्धारे सुधाकरम् ॥ २ ॥

स दूरमादरं तस्या वदने मदनैकदृक् ।
दृष्टमन्दाकिनीहेमारविन्दश्रीररविन्दत ॥ ३ ॥

सौधेति । वातवत् वाताज्जातजवो वातवेगः स पूर्वोक्तो रथप[illegible]- पाथोभृत् जलधरः दिवः स्वर्गात् [illegible] द्यौश्च स्वर्गव्योम्नोरिति विश्वः । सौधस्य [illegible] [illegible] कुट्टिमः बद्धभूमि कुट्टिमोऽस्त्री निबद्धा भूरि- त्यमरः । तदेवानेकधातुद्रव्य [illegible] कृष् । अधित्यका ऊर्ध्वभूमिप्रदेशः तस्यास्तटं प्राप ॥ १ ॥

तत इति । ततो [illegible] अन्तिकमायान्तं कान्तं दिन- स्योद्धारे [illegible] दिनोद्धारे [illegible] इति परच्छेदः । अन्तिकमायान्तं सुधाकरं प्रतीची सिन्धुवीचिर्वेलोर्मिरिव प्रत्युद्गगात् [illegible] इति गादेशः । गतिबुद्धीत्यादिना [illegible] ॥ २ ॥

स इति । दृष्टा मन्दाकिनीहेमारविन्दस्य श्रीर्येन सहृदयमन- जातप्रियामुखारविन्दस्तुति रित्यर्थः । मदनैकदृक् कामैकशरणः स नल

तेन स्वर्देमशन्देशमर्पितं सा करोदरे।
बभ्राज बिभ्रती पद्मं पद्मेवोन्निद्रपद्मदृक् ॥ ४ ॥
प्रियेणाल्पमपि प्रत्तं बहु मेनेतरामसौ।
एकलक्षतया दध्यौ यत्तमेकवराटकम् ॥ ५ ॥
प्रेयमाऽवादि सा तन्वी त्वदालिङ्गनविघ्नकृत्।
समाप्यतां विधिः शेषः क्लेशश्चेतसि चेन्न ते ॥ ६ ॥
क्रीतावान्नर्ममर्मावित् विधिरद्य ते।
इति तं मनसा रोषादवोचद्वचसा न सा ॥ ७ ॥

---

तस्याः प्रियाया वदने दूरमत्यन्तमादरं मर्विन्दत तृष्णां प्रापे-त्यर्थः ॥ ३ ॥

तेनेति। तेन प्रियेणार्पितं दत्तं स्वर्देशस्य सन्देश सूचकं स्वर्गः भूमौ स्वयमागत इति ज्ञापयन्निमित्यर्थः। पद्मं हेमारविन्दं करोदरे करतले बिभ्रती तथा उन्निद्रपद्मदृक् विकचारविन्दलोचना पद्मेव पद्मोपमा साक्षादेव लक्ष्मीरिव बभ्राज रेजे फणाश्च मप्तानामपि विकल्पादेत्वाभ्या-सलोपाभाव. ॥ ४ ॥

प्रियेणेति। असौ भैमी प्रियेण कान्तेनेड्जनेन च प्रत्तं दत्तम् अच उपसर्गात्तः इति दत्तादेशः। अल्पमपि वस्तु बहु मेनेतरां अतिशयिकं पूज्यं च मेनेतरां तिङ्व्यन्तादः मुप्रत्ययः। कुतः यद्यस्मात्कारणादेको मुख्यो वराटकः। वा पुंसि पद्मं नलिनमित्यमरः। एकवराटकं कपर्दश्च कपर्दो वराटक इति हलायुधः। एकलक्षतया तदेकलक्षत्वेन लक्षगुणित-तधनत्वेन दध्यौ मेने लक्षञ्च सङ्ख्यायामिति विश्व। प्रियदत्तं वराटकमपि रत्नादतिरिच्यत इति भाव. ॥ ५ ॥

प्रेयमेति। सा तन्वी कृशाङ्गी प्रेयसा प्रियतमेनावादि कथिता तदेवाह हे! प्रिये! ते तव चेतसि क्लेशो न चेत्त्वदालिङ्गनस्य विघ्नकृत् शेषो विधिरनुष्ठानं समाप्यतां समाप्तिरनुष्ठायता मित्यर्थः ॥ ६ ॥

क्रीतेति। नर्मण. क्रीडासुखस्य मर्मावित् भर्मविध्यतीति मर्माभिघातको

क्षणविच्छेदकादेव विधेर्मुग्धे ! विरज्यसि।
विच्छेत्ताऽहं चिरं न त्वा हृदाऽऽह स्म तदा कलिः॥ ८॥
सावज्ञेवाथ सा राज्ञः सखीं पद्ममुखीमगात्।
लक्ष्मीः कुमुदकेदारादारादम्भोजिनीमिव॥ ६॥
समासावपि मा सम्भूत् कलिद्वापरवत्परः।
इतीव नित्यमत्रे तां स त्रेतां पर्य्यतूतुषत्॥१०॥

नहि इत्यादिना पूर्वस्य दीर्घः। क एतावान्निधिरद्य ते विद्यते कुतोऽस्तीति सा रोषादस्तीति सारेण तत्क्षणसायोचत् वचसा नाचोदत् लज्जादाक्षिण्यादिति भावः॥ ७॥

क्षणेति। हे मुग्धे ! हे मूढे ! भैमि ! क्षणविच्छेदकात् क्षणमात्रविघ्नकारिणो विधेरनुष्ठानादेव विरज्यसि किन्तु त्वानौ द्वितीयाया इति त्वादेशः। चिर चिरकाल विच्छेत्ताहं विच्छेत्स्यामि च्छिदः स्वरितेत्वाल्लुटि तङि तासेरेरे एतेति सकारस्य हकारः। इति कलिः कलिपुरुषो हृदा आह स्म किन्तु रन्ध्रान्वेषी तिष्ठ मीति भावः॥ ८॥

सावज्ञेति। अथ सा भैमी सावज्ञेव स्वकर्मगतक्लिमाभावादेव वभ्राजेवेत्यर्थः सा राज्ञो राजानं विहाय कर्मणि ल्यप्लोपे पञ्चमी। पद्ममिव च मुख यस्यास्तां आसन्नसमीपे सखीं लक्ष्मीः कुमुदकेदारादारात् कुमुदाकरात् आरात् तां विहायाम्भोजिनीमिवागात् अवज्ञाता हि विहाय गच्छन्तीति भावः॥ ६॥

समेति। कलिद्वापरवत्कलिद्वापरराविवासौ त्रेतापि परोऽन्यः समासावपि मा सम्भूत् माङि लुङि न माङ्योगादडभावः। इतीवेति मत्येव नित्यमत्रे नित्ययज्ञे अग्निहोत्रे तस्य तद्यानिहोत्रस्थत्वात् नित्यत्वावगमादयादित्यर्थः। सत्रमाच्छादने यज्ञनित्यमरः स नलस्तां त्रेतामग्नित्रयं त्रेतायुगं त्रेताग्निस्त्रयी त्रेतायुग इत्यमरः। पर्यतूतुपत् हविषा परितोषयामासुः सत्कर्मणि पतयइत्यादिना विकल्पेनोपधाया ह्रस्व॥ १०॥

क्रियां प्राह्णेतनीं कृत्वा निषेधन् पाणिना सखीम् ।
कराभ्यां पृष्ठगस्तस्या न्यमीमिलदसौ दृशौ ॥ ११ ॥
दमयन्त्या वयस्याभिः सहास्याभिः समीक्षितः ।
प्रसृतिभ्यामिवायामं मापयन् प्रेयसीदृशोः ॥ १२ ॥
तर्किताऽऽलि ! त्वमित्यहैवाणीका पाणिमोचनात् ।
ज्ञातस्पर्शान्तरा मौनमानशे मानसेविनी ॥ १३ ॥
साऽवादि सुतनुस्तेन कोपस्तेनायमौचिती ।
त्वां प्राप्य यत्प्रमादेन प्रिये ! तन्नाद्रिये तप. ॥ १४ ॥

क्रियामिति। असौ नलः प्राह्णेतनीं प्राह्णेभवां साय चिरमित्यादिना ट्युट्प्रत्ययः। तस्मादेव निपातनात्प्राह्णेतनीं इत्येवं क्रिया मनुष्ठानं कृत्वा सखीं पाणिना हस्तसंज्ञया निषेधन् तस्या भैम्याः पृष्ठगश्च स्थितः कराभ्यां पाणिभ्यां दृशौ लोचने न्यमीलयत् मीलयति स्म भ्राजभासेत्यादिना एकत्वेनोपधाया ह्रस्वः ॥ ११ ॥

दमयन्त्या इति। प्रसृतिभ्यां निकुब्जपाणिभ्यां प्रयोज्याभ्यां पाणिर्निकुब्जः प्रसृतिरित्यमरः। प्रेयसी दृशोरायामं दैर्घ्यं लोचने न्यमीलयत् मापयन्निव स्थितः माते माङ्गोर्वा णयन्तात् लटः शत्रादेशः। स नलः सहास्याभिः दमयन्त्या वयस्याभिः सखीभिस्समीक्षितः सहासम् ऐक्षतेत्यर्थः ॥ १२ ॥

तर्कितेति। हे आलि ! त्वं तर्किता अवधारिता इति ह्रस्वः। इति अहो मां जहीहीत्येवं हृपा वाणी यस्याः सा शैषिकः कप् मानसेविनी पाण्योर्मोचनादपादानात् ज्ञातं स्पर्शान्तरं यया सा निश्चितप्रियपाणिस्पर्शासतीत्यर्थः। मौनं मानशे न किञ्चिदूचे कोपादिति भावः ॥ १३ ॥

सेति। सुतनूर्भैमी तेन नलेनावाचि उक्ता वचेः कर्मणि लुङ् तदेवाह। हे प्रिये ! अयं कोपस्तव नौचिती अनौचित्यमिति भावः।

निशि दास्यङ्गतोऽपि त्वां स्वात्वा यन्नाभ्यवीवदम्।
तं प्रवृत्तासि मन्तुं चेन्मन्तुं तद्वद वन्द्यसे ॥१५॥

इत्येतस्याः पदासत्त्यै पत्यैषा प्रेरितौ करौ।
रुद्धा सकोपं सातङ्कं तत्कटाक्षैरमूमुहत् ॥ १६ ॥

अवोचत ततस्तन्वीं निषधानामधीश्वरः।
तदपाङ्गचलत्ताराझात्कारवशीकृतः ॥ १७ ॥

कटाक्षकपटारब्धदूरलङ्घनरंहसा।
दृशा भीत्या निवृत्तं ते कर्णकूपं निरूप्य किम् ॥ १८ ॥

तथा हि यस्य तपसः प्रसादेन त्वां प्राप प्राप्तवानस्मि आप्नोतेर्लुङ् पुषा-दित्वादिदमादेशः। तत्तपो नाद्रियसे अत्र काकुः ॥ १४ ॥

निशीति। हे प्रिये! निशि दास्या दासत्वं गतोऽपि त्वां स्वात्वा स्नानाद् गत्वा नाभ्यवीवदम् अभिवादितवानस्मीति यत्, वदेरभिधानार्था-ण्ण्यन्तादौरादिकात् लुङि चङि उपधायाः ह्रस्वः। तं प्रणामं मन्तुमपराधं "आगोऽपराधो मन्तुश्च" इत्यमरः। मनेरौणादिकस्तुन् प्रत्ययः। मन्तुं ज्ञातुं मन्यतेस्तुमुन् प्रत्ययः। प्रवृत्तासि दासस्याप्रणतेरपराधत्वादिति भावः। तद्वद वन्द्यसे प्रणिपातप्रतीकारत्वात्तस्येति भावः ॥ १५ ॥

इतीति। इतीत्थमेतस्याः पदासत्त्यै पादग्रहणाय पत्या प्रियेण प्रेरितौ प्रसारितौ करौ रुद्धा निरुध्य सकोपमनङ्गीकरणात् सातङ्कं सभयं तं प्रियं कटाक्षैरमूमुहत् मोहयति स्म किं। किञ्चित्स्मितमिश्रादपाङ्गदर्शना-द्रागपरवशोऽभूदिति भावः ॥ १६ ॥

अवोचतेति। ततः कटाक्षवीक्षणानन्तरं तस्याः प्रियायाः अपाङ्गे नेत्रान्ते चलता प्रसरता ताराझात्कारेण कनीनिकास्फुरितेन वशीकृतो निषधानामधीश्वरो नलस्तन्वीं प्रियामवोचत ब्रवीतेर्लुङि रूपम् ॥ १७ ॥

कटाक्षेति। कटाक्षकपटेनापाङ्गदर्शनव्याजेनारब्ध सुपक्रान्तं

सरोपाऽसि सरोजाक्षि! त्वमुदेषि मुदे मम।
तस्याऽपि शतपत्रस्य सौरभायैव सौरभा ॥ १९ ॥
क्षेत्तुमिन्दौ भवद्वक्त्रबिम्बविभ्रमविभ्रमम्।
शङ्के शशाङ्कमानङ्क्षे भिन्नभिन्नविधिर्विधिः ॥ २० ॥
ताम्रपर्णीतटोत्पन्नैर्मौक्तिकैरिन्दुकुक्षिजैः।
बहुस्पृष्टतरा वर्णाः प्रसन्नाः स्वादवस्तव ॥ २१ ॥

दूरमङ्कुरर्द्दो यया तथा ते दशा कर्णान्त कूपमनिक्रम्य निरीक्ष्य भीत्या कूपदर्शनभिया निवृत्तं किं निरन्तम् ॥ १८ ॥

सरोपेति। हे सरोजाक्षि! सरोपा कदाऽसि त्वं रुष्टासीति वाक्य-मिति भावः। मम मुदे हर्षाय उदेषि भवसि तथा हि तस्या उष्णापि सूर्यस्येयं सौरी सूर्यसम्बन्धिनी अगस्त्यमत्स्यानाम् उपधा इत्यत्र सूर्यति-ष्ययोर्यकारलोपः। सौरी च सा भा च सौरभा सूर्यप्रभा स्त्रियाः पुंव-दित्यादिना पुंवद्भावः। शतपत्रस्य सौरभायैव सुरभित्वायैव न तु मान-हायै दृष्टान्तालङ्कारः ॥ १९ ॥

क्षेत्तुमिति। भिन्नभिन्नोऽत्यन्तविलक्षणो विधिर्निर्माणव्यापारो यस्य स एव लक्षणदृष्टिधिरः विधिरिन्दौ भवत्या वक्त्रबिम्बं मुखमण्डलं सर्व-नाम्नो वृत्तिमात्रे पुंवद्भावः। तस्य यो विभ्रमो विलासः विभ्रमः संशये भ्रान्तौ शोभायाञ्चेति यादवः। तत्र विभ्रमं भ्रान्तिं क्षेत्तुं तुमुनादेशः। शशाङ्कं शशचिह्नमानङ्क्षे अङ्कितवान् अकिलक्षण इति धातोर्भौवादिका-ल्लिटि तुन् तस्मान्नट् ह्रिहृन्दतोडागमः ॥ २० ॥

ताम्रेति। प्रमदा स्वस्याः स्वादोऽमधुरास्तव वर्णा अक्ष-राणि ताम्रपर्ण्या नद्यास्तटे तटविशेषे उत्पन्नैरिन्दुकुक्षिजैरिन्दु-गर्भोत्पन्नैश्च मौक्तिकैः बहुस्पृष्टतरा अतिशयेन बहुस्पृष्टा स्तव पूर्वं स्वास्या स्तरं माधुर्यञ्चेति द्रष्टव्यम् ॥ २१ ॥

त्वद्गिरः क्षीरपाथोधेः सुधयैव सहोत्थिताः ।
अद्य यावदहो धावद्दुग्धलेपलवस्मिताः ॥ २२ ॥
पूर्वपर्वतमाश्लिष्टचन्द्रिकश्चन्द्रमा इव ।
अलञ्चक्रे स पर्यङ्कमङ्कसङ्क्रमितप्रियः ॥ २३ ॥
प्रावृडारम्भणाम्भोदः स्निग्धो द्यामिव स प्रियः ।
परीरभ्य चिरायास विश्लेषायाससमुक्तये ॥ २४ ॥
चुचुम्बास्यमसौ तस्या रसमग्नः स्मितस्नुतम् ।
नभोमणिरिवाम्भोजं मधुमध्यानुबिम्बितः ॥ २५ ॥

त्वदिति। हे प्रिये! त्वद्गिरः सुधया सहैव क्षीरपाथोधेः क्षीरसागरादुत्थिताः अद्य यावत् अद्यपर्यन्तमपीत्यर्थः। धावन्ति वहिर्निर्गच्छन्ति दुग्धलेपिनां क्षीरसेकानां लवाः स्मितानि यासान्ता अहो स्मितव्याजेन क्षीरलेपदर्शनात्त्वद्गिरां सुधया क्षीरेण सार्धं क्षीरसागरोत्पन्नत्वमुन्नीयते अन्यथा वैयर्थ्यादिति भावः ॥ २२ ॥

पूर्वेति। आश्लिष्टा चन्द्रिका येन सएव चन्द्रमा पूर्वपर्वतमुदयाद्रिमिवाङ्कसङ्क्रमिता अङ्कारोपिता प्रिया येन सोऽङ्कसङ्क्रमितप्रियः अप्रियादिष्विति वचनात् प्रिया परस्य पूर्वपदस्य स्त्रिया पुंवदित्यादिना पुंवद्भावः। नलः पर्यङ्कं शयनमलञ्चक्रे ॥ २३ ॥

प्रावृडिति। स्निग्धोऽनुरक्तो मसृणश्च स नलः आरम्भणे वर्षाप्रारम्भे अम्भोदो मेघो द्यामिव आकाशमिव प्रियां परीरभ्य विश्लेषायाससमुक्तये वियोगक्लेशपरिहाराय चिराय स चिरमास विश्लेषभिया चिरमास्थित आश्लिष्यावस्थित इत्यर्थः। आसेति निरुपसर्गमिति शकटायनः वामनश्च। असगतिदीप्त्यादानेष्विति धातोर्लिट्य ह आसेत्याह आसेत्यासेरिति ॥ २४ ॥

चुचुम्बेति। रसमग्नो रागमग्नो नलः स्मितस्नुतं प्राप्तमदहासं

अथाहूय कलां नाम पाणिना स प्रियासखीम् ।
पुरस्तादेशितामूचे कर्तुं नर्मणि साक्षिणीम् ॥ २६ ॥
कस्मादस्माकमज्ञास्या वयस्या दयते न ते ।
आसक्ता भवतीष्वन्यं मन्ये न बहु मन्यते ॥ २७ ॥
अन्वग्राहि मया प्रेयान्निशि स्वोपनयादिति ।
न विप्रलभते तावदालीरियमलीकवाक् ॥ २८ ॥
आह स्मैषा नलादन्यं न जुषे मनसेति यत् ।
यौवनानुमितेनास्यास्तन्मृषाऽभून्मनोभुवा ॥ २९ ॥

प्राप्तविकासञ्च आस्यं मधुमध्ये अनुबिम्बितोनभोमणौ रक्ताम्भोजमिव चुचुम्ब ॥ २५ ॥

अथेति । नथ नलः कलान्नाम प्रियासखीं पाणिना संज्ञया आहूय नर्मणि विनोदे साक्षिणीं कर्तुं पुरस्तादग्रे निवेशिता मुपवेशिता मूचे ॥ २६ ॥

कस्मादिति । हे कले ! अज्ञास्या वीवदस्या सखी कस्मात् अस्माकं न दयते अस्मान्नानुकम्पते अधीगर्थेत्यादिना कर्मणि षष्ठी अथवा भवतीष्वासक्ता सती अन्यम् अन्यजनञ्च न बहुमन्यते न गणयतीति मन्ये ॥ २७ ॥

अन्वग्राहीति । अलीकवागनृतवागियं वः सखी मया निशि स्वोपनयादात्मसमर्पणात्प्रेयान् प्रियतमः अन्वग्राहि अनुगृहीत इत्येव तावदालीर्न विप्रलभते न वाचयति काकुः । तस्मात्तदेव न श्रद्धेयमित्यर्थः ॥ २८ ॥

आहेति । एषा सखी नलादन्यन्मनसापि न जुषे न सेव इति यदाहस्म ऊचे तद्वचनं यौवनानुमितेन यौवननिश्चितेन मनोभुवा मृषाभूत्

आस्यसौन्दर्य्यमेतस्याः शृणुमो यदि भाषसे।
तद्धि लज्जानमन्मौलेः परोक्षमधुनाऽपि न ॥ ३० ॥
पूर्णयैव द्विलोचन्या सैषालीरवलोकते।
द्राग्दृगन्ताणुना मान्तु मन्तुमन्तमिवेक्षते ॥ ३१ ॥
नालोकते यदेदानीं मामियत्तेन कल्पये।
योऽहं दूत्ये ऽनया दृष्टः सोऽपि व्यस्मारिषीदृशा ॥ ३२ ॥
रागं दर्शयते सैषा वयस्याः सूनृतामृतैः।
मम त्वमिति वक्तुं मां मानिनी मौनिनी पुनः ॥ ३३ ॥

अत्र मुख्यार्थेनान्यमेवार्थं दुर्जनत्वात् अन्यथा सिद्धकामः सेवां कलेनोक्ता परिहरतीति तात्पर्यार्थः ॥ २९ ॥

आस्येति। हे कले! एतस्या आस्यसौन्दर्यं यदि भाषसे शृणुमो हि यस्माल्लज्जया नमन्मौलेर्नम्रशिरसोऽस्या मदास्यसौन्दर्यमधुनापि परोक्षं प्रत्यक्षं यत्तन्नाम त्वया क्रियतामिति ॥ ३० ॥

पूर्णेति। सैषा पूर्णया द्वयोर्लोचनयोः समाहारेण द्विलोचन्या विलोकयत्यर्थः। आलीः सखीरवलोकते मान्तु मन्तुम-पराधिनमिव द्राक् क्षणिकं दृगन्ताणुना कटाक्षलेशेन अन्तरीक्षते न तु स्थिरया पूर्णये-त्यर्थः ॥ ३१ ॥

नेति। यस्मादिदानीमियं नावलोकते तेनानालोकनेन कल्पये ऊहे तदेवाह योऽहं दूत्ये दूत्यकाले अनया दृष्टः सोऽहमीदृशा मामपश्यता नयनेन व्यस्मारिषि विस्मृतोऽस्मि स्मरतेः कर्मणि लुङ्। चिरवृत्ते हि अविस्मरणे पूर्ववत्सादरं पश्येदिति भावः ॥ ३२ ॥

रागमिति। सैषा प्रिया सूनृतामृतैः सत्यवाक्यामृतैः सूनृतं प्रियं सत्यमित्यमरः। वयस्याः सखीः रागं दर्शयते ताभ्यो विस्रब्धं कथयतीत्यर्थः। अभिवदिदृशोरात्मनेपदं उपसङ्ख्यानमिति न्यायादिकर्तुः कर्मत्वं णिचश्चे-

कां नामन्त्रयसे नाम नामग्राहमियं सखी ।
कले ! नलेति नाम्नाकों स्पृशत्याह्वां तु जिह्वया ॥ ३४ ॥

अस्याः पीनस्तनव्याप्ते हृदयेऽस्मासु निर्दये ।
अवकाशलवोऽप्यस्ति नात्र कुत्र बिभर्त्तु नः ॥ ३५ ॥

अधिगत्येदृगेतस्या हृदयं मृदुतामुचोः ।
प्रतीम एव वैमुख्यं कुचयोर्युक्तवृत्तयोः ॥ ३६ ॥

इति मुद्रितकण्ठेऽस्मिन् मोल्लुकण्ठमभिधाय ताम् ।
दमयन्तीमुखाधीतस्मितयाऽसौ तया जगे ॥ ३७ ॥

त्यात्मनेपदम् । मम त्व मिति मां पुनर्वक्तुं मदीयस्त्वम् इत्येतावन्मात्र वक्तुं मानिनी मौनिनी वाचयमा ॥ ३३ ॥

कामिति । हे कले ! इयं ते सखी कां नाम गृहीत्वा नाम ग्राहमाम्ना हविपद्दोरिति णमुल् नामन्त्रयते नाम न सम्बोधयति नाम सर्वे अस्या मन्त्रयन्त एवेत्यर्थः । अस्माकं मियमसमकी यग्रहणदो रित्यादिना ई प्रत्यय । तस्मिन्नुगे चेत्यादिना अन्तक इंय टिड्ढाणञित्यादिना ङीप् नलेति आह्वां त्वामाख्यातम् आख्याह्वे अभिधानं चेत्यमरः जिह्वया न तु स्पृशति ॥ ३४ ॥

अस्या इति । अस्याः सम्बन्धिन्याः पीनाभ्यां स्तनाभ्यां व्याप्ते आक्रान्ते अतएवास्मासु विषये निर्दये हृदये अवकाशलवोऽपि नास्ति अत्र हृदये कुत्र नोऽस्मान् बिभर्त्तु न कुत्रापीत्यर्थः ॥ ३५ ॥

अधिगत्येति । एतस्या हृदयमीदृक्कठिन मधिगत्य ज्ञात्वा मृदुतामुचोस्तावत्काठिन्यभाजोरित्यर्थः । अन्यथा दुर्नीति रिति भावः । युक्तौ मिथःश्लिष्टौ वृत्तौ वर्त्तुलौ तयोर्युक्तवृत्तयोर्विशेषणसमसः । तथा साधुचरितयोश्च कुचयोर्वैमुख्य मनभिव्यक्तमुखत्व मौदासीन्यं प्रतीमोजानीम एव वयन्तु निश्चितमत्र युक्तमो दृशा कौटिल्यादिति भावः ॥ ३६ ॥

इतीति । अस्मिन्नेकान्ते मोल्लुकण्ठ मोपहासमिति तां कलामभिधाय

भावितेयं त्वया साधु नवरागा खलु त्वयि।
चिरन्तनानुरागार्हं वर्त्तते न: सखी: प्रति ॥३८॥

स्मरशास्त्रविदा सेयं नवोढा नस्त्वया सखी।
कथं सम्भुज्यते बाला कथमस्मासु भाषताम् ॥३९॥

नासत्यवदनं देव! त्वा गायन्ति जगन्ति यम्।
प्रिया तस्य सरूपा स्यादन्यथालपना न ते ॥४०॥

सोत्प्रासवचनन्तु सोप्रास. सोपहासास्त्वय समा इति यादव। मुद्रित कण्ठे निवृत्तवाचि तूष्णीम्भूते सति दमयन्तीमुखार्थोतस्मितया तां दृष्ट्वा विस्मयमानयेत्यर्थ। तया असौ नलो जगे जगदे नलो गदित इत्यर्थ: क्रियाग्रहण मिति क्रियया अभिप्रायात्सम्प्रदानत्वं तथा च विवक्षित-कर्मत्वाद्भावे लिट् ॥३७॥

यदुक्तं पूर्णयापीत्यादि तत्र तदुत्तरमाह भावितेति। इयं सखी त्वया साधु भाविता किन्तु त्वयि नवरागा नूतनपरिचया खलु अत स्तदनु-रूपं वर्तते सखी: प्रति चिरन्तनस्य चिरन्तनानुरागस्यार्हं मनुरूप वर्तते अतोऽस्य सुपालम्भ उचित इति भाव ॥३८॥

यदुक्तं मन्यसाहीत्यनेन तत्रोत्तर श्लोकद्वयेनाह स्मरेत्यादिना बाला विदग्धा नोऽस्माकं नवं सुचिरमेवोढा परिणीता सेय मिदं प्रथमसङ्गमा बाला सुभगा सखी न: स्मरशास्त्रविदा कामतन्त्रवेदिना चिराभ्यस्तं वा सम्भोगम्-विदग्धेनेत्यर्थ। त्वया कथं सम्भुज्यते विरुद्धं सम्भोक्तुं शक्यते कथं वास्मासु अस्मानधिकृत्य भाषतां कथमस्माभ्यं स्वचेष्टितं कथयिष्यतीत्यर्थ। तस्मादसौ भावित्वेऽपि कामशास्त्रवेदिनस्तवोपालम्भ उचित इति भाव: ॥३९॥

यच्चैव यद्विषये पवनान्नीकृतागिति तत्रोत्तरमाह नासत्येति। हे देव! महाराज! जगन्ति लोका यं गात्रामत्र्ययोरश्विनो कुमारयोरिव वदनमास्य यस्य गायन्ति। तस्य महानुभावस्य ते तव सरूपा सुन्दरी

मनोभूरस्ति चित्तेऽस्याः किं नु देव ! त्वमेव सः ।
त्वद्दर्शस्थितिभूर्यस्मान्मनः सख्या दिवानिशम् ॥४१॥

सतस्तेऽथ मृगीचित्ते प्रतिच्छाया स मन्मथः ।
त्वयास्य समरूपत्वमतनोरन्यथा कथम् ॥४२॥

कः स्मरः कस्त्वमत्रेति सन्देहे शोभशोभयोः ।
त्वय्येवार्थितया सेयं धत्ते चित्तेऽथवा युगम् ॥४३॥

प्रिया कान्ता अन्यथा प्रतिकूलमाचरणं भाषणं यस्याः स्त द्दर्शी स्यात् न भवितेति तात्पर्य्यम् स्वामिद्रोहदोषसम्भावनयापीति भाव ॥ ४० ॥

यदुक्तमाह सेत्यादिश्लोके तस्योत्तरं श्लोकत्रयेणाह मनोभूरित्यादि । हे देव ! राजन् ! देव परिधने राज्ञीति विश्व । अस्याश्चित्ते मनोभूरस्ति किन्तु स मनोभू स्त्वमेव कृत. यद्यस्मात्सख्या दिवानिश सदा त्वद्दर्शस्थितिभूस्त्वद्दर्शस्थानस्याश्रय मनोभूराश्रयो यस्येति व्युत्पत्त्या त्वमेव मनोभू मनसि भवतीति व्युत्पत्तौ त्वदभिलाषिण्याः परत्व दुभय थापि न पुरुषान्तरसेवाशङ्कात्र इति भावः ॥ ४१ ॥

सत इति । अथेति पक्षान्तरे अथवा सः मन्मथ सखीचित्ते सतो वर्त्तमानस्य ते तव प्रतिच्छायः प्रतिबिम्ब अन्यथा इत्थ न चेत् अतनोरशरीरस्यास्य त्वया समरूपत्व कथ धर्म्यभावे धर्मानवकाशात् पूर्ववद्देवाभिप्राय ॥ ४२ ॥

क इति । अथवा हे देव ! उभयोर्युवयोः शोभया समानधर्मेण हेतुना अनयोर्मध्ये स्मरः कस्त्वमपि क इति सन्देहे सति सेयं भैमी त्वय्येवार्थितया चित्ते युगं त्वां कामञ्च त्यदाद्येकशेषः । धत्ते त्वयि मन्मथयोः कतरस्त्वमिति सन्देहे तदुच्छेदस्याभावात् सन्निधानादनुपेक्ष्यत्वं उभावपि चित्ते धत्ते न त्वं स्यादित्यर्थः ॥ ४३ ॥

त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वदर्शनात् ।
शङ्कया पङ्कजाक्षी त्वां दृगंशेन स्पृशत्यसौ ॥४४॥
विलोकनात् प्रभृत्यस्या लग्न एवासि चक्षुषोः ।
स्वेनालोकय शङ्का चेत् प्रत्ययः परवाचि कः ॥४५॥
परीरम्भेऽनयारभ्य कुचकुङ्कुमसङ्क्रमम् ।
त्वयि मे हृदयस्यैवं राग इत्युदितैव वाक् ॥४६॥
मनसाऽयं भवन्नामकामसूक्तजपव्रती ।
अक्षसूत्रं सखीकण्ठमुम्बत्येकावलिच्छलात् ॥४७॥

यदुक्तं नालोकत इत्यादि श्लोकद्वये तदुत्तरमाह । त्वयीति । पङ्कजाक्षी असौ दमयन्ती भैमी त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वदर्शनात् त्वां दृगंशेनापाङ्गेन शङ्कया स्पृशति अतो नोपालम्भावकाश इति भावः ॥४४॥

विलोकनादिति । विलोकनात्प्रभृति दुग्धकालदर्शनादारभ्य कार्म्पिल्यात्प्रभृत्यादिति भाष्यकारप्रयोगादेव प्रभृतितप्रयोगात् पञ्चमीति कैयटः । अस्याश्चक्षुषोर्लग्न एवासि शङ्का चेत् मदुक्तार्थविश्वासश्चेत् तत्र्यं परवाचि परोक्तौ कः प्रत्ययः का श्रद्धा किन्तु स्वेनालोकय स्वयमेव पश्य पुरस्थमहगवस्तुनः कनीनिकायाः सांनिध्यान्नालोकत इत्यादि वाचो नोक्तिरसक्तिरित्यर्थः ॥४५॥

अथ यदुक्तं राग दर्शयता इत्यादिश्लोके तदुत्तरमाह परीरम्भ इति । अथानया प्रेषितया परीरम्भे आलिङ्गनकर्मणि कुचकुङ्कुमस्य संक्रमं संक्रान्तिमारभ्य तमादिं कृत्वा त्वयि विषये मे हृदयस्य राग एव मे मम वागेव उदितैव उक्तैव अतः सख्यप्यनुरक्ता न भवति नोपालम्भ इत्यर्थः ॥४६॥

कामामन्त्रयत इति श्लोके यदुक्तं तस्योत्तरमाह मनसेति । अयमिति

अध्यासिते वयस्याया भवता महता हृदि।
स्तनावन्तरसम्मान्तौ निष्क्रान्तौ ब्रूमहे वहिः॥४८॥
कुचौ दोषोज्झितावस्याः पीडितौ व्रणितौ त्वया।
कथं दर्शयतामास्यं दृहन्तावावृतौ ह्रिया॥४९॥
इत्यसौ कलया सूक्तैः सिक्तः पीयूषवर्षिभिः
दृङ्गेवेति पप्रच्छ प्रियामुन्नमिताननाम्॥५०॥

हस्तेन पुरोवर्तिनिर्देशः सर्वाकण्ठो भैमीकण्ठनालः मनसा भवन्नामैव कामसूक्तं कामदेवप्रकाशकमन्त्रः तस्य जप एव व्रतमस्यास्तीति तद्व्रती सर्वत्राविकजपानां मानसिकजपस्य सहस्रगुणत्वान्मनोग्रहणम् एकावलिच्छलादेकयष्टिकहारव्याजात् अनसूत्रं जपसङ्ख्यानार्थमचर मन्त्रमालां चुम्बति स्पृशति धारयतीत्यर्थः। अथ सर्वनामग्रहस्य कैतव्यात् त्वन्नामग्रहस्य नैरन्तर्यादिय उपालम्भात् सम्भवतीति भावः॥४७॥

अस्य : पीनस्तनेत्यादिश्लोकोक्त सक्तवैपरीत्यापादनेन परिहरति अध्यासित इति। वयस्यायाः सख्याः हृदि महता भवता अध्यासिते अधिष्ठिते सति स्तनावन्त रसम्मान्तावसम्भवन्तौ अनवकाशौ वहिर्निष्क्रान्ताविति ब्रूमहे अतोऽत्र यानैकशरणो महाराज इति भावः॥४८॥

अधिगत्येत्यादि श्लोकोक्त कवचनैर्मुख्योपालम्भस्योत्तरमाह कुचाविति। दृहन्तौ महान्तौ दोषौ तो दोषोज्झितौ दोषवर्जितावस्याः कुचौ त्वया पीडितौ बाधितौ व्रणितौ क्षतौ दूषितौ च व्रणशब्दात् तत्करोतीति णयन्तात् कर्मणि क्तः णाविष्टवद्भावात् चिण्वतो लुक्। अतो ह्रिया हेतुना आवृतौ आस्यं कथं दर्शयतां दोषोदये लज्जया न परस्मै मुखं प्रदर्शयतीतिभावः। अयमपि स्वयं कृतापराध एवेत्यर्थः इयोराय्यन्तात्कर्मणि लोटि तामादेशः॥४९॥

• इतीति। इतीत्थं असौ राजा कलया प्रियायाः सख्या पीयूष-

बभौ च प्रेयसीवक्त्रं पत्युरुन्नमयन् करः ।
चिरेण लब्धसन्धानमरविन्दमिवेन्दुना ॥५१॥

ह्रीणा च स्मयमाना च नमयन्ती पुनर्मुखम् ।
दमयन्ती मुदे पत्युरत्युच्चैरभवत्तदा ॥५२॥

भूयोऽपि भूपतिस्तस्याः सखीमाह स्म सस्मितम् ।
परिहासविलासाय स्पृहयालुः कलिप्रियः ॥५३॥

हन्त मन्तुं दिनस्यास्य वयस्येयं व्यस्यतात् ।
निशीव निशिधात्वर्थं यदावर्त्ति नाद्य नः ॥५४॥

वर्धिभि रहृतस्यन्दिभि स्रुक्तं भिन्नाः सन् उन्नमितं स्वपाणिना उन्नत माननमुखं यस्य तां प्रियाम् ईहोविते मिष्टमर्वेति कृत्वा पनः ॥५०॥

बभाविति। प्रेयसीवक्त्रं मुखं उन्नमयन् पत्युः करश्चिरेण सङ्गता कान्तेनेन्दुना लब्ध सन्धानं योगो येन तदरविन्दमिव बभौ अत्युतोऽमति च अत्यन्त मनःभावसम्बन्धोक्ते रतिशयोक्तिभेद इत्यर्थः ॥५१॥

ह्रीणेति। तदा तत्काले ह्रीणा लज्जिता विहस्य तु निशान्त्य। स्मयमाना मन्दं हसन्ती च पुनः मुखं नमयन्ती दमयन्ती पत्युरत्युच्चैरत्यन्तरयं मुदे आनन्दाय भवत् ॥५२॥

भूय इति। प्रियया सह वर्तत इति सहप्रियः तेन सहेत्यादिना बहुव्रीहिः। भूपतिः परिहासविलासाय स्पृहयालुः केलिहरणमपह्नुत स्पृहेरीप्सित इति सम्प्रदानत्वाच्चतुर्थी स्पृहि गृहीत्यादिना आलुच्। भूयोऽपि तस्याः प्रियायाः सखीं कलां सस्मितमाह स्म ॥५३॥

हन्तेति। इयं यो वयस्या कला अस्य दिनस्य मन्तुमपराधं हन्त व्यस्यतात् प्रवर्ततां तातङादेशः। यद्यस्मात् निशीव रात्राविवास्य दिने नोऽस्माकं निशिधात्वर्थं निशिधातोर्मिथः चुम्बन इति धातोरर्थं चुम्बनं नावर्तत तस्य न किञ्चिदधिकमिति पश्याम इति भावः ॥५४॥

दिनेनास्या मुखस्येन्दुः सखा यदि तिरस्कृतः ।
तत्कृताः शतपत्राणां तन्मित्राणामपि श्रियः ॥ ५५ ॥
लज्जितानि जितान्येव मयि क्रीडितयाऽनया ।
प्रत्याहर्त्तानि तत्तानि पृच्छ सम्प्रति कम्प्रति ॥५६ ॥
निशि दष्टाधरायापि सैषा मह्यं न कुप्यतु ।
क फलं दश्यते बिम्बीलता कीराय कुप्यति ॥५७ ॥
शृणीपदसुचिह्ना श्रीश्रेगिता कुम्भिकुम्भयोः ।
पश्यैतस्याः कुचाभ्यां तत्पनौ पीडितौ मन ।५८ ॥

दिनेनेति । अथ दिनेनास्या. वः सख्या मुखस्येन्दुः सखा सदृङ् मात्र इन्दुर्यदि तिरस्कृतो यदि अधमःस हि तस्य मुखस्य मित्राणां शतपत्राणामपि श्रियश्च तत्कृताः ईदृशस्य ह्यङ्कः सहस्रपत्रमित्राण्येवोपकृतानि रात्रौ तु विपत्रमित्यहो महान् विवेक इति भावः ॥ ५५ ॥

लज्जितानीति । अथ दिनेनास्या वः सख्यामपि लज्जितानीति किञ्च क्रीडतया रात्रौ क्रीडितवत्या कर्तरि क्तः । अनया वः सख्या लज्जितानि व्रीडितानि भावे क्तः । तानि निरस्तान्येव सम्प्रति कं प्रति कमुद्दिश्य तानि लज्जितानि प्रत्याहर्त्तानि प्रत्यागतानि तत्प्रत्याहर्त्ते निमित्त पृच्छ ॥ ५६ ॥

निशीति । सैषा प्रिया निशि दष्टोऽधरो येन तस्मै अपि मह्यं न कुप्यति क्रुध द्रुहेत्यादिना सम्प्रदानत्वाच्चतुर्थी बिम्बीलता रक्तबिम्बीफल बिम्बीलता चिञ्चलिका पीलुपर्ण्येत्यमरः । फलं स्वफलं दश्यते दन्तैः क्षीयते कीराय शुकाय कुप्यति न क्वापीति दृष्टान्तालङ्कारः ॥ ५७ ॥

यदुक्तं कलया कुचौ दोषोज्झितावस्थाः पीडितौ व्यथितौ त्वयेति तत्रोत्तरमाह शृणीति । एतस्याः कुम्भिकुम्भयो गजकुम्भयोः सम्बन्धि शृणीपदान्यङ्कुशक्षतान्येव सुचिह्नानि यस्याः सा श्रीः शोभा सम्पत्तिश्च

अधरामृतपानेन ममास्यमपराध्यतु ।
मूर्ध्ना किमपराद्धं यत्पादौ नाप्नोति चुम्बितुम् ॥ ५९ ॥
अपराद्धं भवद्वाणीश्राविणा पृच्छ किं मया ।
वीणाऽऽह परुषं यन्मां कलकण्ठी च निष्ठुरम् ॥ ६० ॥
सेयमालिजने स्वस्य त्वयि विश्वस्य भाषताम् ।
ममताऽनुमतास्मासु पुनः प्रस्मर्यते कुतः ॥ ६१ ॥
अथोपवदने भैम्याः स्वकर्णोपनयच्छलात् ।
सन्निधाप्य श्रुतौ तस्या निजास्यं सा जगाद ताम् ॥ ६२ ॥

चोरिता अपहृता तत्तस्माच्चौर्यात् स्थितोन्नतोऽहं तौ कुचौ पीडयामि दुष्टनिग्रहाधिकारत्वात् राज्ञामिति भावः ॥ ५८ ॥

अधरेति । ममास्यमधरामृतपानेन हेतुनापराध्यतु अनिष्टाचरणादपराध्यतु । मूर्ध्ना किमपराद्धं कोऽपराधः, यो मूर्ध्ना पादौ चुम्बितुं स्प्रष्टुं न प्राप्नोति पदाहतिमपि न लभत इत्यर्थः । प्रकृतभावावाद्यापि विस्रम्भसम्भोगसुखलाभ इति भावः ॥ ५९ ॥

अपराद्धमिति । हे कले! पृच्छ सखीं भैमीमिति शेषः । भवद्वाक्यं शृणोतीति तत् श्राविणा मया किमपराद्धं न किञ्चिदपराद्धमित्यर्थः । कुतः यद्यस्माद्वीणा मां परुषमाह कलकण्ठी कोकिला च निष्ठुरमाह अनयोः पारुष्यदोषात्कृत्वा त्वद्वाणीं शुश्रूषयिषुरहं सम्भाषणेनानुकम्पनीय इति भावः ॥ ६० ॥

सेति । हे कले! सेयं प्रिया स्वस्यालिजने त्वयि विश्वस्य विस्रभ्य भाषतां तत् किं नानुमन्यते किं त्वस्मासु विषये ममता अनुमता ममतां ममायमित्यभिमानः कुतो हेतोः पुनः प्रस्मर्यते अन्तोपस्तुतिर्मनागल्पोऽपि वरं अन्यथा तु कथं जीवेयमिति भावः ॥ ६१ ॥

अथेति । अथ राजवाक्यानन्तरं सा कला भैम्या उपवदने

अहो मयि रहोवृत्तं धूर्त्ते किमपि नान्यथाः ।
आस्स्व सत्यमिमं तत्ते भूपमेवाभिधापये ॥ ६३ ॥
स्मरशास्त्रमधीयाना शिक्षितासि मयैव यत् ।
आगोऽपि सोऽपि कृत्वा किं दाम्पत्यव्यत्ययस्त्वया ॥ ६४ ॥
मौनिन्यामेव सा तस्यां तदुक्तीरिव शृण्वती ।
वादं वादं मुहुश्चक्रे हुंहुमित्यान्तरान्तरा ॥ ६५ ॥

वदनसमीपे सामीप्येऽव्ययीभावः तृतीयासप्तम्योर्बहुलमिति विकल्पात् सप्तम्यां न भावः । स्वकर्णस्योपनयच्छलादुपकर्णव्याजात् तस्या भैम्याः श्रुतौ कर्णे निजास्यं स्वमुखं सन्निधाय सन्निहितं कृत्वा तां भैमीं जगाद ॥ ६२ ॥

अहो इति । हे धूर्त्ते ! वञ्चने ! मयि विषये रहोवृत्तं रहस्यचेष्टितं किमपि नान्यथाः आस्स्व तिष्ठ सत्यमिममर्थमिति भूपमेव तत्ते चेष्टितमभिधापये भूपमेव ख्यापयिष्यामीत्यर्थः । गतिबुद्धीत्यादिना शब्दकर्मत्वं दर्शकर्तुः कर्मत्वम् ॥ ६३ ॥

स्मरेति । स्मरशास्त्रं वात्स्यायनादिकामतन्त्रमधीयाना मत्तोऽभ्यस्यन्ती त्वं यत् मयैव शिक्षिता उपदिष्टासि ब्रवीमीति शासिधर्मग्रहपक्षे द्विकर्मकत्वम् अप्रधाने दुहादीनामप्रधाने कर्मणि क्तः । स कोपः दाम्पत्यव्यत्ययः पुंव्यभावस्त्वया किं कृत्वा किं मत्वा किमर्थमित्यर्थः । शास्त्रशब्देन विशेषलक्षणैरपि आगोऽप्यपराधोऽपि किमिति न कृतः कृतोनोच्यते तद्ब्रूहीत्यर्थः ॥ ६४ ॥

यदुक्तं भूपमेवाभिधापय इति तदर्थमुपोद्घातत्वेन किञ्चित् चपलामित्याह मौनिन्यामिति । सा कला तस्यां भैम्यां मौनिन्यां तूष्णीम्भूतायामेव तदुक्तीस्तद्वाक्यानि शृण्वती चान्तरान्तरा मध्ये मध्ये वादं वादं प्रत्युत्तरमिव चोदित्वा आभीक्ष्ण्ये णमुल् मुहुः पुनः पुनः हुंहुमिति चक्रे हुङ्कारेण तद्वाक्याङ्गीकारं चकारेत्यर्थः ॥ ६५ ॥

अथामात्रभिरुत्यास्या रतिप्रागल्भ्यशंसिनी ।
सख्या लीलाम्बुजाघातमनुभूयालपन्नृपम् ॥ ६६ ॥
इष्टं इष्टं महाराज ! तदर्थाभ्यर्थना कृथा ।
यत्ताडयति मामेवं यद्वा तर्जयति भ्रुवा ॥ ६७ ॥
वदत्यचिह्नि चिह्नेन त्वया केनैष नैषधः ।
शङ्के शक्रः स्वयं कृत्वा मायामायातवानयम् ॥ ६८ ॥
स्वर्णदीस्वर्णपद्मिन्याः पद्मदानं निदानताम् ।
नयतीयं त्वदिन्द्रत्वे दिवश्चागमनस्य ते ॥ ६९ ॥

अथेति । अथैवं कल्पनानन्तर सख्या भैम्या रति प्रागल्भ्यं शंसत इति तत् शंसिनी असौ कला, सख्या भैम्याः सकाशाल्लीलाम्बुजानामाघात ताडन मनुभूय प्राप्याभिमुख्योपसृत्य नृपमालपत् ॥ ६६ ॥

तदेवाह षड्भि, इष्टमित्यादि हे महाराज ! इष्टं इष्ट सम्भ्रमे द्विरुक्तिः । किं इष्टं तत्राह त्वदर्थस्य त्वदर्पेक्षितार्थस्याभ्यर्थना क्रियतामिति प्रार्थिते सति कुधा यदेव मान्ताडयति यद्वा यच्च मां तर्जयति तदुभय इष्ट खल्वित्यर्थः । एतस्य स्ववाक्यश्रवणार्थमिति भावः । तर्जतेरनुदात्तत्वेऽपि च स्यादुदात्तेष्वपि चितत्करणे नानित्यता ज्ञापनात् तत्र परस्मैपदमपि अतएव तर्जयति भर्त्सयते तर्जयतीत्यपि च दृश्यते इति भट्टमल्लः ॥ ६७ ॥

किं तद्वाक्यं तदाह त्रिभिर्वदतीत्यादि । हे राजन् ! भैमी वदति आत्मान मितिशेष, तदेवाह । हे कले ! त्वया एष पुरुषः केन चिह्नेन स नैषधस्त्वचिह्नि चिह्नितः प्रत्यभिज्ञातः किन्त्वय स्वयं शक्रएव मायां नलरूपं कृत्वा आयातवानिति शङ्के ॥ ६८ ॥

स्वरिति । किञ्च हे महाराज ! इयं भैमी ते तव स्वर्णद्यामाकाशगङ्गायां स्वर्णपद्मिन्याः पद्मस्य दानं दिवोऽन्तरीक्षादागमनस्य त्वदिन्द्रत्वे

भाषते नैषधच्छाया मायाऽमायि मया हरेः ।
आह चाहमहल्यायां तस्याकर्णितदुर्नया ॥ ७० ॥

सम्भावयति वैदर्भी दर्भाग्राभामतिस्तव ।
जम्भारित्वं कराम्भोजाद्दम्भोलिपरिरम्भिणः ॥ ७१ ॥

अनन्यसाक्षिकाः साक्षात्तद्व्याख्याय रहःक्रियाः ।
शङ्कातङ्कं नुदैतस्या यदि त्वं तत्त्वनैषधः ॥ ७२ ॥

इति तत्सुप्रयुक्तार्थं निह्नुतीकृतकैतवाम् ।
वाचमाकर्ण्य तद्भावे संशयालुः शशंस सः ॥ ७३ ॥

निदानतान्नलकाराणतान्वयति अनिर्दिश्यैतदुभयं न सम्भवतीति भावः ॥ ६९ ॥

भाषत इति । हे मह.राज ! भैमी भाषते किमिति हे नल ! नैषधच्छाया नलाकारो हरेरिन्द्रस्य माया मया अमायि अनुमिता माङः कर्मणि लुङ् मिणि युगागमः आह चान्यच्चाहेत्यर्थः । अहल्यायां तस्येन्द्रस्याकर्णितोदुर्नयोदुश्चेष्टितं यया सा सापेक्षत्वेऽपि गमकत्वात् समासः, पारदार्यपरा भीतिरप्यस्य नास्ति उपसर्गादसमासयोर्णोपदेशस्येति भावः ॥ ७० ॥

सम्भावयतीति । किञ्च दर्भाग्राभा कुशाग्रसङ्काशा मतिर्यस्याः सूक्ष्मबुद्धिर्वैदर्भी दम्भोलिर्वज्रायुधं वज्ररेखाञ्च परिरभ्यते यत्तस्मात् परिरम्भिणः कराम्भोजादालिङ्गनात्तव जम्भारित्वं इन्द्रत्वं सम्भावयति अनुमीयते वज्रहस्तः पुरन्दर इति श्रुतेरिति भावः ॥ ७१ ॥

अनन्येति । हे राजन् ! तत्त्वनैषधः परमार्थनलो यदि तत्तर्हि अनन्यसाक्षिकाः इ.मात्रसम्बन्धिन्या रहःक्रिया रहस्यव्यापारान् साक्षात् स्वयमेव व्याख्यायोक्त्वा एतस्याः शङ्काया इन्द्रत्वोत्प्रेक्षाया आतङ्कं भयं नुद निवर्तय ॥ ७२ ॥

इतीति । इतीत्यनया कलया सुप्रयुक्तार्थं युक्तायुक्तत्वेन निह्नुती-

स्मरसि च्छद्मनिद्रालुर्मया नाभौ करार्पणात् ।
यदानन्दोल्लसल्लोमा पद्मनाभीभविष्यसि ॥ ७४ ॥
जानासि ह्रीभयव्यग्रा यन्नवे मन्मथोत्सवे ।
सामिभुक्तैव मुक्ताऽसि सखि ! खेदभयान्मया ॥ ७५ ॥
स्मर जित्वाऽऽजिमेतत्त्वां करे मत्पदधाविनि ।
अङ्गुलीयुगयोगेन यदाश्लिष्यं घने जने ॥ ७६ ॥

तत्रैतत्रा विस्मृतकपटशङ्कां वाचमाकर्ण्य तस्या भैम्या भावे अभिप्राये सशयालुः किमयमिन्द्रोऽन्य एव नल एव स्यादिति संशयानः सन् स नलः प्रत्ययकथयोच्छेदकं वाक्यमुवाचेत्यर्थः ॥ ७३ ॥

अथैतदेव विहाय विंशत्या श्लोकैः प्रपञ्चेनाह स्मरसीत्यादि हे प्रिये ! च्छद्मना कपटेन निद्रालुः सुप्ता स्पृहि गृहीत्यादिना निपूर्वाद्द्रातेरालुच् । तदा मया नाभौ करस्य पाणेरर्पणात् आनन्देन स्पर्शसुखेनोल्लसल्लोमा प्रहृष्यल्लोमा सती पद्मं नाभौ यस्याः पद्मनाभिः प्रागेव पद्मत्वादिति भावः । पद्मनाभो विष्णुः सोऽपि च्छद्मनिद्रालुरिति भावः । योगविभागात् समासान्तोऽप्रत्ययः । अनयत्र अभूततद्भावे च्विः पद्मनाभीभविष्यसि यत पद्मनाभीभूतासीति यदित्यर्थः तत्तु स्मरसि तत्र त्वमभिजानासि किमित्यर्थः । अभिज्ञाने च न लृडिति अभिज्ञावचनयोगाद्भूतार्थे लृट् ॥ ७४ ॥

जानासीति । हे सखि ! कोमलाङ्गि ! अतिपीडां न सहत इत्यर्थः । नवे मन्मथोत्सवे प्रथमसमागमे ह्रीभयाभ्यां व्यग्रा भ्रान्ता खेदः स्यादिति भयात् सामिभुक्ता अर्धभुक्तैव मया मुक्तासि अन्यथा वैरस्यादिति भावः । तदुक्तं रतिरहस्ये सहसा वाप्युपक्रान्ता कन्याचित्तमविन्दता । भयाद्वित्रासमुद्वेगं सद्यो द्वेषञ्च गच्छति । सा प्रीतियोगमप्राप्य तेनोद्वेगेन दूषिता । पुरुषद्वेषिणी वा स्याद्विद्विष्टा वा ततोऽन्यथेति तच्च जानासि स्मरसि किमित्यर्थः ॥ ७५ ॥

वेत्थ मानेऽपि मत्त्यागद्रूना स्वं माश्व तन्मिथः ।
मद्दृष्टाऽऽलेख्य पश्यन्ती व्यवधा रेखयाऽन्तरा ॥ ७७ ॥

प्रसूतत्वत्त्वया तावद्यन्मोहनविमोहितः ।
अदृष्टोऽधरपानेषु रसनामपिवत्तव ॥ ७८ ॥

त्वत्कुचाद्र नखाङ्कस्य मुद्रामालिङ्गनोत्थिताम् ।
स्मरेः स्वहृदि यत् स्मेरः सख्यौ शिल्पं तवाङ्कुरम् ॥ ७९ ॥

स्मरेति। हे प्रिये! आजि युद्ध कृत्य एतः समागतेऽहं जने घने बहुले सति गात्रालिङ्गनप्रतिबन्धोक्तेः भयाद् प्रतिधाविनि करे अङ्गुलिद्वयोगेन अङ्गुलिद्वययोजनया यदाश्लिष्यं आश्लिष्टवानस्मि तत्स्मर ॥ ७६ ॥

वेत्थेति। हे प्रिये! माने प्रणयकोपे मत्त्यागद्रूना मद्विरहद्रुतया मिथो रहसि मिथोऽन्योन्यं वा रहस्यपीत्यमरः। स्वमात्मानं माञ्चालेख्य चित्रे लिखित्वा पश्यन्ती मद्दृष्टा मया वीक्षिता सती अन्तरा लिखितयोर्मध्ये रेखया व्यवधा अधाय विहितावकाशः तत्रापि कोपः प्रकटित इत्यर्थः। व्यवपूर्वाद्धाते र्लुङ् सिपि गास्थेत्यादिना सिचोलुक् वेत्थ इति काकुः ॥ ७७ ॥

प्रसूतमिति। हे प्रिये! मोहने सुरते विमोहितः सन्नहं अधरपानेषु अदृष्टस्तावन्मात्रे णादृष्टः सम्बन्धसामान्ये षष्ठी पूरणेत्यादिना षष्ठीसमासनिषेध व्यापनात् षष्ठीति केचित्। तव रसनां यदपिबन् तत्त्वया प्रसूतं काकुः ॥ ७८ ॥

त्वदिति। हे प्रिये! स्वस्यात्मनो मे हृदि वक्षस्यालिङ्गनेनोत्थितां उत्पन्नां संक्रान्तामित्यर्थः। त्वत्कुचयोरार्द्रनखाङ्कस्य मुद्रां सन्निवेशं स्मेरः सस्मितः सन् सख्यौ प्रति तव शिल्पं शिल्पनिर्माणं संक्रमयत्कृपयाद्भुतम तत् स्मरेः ॥ ७९ ॥

त्वयेति। हे प्रिये! मध्ये मधुगोष्ठ्यां मध्ये मधुगोष्ठि पानगोष्ठीमध्य इत्यर्थः। पारे मध्ये षष्ठ्या वेत्यव्ययीभावः गोस्त्रियो रुप सर्जनस्येति

स्वदिग्विनियमेनैव निशि पार्श्वविवर्त्तिनोः ।
स्वप्नेष्वप्यस्तवैमुख्ये सख्ये सौख्यं स्मरावयोः ॥ ८४ ॥

क्षणं प्राप्य सदस्येव नृणां विमनितेक्षणाम् ।
दर्शिताधरमद्दंशा ध्याय यन्मामतर्ज्जयः ॥ ८५ ॥

तथाऽवलोक्य नीलाब्जनालभ्रमणविभ्रमात् ।
करौ योजयताऽध्ये हि यन्मयाऽसि प्रसादिता ॥ ८६ ॥

ताम्बूलदानं सन्न्यस्तकरजं करपङ्कजे ।
न मम स्मरसि प्रायस्तव नैव स्मरामि तत् ॥ ८७ ॥

स्वेति । हे प्रिये ! स्वदिशोः स्वस्वशयनदेशयोर्विनियमेनैव विपरीतप्रवर्तनायैवेति पार्श्ववर्तिनोः पूर्वावस्थायामेव पार्श्वे विवर्तते न अन्यथा वैमुख्यप्रसङ्गादिति भावः । तयोरावयोः स्वप्नेषु स्वापकालेष्वप्यस्ते उक्तरीत्या निरस्ते वैमुख्ये पराङ्मुख्ये मेलने सख्ये सौख्यं सुखं स्मर ॥ ८४ ॥

क्षणमिति । हे प्रिये ! सदसि तिष्ठतीति सदस्ये व सखी समागम एव नृणां सखीजनानां विमनितानि विमानितानि विमनयन्त्यात्मत करोति शयनादिष्ववद्भावे टिलोपः, कर्मणि क्तः । तानीक्षणानि यस्मिन् तमावक्त्रजनदृष्टिकाङ्क्षणमवसरं प्राप्य दर्शिताधरे मद्दंशा मत्कृतदंशनं यया सा सती यन्मामतर्ज्जयः तत् स्मरः ॥ ८५ ॥

तथेति । हे प्रिये ! तथा तर्ज्जनमवलोक्य लीलाब्जनालस्य भ्रमणमेव विभ्रमो विलासस्तस्मात्तद्व्याजादित्यर्थः । करौ पाणी योजयता अञ्जलिं बध्नता मया यत्प्रसादिता प्रसन्नीकृता तदध्ये हि स्मर ॥ ८६ ॥

ताम्बूलेति । हे प्रिये ! तव करपङ्कजे पाणिपद्मे सन्न्यस्तकरजं विरचितनखाङ्कं कर्म कर्तुं ताम्बूलदानमिति कार्यं प्रायः प्रायेण न स्म-

मुखादारभ्य नाभ्यन्तं चुम्बं चुम्बं न तृप्तवान् ।
न प्रापं चुम्बितुं यत्ते धन्या तच्चुम्बतु स्मृतिः ॥ ९२ ॥
कमपि स्मरकेलिं तं स्मर यत्र भवन्निति ।
मया विहितसम्बुद्धिर्व्रीडिता स्मितवत्यसि ॥ ९३ ॥
नीलद्राक्चिबुकं यत्र मदाङ्केन श्रमाम्बुना ।
स्मर हारमणौ दृष्टं स्वमास्यं तत्तदर्चितम् ॥ ९४ ॥

पानकादिकं च स्वाद्येति स्तुवन् स्वनिन्दारोपणैव रक्षात् अस्मात्तदा-धर व्यदमैपर्यन्तोऽहं इतिप्रत्यभिप्रायेणापि निन्दार्हत्वादिति भावः । विभेतेर्लुङ् मध्यमादेशश्च तु तच्च स्मर ॥ ९१ ॥

मुखादिति । मुखादारभ्य नाभ्यन्तं नाभिपर्यन्तं कुचादिकमङ्ग-मुख्यं चुम्बं चुम्बित्वा चुम्बित्वा आभीक्ष्ण्ये णमुल् न तृप्तवानतृप्तः सन्नपि ते तव यदङ्गं चुम्बितुं न प्रापं यच्चुम्बनं न प्रापमित्यर्थः । पापिष्ठानिषेधा-दिति भावः । तत्ते धन्या भाग्यवती स्मृतिः चुम्बतु । तत्रेति वक्षा-दिति भावः, तच्चुम्बनं स्मरेरित्यर्थः ॥ ९२ ॥

कमिति । हे प्रिये ! किमप्यनाख्येयं स्मरकेलिं कामक्रीडां स्मरकेलिः परीहासइति यादवः । यत्र यस्मिन् नरके तं मया भवन्निति पुंलिङ्गनिर्देशेऽपि विहितसम्बुद्धिः कृतामन्त्रणा सती व्रीडिता लज्जिता स्मितवत्यसि पुंस्त्वभागत् व्रीडा हर्षात् स्मितम् ॥ ९३ ॥

नीलदिति । हे प्रिये ! यत्र मदङ्केन कस्तूरीकलुषितेन मदो रेतसि कस्तूर्याञ्चेति विश्वः । श्रमाम्बुना स्वेदेन चिबुकं ओष्ठाधः प्रदेश-पर्यन्तं ओष्ठपर्यन्तं अधरमधस्तात् चिबुकमित्यमरः । नीलन्नीलीभव-न्नीलवर्णं इतिधातोर्लट् शत्रादेशः स्वमास्यं हारमणौ स्वस्येति भावः । दृष्टम्‌ स्वमास्यदर्शनकारण. तत्तदर्चितमुचितत्वान्न दृङ्मुखदर्शनरूपमेव स्मर ॥ ९४ ॥

वनकेलौ त्वराश्वत्थदलं भूपतितं प्रति ।
देहि मह्यमुदस्येति मद्गिरा व्रीडिताऽसि यत् ॥ ९५ ॥
इति तस्या रहस्यानि प्रिये शंसति सान्तरा ।
पाणिभ्यां पिदधे तस्याः श्रवसी ह्रीवशीकृता ॥ ९६ ॥
कर्णौ पीडयती सख्या वीक्ष्य नेत्रासितोत्पले ।
अप्यसीदयतां भैमीकरकोकनदे नु तौ ॥ ९७ ॥
तत्प्रविष्टं सखीकर्णौ पत्युरालपितं ह्रिया ।
पिदधाविव वैदर्भी स्वरहस्याभिसन्धिना ॥ ९८ ॥

वनेति। किञ्च वनकेलौ प्रमदवनविहारकाले भूपतितमश्वत्थदलं प्रत्युदस्योद्धृत्य मह्यं देहीति मद्गिरा मदुक्त्या व्रीडितासीति स्वरहस्यच्छदानेन यावनाभिप्रायज्ञानादिति भावः। तत् स्मर स्मर सामुद्रिकाः अश्वत्थदलसदृशं गुह्यं सुलक्षणं निश्चितं। यस्याः सा सुभगा कन्या पूर्वपुण्यैरवाप्यत इति ॥ ९५ ॥

इतीति। इतीत्थं तस्या भैम्या रहस्यानि रहस्यचेष्टितानि प्रिये नले शंसति कथयति सति सा भैमी सान्तरा कथामध्ये ह्रीवशीकृता लज्जापरवशा सती तस्याः कलायाः श्रवसी कर्णौ पाणिभ्यां पिदधे आच्छादयामास ॥ ९६ ॥

कर्णाविति। भैम्याः करावेव कोकनदे रक्तोत्पले कर्तृणि अथ रक्तसरोरुहे रक्तोत्पलं कोकनदमित्यमरः। विशिष्टपद्मोत्पलसाधारण्येऽप्यसितोत्पलप्रतियोगित्वेन प्रयोग इत्यनयोर्भेदो ग्राह्यः। कर्णौ पीडयती कर्णान्तविश्रान्ते इत्यर्थः। सख्याः कलाया नेत्रे एवासितोत्पले वीक्ष्य स्वयमपि समत्सराविव तौ कर्णावपीडयतामित्युत्प्रेक्षा। लोके हि यत्सजातीयाः कुर्वन्तीति भावः ॥ ९७ ॥

तदिति। वैदर्भी भैमी सखीकर्णाविव प्रविष्टं पत्युरालपितं रह-

तमालोक्य प्रियाकेलिं नले सोल्लुण्ठहासिनि ।
आरात्तत्त्वमबुद्धाऽपि सख्यः सिस्मियिरेऽपराः ॥ ९९ ॥
दम्पत्योरुपरि प्रीत्या ता धराप्सरसस्तयोः ।
ववृषुः स्मितपुष्पाणि सुरभीणि मुखानिलैः ॥ १०० ॥
तदस्य हसिताज्जातं स्मितमासामभासत ।
आलोकादिव शीतांशोः कुमुदश्रेणिजृम्भणम् ॥ १०१ ॥
प्रत्यभिज्ञाय विज्ञाऽथ स्वरं हासविकस्वरम् ।
सख्यस्तासु सपत्नायाः कला जातबलाऽजनि ॥ १०२ ॥

स्वभाषितं त्वया स्वरहस्याभिसन्धिना विगूढाभिप्रायेणैव पिदधौ स्वरह-स्य गोपनाय कर्णपिधानमित्युत्प्रेक्षा ॥ ९८ ॥

तमेति । तं पूर्वोक्तं प्रियायाः केलिं सखीकर्णपिधानविनोदमा-लोक्य नले सोल्लुण्ठं सपरिहासं हसतीति आरात् दूरादपराः सख्यः तत्त्वमबुद्धा सिस्मियिरे चपलेचपलचेष्टमात्रदर्शनाज्जहसुरित्यर्थः ॥ ९९ ॥

दम्पत्योरिति । धराप्सरसो भूलोकाप्सरसः सख्यस्तयोर्दम्पत्यो-रुपरि मुखानिलैर्निश्वासमारुतैः सुरभीणि सुगन्धीनि स्मितान्येव पुष्पा-णि ववृषुः सिषेचुः ॥ १०० ॥

तदिति । तस्य नलस्यास्ये हसिताज्जातमासां सखीनां स्मितं शीतां-शोरालोकात् प्रकाशाज्जात कुमुदश्रेणीनां जृम्भणमिव अभासत ॥ १०१ ॥

प्रत्यभिज्ञेति । अथ सखीहासानन्तरं विज्ञा अभिज्ञा कला तासु सखीषु मध्ये सपत्नयाः समानायाः एकस्याः सुहृद्भूतयाः इत्यर्थः । पत्युः पार्श्वगस्य सहाय भयेष्विति यावत् । छन्दसि स्यादसूत्रे समा-नस्येति योगविभागात् सपत्नादिषु समानशब्दस्य सभावः । सख्याः सम्बन्धिनं हासेन विकस्वरन्तं स्वरं ध्वनिं प्रत्यभिज्ञाय स्वसखीस्वरोऽयमिति निश्चित्य जातबला जातसामर्थ्या अजनि जाता जनेः कर्तरि लुङ् । दीपजनेत्या-दिना चिणि तकि ह्रस्वम् ॥ १०२ ॥

साऽऽह्वयोच्चैरथो चेतामेहि स्वर्गेण वञ्चिते ! ।
पिब वाणीः सुधावेणीर्नृपचन्द्रस्य सुन्दरि ! ॥ १०३ ॥

साऽऽशृणोत्तस्य वाग्भागमनत्यासत्तिमत्यपि ।
कल्पग्रामाल्पनिर्घोषं बदरीव कृशोदरी ॥ १०४ ॥

अथ स्वप्रष्ठनिष्ठायाः शृण्वन्त्या नैषधाभिधाः ।
नलमौलिमणौ तस्या भावमाकलयत् कला ॥ १०५ ॥

प्रतिबिम्बेङ्गितैः सख्या मुखकूनकृतानुमा ।
तद्व्रीडाद्यनुकुर्व्वाणा शृण्वती चाब्रवीदपि सा ॥ १०६ ॥

---

सेति । अथ स्वप्रत्यभिज्ञानानन्तरं सा कला तां सखीं मुच्चैराह्वय हे स्वर्गेण स्वर्गसुखेन वञ्चिते प्रतारिते ! सुन्दरि ! एहि गच्छ नृपचन्द्रस्य राजेन्द्रोः सम्बन्धिनीः सुधावेणीरमृतरसस्रोतोरूपीर्वाणीः पिब यथेच्छमाकर्णय इत्युच्चैरुवाच ॥ १०३ ॥

सेति । कृशोदरी कृशाङ्गी सा आहूता सखी अनत्यासत्तिमत्यपि दैवदूरस्थापि तस्य नलस्य वाग्भागं वाक्यखण्डं कल्पग्रामस्य बदरिसमीपवर्त्तिनः कलापग्रामस्य ग्रामस्याल्पनिर्घोषं मन्दध्वनिं बदरीव बदरिकाश्रमस्थः प्रागेवाशृणोत् अत्र प्रकृष्टेष्वप्यापेषु परस्परमालापाः श्रूयन्ते तद्दृष्टान्तोऽर्थादिस्वयं ॥ १०४ ॥

अथेति । अथ सखीनियोगानन्तरं कला स्वप्रष्ठनिष्ठायाः स्वपुरःस्थितायाः सख्या नैषधस्य नलस्याभिधीयन्त इत्यभिधा वचनानि आतश्चोपसर्ग इति अण् प्रत्ययः । शृण्वन्त्यास्तस्याः भावश्चेष्टाम् नलस्य मौलिमणौ आकलयदपश्यत् पुरोवर्तितया तत्र तस्याः प्रतिफलनत्वादिति भावः ॥ १०५ ॥

प्रतीति । प्रतिबिम्बेन मौलिमणिगतसख्याः प्रतिबिम्बेन ईङ्गितैश्चेष्टैः मुखाकूतैः सख्याः सम्बन्धिभिः लिङ्गैः कृतानुमा इदमिदमयं वक्तीति कृतानुमाना तयाः तस्याः सख्या व्रीडा प्रभवचेष्टितमनुकुर्वाणा अनुकरणं ना

कारङ्कारं तथाकारमूचे साऽशृणवन्नमाम् ।
मिथ्या वेत्थ गिरश्चेत्तद्व्यर्थाः स्युर्मम देवताः ॥ १०७ ॥
मत्कण्ठभूषणानान्तु राजन्निबिडपीडनात् ।
व्यथिष्यमाणपाणिस्ते निषेद्धुमुचिता प्रिया ॥ १०८ ॥
इति सा मोचयाञ्चक्रे कर्णौ सख्याः करग्रहात् ।
पत्युराश्रवतां यन्त्या मुधायासनिषेधिनः ॥ १०९ ॥
श्रुतिसंरोधजध्वानसन्ततिच्छेदतालताम् ।
जगाम झटिति त्यागस्तनस्तत्कर्णयोस्ततः ॥ ११० ॥

सती ताच्छील्ये चानर्थ इत्यन्यथानुपपत्त्या कलेयमिति परस्मैपदप्रसङ्गात् सा कला श्रुतवतीव आश्वादाकर्णयन्तीवात्मनि अनुमिता तटस्थैरिति शेषः ॥ १०६ ॥

कारङ्कारमिति । सा कला तथाकारं तादृगनुचितार्थानुकरणं कृत्वा कृत्वा आभीक्ष्ण्येन णमुल् अशृणवन्नमां सम्यगाकर्णयत् शृणोति लोडि मि-पोम देश. तिङव्ययादाम् प्रत्ययः । इत्येवं गिरः अशृणवमिति वाचो मिथ्या वेत्थ चेत् मम देवता मदुपास्यदेवता व्यर्था विफलाः स्युः ॥ १०७ ॥

मदिति । किन्तु हे राजन् ! महाराज ! मत्कण्ठभूषणाना निबिडपीडनाद्व्यथिष्यमाणपाणिस्ते व्यथमानपाणिस्ते प्रिया भैमी नि-षेद्धुं कर्णापिधानान्निवारयितुमुचिता मया स्वरहस्यस्य सर्वस्यापि श्रुतत्वात् कर्णपिधानस्य स्वपाणिपीडानादतिरिक्तफलं नास्तीत्यर्थः ॥ १०८ ॥

इतीति । इतीत्थं सा कला मुधायासं वृथा प्रयासन्निषेधति न करोति वारयतीति तन्निषेधिनः पत्युः नलस्य आश्रवतां वाक्यकारित्वं यान्त्याः वचनेस्थित आश्रव इत्यमरः । सख्या भैम्या करग्रहात् कररोधात् कर्णौ मोचयाञ्चक्रे मोचयामास ॥ १०९ ॥

श्रुतीति । ततः कर्णमोचनानन्तरं तस्याः कलायाः कर्णयोर्झटिति-त्यागेन स्वमस्याग्रजन्योध्वनिः श्रुतिसंरोधेन जाताया ध्वानसन्तत्याः छेदं नि-

प्रत्यलापीत् कलाऽपीमं कलङ्कः शङ्कितः कुतः ।
प्रियापरिजनोक्तस्य त्वयैषाऽद्य मृषोद्यता ॥ ११५ ॥
सत्यं खलु तदाश्रौषं परं धुमुधुमारवम् ।
शृणोमीत्येव चावोचं नतु त्वद्वाचमित्यपि ॥ ११६ ॥
आमन्त्र्य देव ! तेन त्वां तद्वैयर्थ्यं समर्थये ।
शपथः कर्कशोदर्कः सत्यं सत्योऽपि दैवतः ॥ ११७ ॥
असम्भोगकथारम्भैर्वञ्चयेथे कथनु मां ।
हन्त सेयमनर्हन्ती यन्तु विप्रलभे युवाम् ॥ ११८ ॥

---

पथसाहसात् व्यर्थाः स्वर्भसदेवता इति कृत्वा तत्कपटशपथसाहसादिञ्चितो त्वसे तर्हि आस्व तिष्ठ क गमिष्यसीत्यर्थः ॥ ११४ ॥

प्रत्यलापीदिति । कलापीम नल प्रत्यलापीत् प्रत्यवोचत् लपेर्लुङि व्यतोहलादेर्लघोरिति निषेधविकल्पात् सिचिवृद्धिः । हे राजन् ! त्वया प्रियापरिजनेनोक्तस्य तस्य वचनस्य मृषोद्यता मृषावादित्वं राजसूय सूर्य-मृषा पूर्वाद्वदेः क्यवन्तोनिपातः । स्वकलङ्कोदोषः कुतः शङ्कितः परिज-नोक्तेषु नैव दोष इत्यर्थः ॥ ११५ ॥

सत्यमिति । अथवा तदा कर्णरोधसमये परं केवलं धुमुधुमारवं अश्रौषमित्युक्तं खलु तथाहि शृणोमीत्येव चावोचं त्वद्वाचमित्यपि तु नावोच यावत् शृणोमीत्युक्तं तावत् सत्यमेव यदसत्यम् शृणोमीत्युक्तं तस्मात्तत्र मृषोद्यतादोष इत्यर्थः ॥ ११६

आमन्त्र्येति । हे देव ! तेन त्वामामन्त्र्य सम्भाष्य तस्य वैयर्थ्यमन्य-थाभावं समर्थये पश्यामि कर्कशोदर्कः शपथः तत्सत्यं दैवतोऽपि सत्यः सत्यफल. किन्तु मिथ्या वेदार्थगिरश्चेत्यन्यर्थाः स्वर्भसदेवता इत्यत्र देव ! राजफलोदुरन्त सत्यं सत्येनापि शपेद्यस्तु देवाग्निगुरुसन्निधौ तस्य वैवस्वतो राजा धर्मराड्ज निकृन्ततीति । कारणात् दुदर्कः उत्तरफलमि-त्यमरः ॥ ११८ ॥

असम्भोगेति । असम्भोगकथानां सम्भोगाभावोक्तीनामारम्भैः प्रसञ्जनैः मां कथं तु वञ्चयेथे अहं यं प्रविप्रलम्भे वञ्चयामि सेयं दद्धना

कर्णे कर्णे ततः सख्यौ श्रुतमाचख्यतुर्मिथः।
मुहुर्विस्मयमाने च स्मयमाने च ते बहु ॥ ११९ ॥

अथाख्यायि कला सख्या कुप्य मे दमयन्ति! मा।
कर्णाद्द्वितीयतोऽप्यस्याः सङ्गोप्यैव यदब्रवम् ॥१२० ॥

प्रियः प्रियामथाचष्ट दृष्टं कपटपाटवम्।
वयस्ययोरिदं तस्मान्मा सखीष्विव विश्रमीः ॥१२१ ॥

आलापि कलयाऽपीयं पतिर्नालपति क्वचित्।
वयस्येऽसौ रहस्यं तत्सभ्ये विस्रम्भमीदृशि ॥ १२२ ॥

व्यतीतिक्रमः मद्वचन युवयोः यक्रमेव मम तु भवद्वचनमयुक्तमहो आश्चर्यम्‌-तयोरितिभावः। अनर्हन्ती ब्राह्मणादित्वात् ष्यङ् प्रत्यये अर्हतो र्नुम् चेति नु-मागमः पित्वाद्वाङ्कलकरं कारइति वामनः। यस्येति लोपे यस्यहलेति यकारलोपे चार्हन्ती सिद्धान्ते सम्यमम:स. ॥ ११८ ॥

कर्णे क इति। ततोऽनन्तर मुहुर्मुहुर्यथा तथा विस्मयमाने विस्मय-माविशन्त्यौ स्मयमाने मन्दं हसन्त्यौ च सख्यौ मिथोरहसि श्रुत कर्णे कर्णे अन्योन्यं कर्णे आचख्यतुः कथयामासतुः ॥ ११९ ॥

अथेति। अथान्योन्यकथनानन्तरं कला सख्या आख्यायि किमिति हे दमयन्ति! मे मह्यं त्व मा कुप्य क्रुध द्रुहेत्यादिना सम्प्रदानत्वाच्चतुर्थी। यदस्मादेवं द्वितीयतो द्वितीयात् कर्णादपि संगोप्य अस्याः कलाया अब्रुवमेव रहस्यं भित्त्वापि न भेदितव्यमिति प्रत्यपदित्यर्थः ॥ १२० ॥

प्रिय इति। प्रियो नलः प्रियां भैमीं आचष्ट किमिति हे प्रिये! वयस्ययोः सख्योरिदं कपटपाटवं वञ्चनाचातुर्यं दृष्टं खल्विति काकुः। तस्मात् सखीष्विव मा विश्रमीर्विश्वासमप्याकुरु श्वसेर्माङि लुङि ह्म्यन्तक्षणेति वृद्धिप्रतिषेधः ... दुपधा स्वेति नात्र लगनाख्यभंमनेत्यादिना वृद्धि प्रतिषेधति सिद्धावः ॥१२१॥

आलपीति। कलया इयं भैमी आलापि आलपिता हे दमयन्ति! त्वत्प्रियः कञ्चिन्नालपति ईदृशि सभ्ये वयस्ये सख्यौ तत् रहस्यं विस्रम्भ

इति व्यत्तिष्ठमानायां तस्यामूचे नलः प्रियाम् ।
भण भैमि ! वहिः कुर्वे दुर्विनीते ! गृहादमूम् ॥ १२३ ॥

गिरःकम्पानुमत्याऽथ सुदत्या प्रीणितः प्रियः ।
चुलुकं तुच्छमुन्नमय्य तस्याः सलिलमक्षिपत् ॥ १२४ ॥

तच्चित्रदत्तचित्ताभ्यामुच्चैः सिचयसेचनं ।
ताभ्यामलम्भि दूरेऽपि नलेच्छापूरिभिर्जलैः ॥ १२५ ॥

वरेण वरुणस्यायं सुलभैरम्भसांभरैः ।
एतयोस्तिमितीचक्रे हृदयं विस्मयैरपि ॥ १२६ ॥

---

नैर्वित तात्पर्य्यार्थः । ततो बद्धलमिति भावेक्तप्रत्यय तस्याकित्या-न्नकारलोपः ॥ १२२ ॥

इतीति । इतीत्यनस्यां कलायां व्यत्तिष्ठमानायां विरोधमाचरन्त्यां कर्त्तरिकर्म्मव्यतिहारे इत्यात्मनेपदम् । नलः प्रियामूचे किमिति हे भैमि ! दुर्विनीते उद्धते ! अमूं सख्यीं गृहाद्वहिः कुर्वे निर्वासय मीति काकु भण ॥ १२३ ॥

गिरइति । अथ प्रियो नलः सुदत्या भैम्या, गिरः कम्पेनैवानुमत्या प्रीणितः तोषितः सन् तुच्छं रिक्तं चुलुकं प्रसृतं पाणिमुत्क्षिप्योत्क्षिप्य सख्युपरीत्यर्थः । तस्याः कलायाः सलिलमक्षिपदकिरत् ॥ १२४ ॥

तदिति । तस्मिन् चित्रे ताभ्यां दत्तचित्ताभ्यां सखीभ्यां नलस्येच्छापूरयन्तीति तत्पूरिभिर्जलैर्दूरे उच्चैः अतिमात्रं सिचयसेचनं वस्त्रसेचनं पटोऽस्त्रीसिचयो वस्त्रमिति यादवः । अलम्भि विभाषाचिण्णमुलोरिति नुमागमः ॥ १२५ ॥

वरेणेति । अयं नलो वरुणस्य वरेण वरदानेन सुलभैरम्भसां भरैरोघैः विस्मयैरप्याश्चर्यरसैः एतयोः सख्योः हृदयं हृदयं वक्षसि स्वान्त-इति विश्वः । स्तिमितीचक्रे निश्चलीचक्रे अभूततद्भावे च्विः अत्र स्तिमितहृदयमिति विशेषणविशेष्ययोः द्वयोरपि हृदययोः प्रकृतत्वात् श्लेषः ॥ १२६ ॥

तेनापि नापसर्पन्त्यौ दमयन्तीमयं ततः ।
हर्षेणादर्शयत् पश्य तन्विमे तन्वि । मे पुरः ॥ १२७ ॥

क्लिन्नीकृत्याम्भसा वस्त्रं जैनप्रव्रजितीकृते ।
सख्यौ सक्षौमभावेऽपि निर्विघ्नस्तनदर्शने ॥ १२८ ॥

अम्बुनः शम्बरत्वेन मायैषाविरभूदियम् ।
तत्पटावृतमप्यङ्गमनयोः कथयत्यदः ॥ १२९ ॥

वाससा वाऽम्बरत्वेन दृश्यतेयमुपानसत् ।
चार्वोर्हारमणिश्रेणीतारवीक्षणलक्षणा ॥ १३० ॥

तेनेति। ततो जलसेचनानन्तरमयं नलस्तेन सेचनेनापि नापसर्पन्त्यौ नापगच्छन्त्यौ तेन जलसेचनकर्मणा ननु तन्वि! प्रिये! मे मम पुरः पुरःस्थिते पश्येति हर्षेण दमयन्तीमदर्शयत् दमयन्त्यै दर्शयामासेत्यर्थः। कथं? अभिवादिदृशोरात्मनेपदे उपसंख्यानम् इति परस्मैपदे दमयन्त्याः णिकर्तुः कर्मत्वं चिन्त्यम्। १२७।

क्लिन्नीकृत्येति। असौ नलः अम्भसा क्लिन्नीकृत्य आर्द्रीकृत्य जैनप्रव्रजितीकृते दिगम्बरीकृते इत्यर्थः। अभूततद्भावे च्विः। सख्यौ सक्षौमभावेऽपि सक्षौमत्वेऽपि निर्विघ्नमप्रतिबन्धेन स्तनदर्शनं ययोस्ते दृष्टवस्त्रत्वेन सर्वाङ्गव्यक्तेरिति भावः ॥ १२८ ॥

अम्बुन इति। अम्बुनो जलस्य शम्बरत्वेन शम्बरासुरत्वेन च दैत्यो ना शम्बरेऽम्बुनि इति वैजयन्ती। इयं मायैव शाम्बर्येव शम्बरस्य मायया शाम्बरी मायेत्यमरः। कुतः इदं पटावृतमनयोरङ्गं तत्कथयत्याविष्करोति अन्यथा कथं व्यावृतस्य दृष्टेरिति भावः ॥ १२९ ॥

वाससेति। अथवा चार्वोर्हारमणिश्रेण्येव तारा नक्षत्राणि तासां वीक्षणं दर्शनमेव लक्षणं चिह्नं यस्याः सा इयं वाससोऽम्बरत्वेन नभस्त्वेनाकाशत्वेन चोपानसत् उदभात् आकाशस्यानाकारत्वादिति भावः

[illegible] अम्बरमित्यमरः ॥ १३० ॥

ते निरीक्ष्य निजावस्थां ह्रीणे निर्ययतुस्ततः ।
तयोर्वीक्षारसात् सख्यः सर्वा निश्चक्रमुः क्रमात् ॥ १३१ ॥
ता बहिर्भूय वैदर्भीमूचुर्नीतावधीतिनि ! ।
उपेक्ष्ये ते पुनः सख्यौ मर्मज्ञे नाधुनाप्यमू ॥ १३२ ॥
उच्चैरूचेऽथ ता राजा सखीयमिदमाह वः ।
श्रुतं मर्म ममैताभ्यां दृष्टं मर्म मया तयोः ॥ १३३ ॥
मद्विरोधितयोर्वाचि न श्रद्धातव्यमेतयोः ।
अभ्यषिञ्चदिमे मायामिथ्यासिंहासने विधिः ॥ १३४ ॥

ते इति। ते सख्यौ निजावस्थां दृष्ट्वा निरीक्ष्य ह्रीणे लज्जिते सत्यौ ततो देशान्निर्ययतुः तयोः वीक्षारसाद्दर्शनेच्छातः सर्वाः सख्यः क्रमा-न्निश्चक्रमुः निष्क्रान्ताः ॥ १३१ ॥

ता इति। ता सख्यो बहिर्भूय बहिर्निर्गत्य वैदर्भीमूचुः किमिति हे नीतावधीतिनि ! अधीतनीतिशास्त्रे ! इष्टादित्वादीनि प्रत्ययः तस्ये-न्विषयस्य कर्मसप्तमी। अमू मर्मज्ञे सख्यौ अधुनापि ते तव पुनर्नोपेक्ष्ये मर्मज्ञं न प्रकोपयेदिति न्यायादितिभावः। कृत्यानां कर्तरि चेति कर्तरि षष्ठी ॥ १३२ ॥

उच्चैरिति। अथ राजा ताः सखीरूचे उवाच उच्चैरुवाचिरे राज्ञेति पाठान्तरं। किमिति इयं सखी दमयन्ती वो युष्माकमिदमाह किमिति यदेताभ्यां मम श्रुतं मया त्वेतयोस्तत् मर्म रहस्यं दृष्टं मर्मश्रव-णाद्दर्शनं दुःसहमिति भावः ॥ १३३ ॥

मदिति। किन्तु हे सख्यो ! मया विरोधितयोर्विप्रकृतयोरेतयोर्वाचि वचने किं किमिति श्रद्धातव्यं तथा हि विधिर्ब्रह्मा इमे दूत्यौ माया मिथ्या कपटोऽनृतं तयोः सिंहासने अभ्यषिञ्चत् अभिषिक्तवान् तस्माद्विधि-प्रतापो न श्रद्धेय इत्यर्थः ॥ १३४ ॥

धौतेऽपि कीर्त्तिधाराभिश्चरिते चारुणि द्विषः ।
मृषामषीलवैर्जन्म लेखितुं के न शिल्पिनः ॥ १३५ ॥
ते सख्यावाचचक्षाते नकिञ्चिद्ब्रूमहे बहु ।
वच्म्यावस्तत्परं यस्मै सर्व्वे निर्व्वासिता वयम् ॥ १३६ ॥
स्थापत्यैर्न स्म वित्तस्ते वर्षीयस्त्वबलात्कारैः ।
कृतामपि तथा वाचि कारकम्पेन वारणाम् ॥ १३७ ॥
अपयातमितो धृष्टे ! धिग्वामश्लीलशीलताम् ।
इत्युक्ते चोक्तवन्त्यौ व्यतिद्राते स्म ते भिया ॥ १३८ ॥

धौतेऽपीति। कीर्तिधाराभिर्धौतेऽपि चारुणि द्विषां द्विषतः चरिते मृषामषीलवैर्जन्म कलङ्कं लेखितुमुत्पादयितुं के न शिल्पिनः कुशला न सर्वेऽपि कुशला इत्यर्थः ॥ १३५ ॥

तइति। ते सख्यौ वावचक्षाते ऊचतुः किमिति किमपि बहु भूरि ब्रूमहे किन्तु तत्परं तदेव वच्म्याव: यस्मै वयं सर्वेऽपि निर्वासिताः ॥ १३६ ॥

स्थापत्यैरिति। ते सख्यौ वर्षीयस्त्वेन वृद्धत्वेन प्रियस्थिरेत्यादिना वृद्धस्य वर्षादेशः। बलात्कारैः कम्पहस्तैः स्थपतेरिमे भावाः स्थापत्याः कञ्चुकिनः स्थापत्याः सौविदल्लाः कञ्चुकिन इत्यमरः। तैः कृतामपि तथावाचि तादृक् कृतवाक्ये कारकम्पेन वारणां निवारणं न वित्तः स्म न जानीतः स्म जराकम्पभ्रमादिति भावः ॥ १३७ ॥

अपयातमिति। हे धृष्टे ! वराक्यौ ! इतोऽस्माद्देशात् अपयातं गच्छतं वां युवयोरश्लीलशीलतां ग्राम्यभाषणशीलत्वं धिक्। इत्युक्ते भर्त्सिते ते उभे व्यतिद्राते स्म परस्परव्यतिहारेण पलायेते इतीत्य उक्तवन्तः भर्त्सितवन्तः ते व्यतिद्राते स्म परस्परव्यतिहारेण पलायिताः द्रा कुत्सायां गतावित्यस्य धातोर्लटि कर्तरि कर्मव्यतिहार इत्यात्मनेपदम् अदादित्वा

आह स्म तद्गिरा ह्रीणां प्रियां नतमुखीं नलः।
ईदृग्भगण्डमखी कापि निस्त्रपा न मनागपि ॥१३८॥

अहो नापत्रपाकन्ते जातरूपमिदं मुखम् ।
नातितापार्ज्जनेऽपि स्यादितो दुर्वर्णनिर्गमः ॥ १४० ॥

तामथैष हृदि न्यस्य ददौ तल्पतले तनुम् ।
निमील्य च तदीयाङ्गसौकुमार्य्यमभिद्रवत् ॥ १४१ ॥

अक् सर्वत्र द्वित्वे प्रथमपुरुषस्य द्विवचनेषु समानं रूपम् एवन्ते इत्यत्रापि स्वभावात् द्वित्वे पुंसि बहुत्वेऽपि समानरूपम् ॥१३८।

आहेति। अथ नलः तयोः सख्योः गिरा वक्ष्यमाणया वक्ष्याव स्त्वमित्यादिकया ह्रीणां लज्जितां अतएव नतमुखीं प्रियां आह स्म उवाच किमित्य काङ्क्षायां सार्द्धश्लोकेनाह ईदृगित्यादिकया ह्रीणां ईदृशौ भण्डेनिर्लज्जे सख्यौ यस्याः तादृशी सखी का नद्युतश्चेति कप् समासान्तः। सापि त्वं मनागपि निस्त्रपा निर्लज्जा नासि नं दोषलेशोऽपि नाप्नोति चित्रमित्यर्थः ॥ १३८ ॥

अहो इति। अहो जातरूपं सम्पन्नसौन्दर्यं इति। सुवर्णङ्गाङ्गेयकरं जातरूप मित्यमरः। इदन्ते मुखमपगता त्रपा यस्य तदपत्रपं शेषिकः कप् प्रत्ययः तन्नभवतीति नापत्रपाकं नापत्रपं नसमासः अन्यातस्य पवीक्षतस्य दलीकारितस्य पाकः पत्रपाकः तद्रहितमपत्रपाकं न भवति नापत्रपाकं पत्रपाकसंस्कृत मेवेत्यर्थः। अतितापार्जनेऽप्यत्यन्त दाहकरणेऽपि इतोऽस्मात् सुवर्णात् निर्वर्णनिर्ममः श्यामिकानिर्गमः न स्यादिति विरोधः। अतएव अहो आश्चर्यं सखी प्रबला इति दुःखेत्पा तेऽपि मुखाद्दुरक्षरनिर्गमनं न स्यादिति विरोधाद्विरोधाभासोऽलङ्कार इति चित्रम् ॥ १४० ॥

तामिति। अथैष नल स्तां प्रियां हृदि वक्षसि न्यस्य निधाय तल्पतले शय्योपरि तनुं स्वदेहं ददौ शयितवानित्यर्थः। तदीयाङ्गस्य प्रिया-

न्यस्य तस्याः कुचद्वन्द्वे मध्येनीवि निवेश्य च।
स पाणिः सफलं चक्रे तत्करग्रहणश्रमम्॥ १४२॥

स्थापितामुपरि स्वस्य तां मुदा मुमुदे वहन्।
तदुद्वहनकर्तृत्वमाचष्ट स्पष्टमात्मनः॥ १४३॥

स्विद्यत्कराङ्गुलीलुप्तकस्तूरीलेपमुद्रया।
फूत्कार्यपीडितौ चक्रे स सखीषु प्रियास्तनौ॥ १४४॥

तत्कुचे नखमारोप्य चमत्कुर्वंस्तयेरितः।
सोऽवादीत्तां हृदिस्थस्ते किं मामभिनदेष न॥ १४५॥

शरीरस्य सौकुमार्यं मार्दवं निमील्य चक्षुषी निमील्येत्यानन्दानुभवोक्तिः। अभिस्वदन् स्वदेशौ वक्षःपधाद्गस्वः॥ १४१॥

न्यस्येति। नलः तस्याः कुचद्वन्द्वे पाणिं न्यस्य निधाय मध्येनीवि नीवीमध्ये पारेमध्ये षष्ठ्या वेत्यव्ययीभावः। निवेश्य प्रवेश्य च अर्थात्पाणेः कर्मत्वं पाणेः स्वकरस्य तत्करग्रहणश्रमं तत्पाणिग्रहणप्रयासं सफलं चक्रे तादृग्विधः प्रियास्पर्शः तस्य महदानन्दफलमित्यर्थः॥ १४२॥

स्थापितामिति। स मुदा हर्षेण स्वस्योरसि स्थापितां प्रियां वहन् धारयन् मुमुदे आनन्दे आत्मनस्तस्या भैम्याः उद्वहने विवाहे कर्तृत्वं स्पष्टं आचष्ट अनुद्वहत एव उरसि वहनायोगादिति भावः॥ १४३॥

स्विद्यदिति। स नलः प्रियायाः स्तनौ स्विद्यन्तीभिः कराङ्गुलीभिः लुप्तः प्रमृष्टो यः कस्तूरीलेपः स एव मुद्रा चिह्नं तया कृत्वा सखीषु विषये फूत्कारेणोर्ध्वश्वासमुखानिलेन तादृक् पीडितं पीडनं ययोः तौ फूत्कार्यपीडितौ चक्रे कस्तूरीलेपमुद्रया सर्वाभ्यः कुचयोः करपीडनं रचयामास॥ १४४॥

तदिति। नलः स्तनकुचे नखमारोप्य निखन्य चमत्कुर्वन् तया ईरितः ननु तव हृदिस्थं सर्पमस्य इति कृतप्रत्ययः। हृदयादेरुपसंख्या-

अहो अनौचितीयत्ते हृदि शुद्धेऽप्यशुद्धवत् ।
अङ्कः खलैरिवाकल्पि नखैस्तीक्ष्णमुखैर्मम ॥ १४६ ॥
यत्स्पृशति नितम्बोरू यदालिङ्गति च स्तनौ ।
भङ्क्ते गुणमयं तत्ते वासः शुभदशोचितम् ॥ १४७ ॥
लीनचीनांशुकं स्वेदि दुरालोक्यं विलोकयन् ।
तन्नितम्बं स निश्वस्य निनिन्द दिनदीर्घताम् ॥ १४८ ॥

र्मिति समासस्यालुक् । तमन्तर्गतमां नाभिनत् न व्यदारयदिति ता प्रिया अवादीत् अत्र क्षये नखरोपात् नखदर्शनचमत्कार इत्यसङ्गत्यलङ्कारः कार्य्यकारणयोर्भिन्नदेशतया सङ्गतिरिति लक्षणात् ॥ १४५ ॥

अहो इति । हे प्रिये ! मम तीक्ष्णमुखं निशिताग्रं निष्ठुरवाग्भिश्च नखैः खलैः धूर्त्तैरिव शुद्धे अदुष्टेऽपि ते हृदि हृदये अशुद्धवत् दुष्ट इव तत्र तस्येवेति यतिप्रत्ययः । अङ्कश्चिह्नं कलङ्कश्चाकल्पि इति कल्पित इयन्निर्दोषे दोषकल्पना अनौचिती । अहो इति प्रगृह्यत्वात् प्रगृह्याचीति प्रकृतिसन्धिः ॥ १४६ ॥

यदिति । हे प्रिये ! गुणमयं तन्तुमयं सौशिल्यादिमयञ्च ते तव वासः नितम्बौ ऊरू च नितम्बोरू प्राण्यङ्गत्वाद् द्वन्द्वैकवद्भावः । यत्स्पृशति ते तव स्तनौ यदालिङ्गत्याश्लिष्यति तत् शुभदशायां शोभनतन्तूनां ज्योतिःशास्त्रप्रसिद्धशुक्रादिशुभावस्थानां ते उचितमर्हं भङ्क्ते दशावस्थायां वस्त्रान्ते स्पर्शाद्वा अपीति विश्वः । शुभग्रहदशायां हि भङ्क्ते जन्म शुभं फलम् । तथा पटादिवर्जितं प्रान्तं प्रियं भवेदिति प्रसिद्धमिति भावः ॥ १४७ ॥

लीनेति । स नलः स्वेदि सात्त्विकोदयात् स्वेदवत् अतएव लीनचीनांशुकं सौक्ष्मवस्त्रमतएव दुरालोक्यमीषल्लक्ष्य तस्या नितम्बं विलोकयन् पश्यन् निश्वस्येति विषादानुभवोक्तिः दिनस्य दीर्घतामधिक्यं निनिन्द ॥ १४८ ॥

देशमेव दर्दशासौ प्रियादन्तच्छदान्तिकम् ।
चकाराधरपानस्य तत्रैवालीकचापलम् ॥ १४९ ॥
न क्षमे चपलापाङ्गि ! सोढुं स्मरशरव्यथाम् ।
तत्प्रसीद प्रसीदेति स तां प्रीतामकोपयत् ॥ १५० ॥
नेत्रे निषधनाथस्य प्रियाया वदनाम्बुजम् ।
ततस्तनतटौ ताभ्यां जघनं घनमीयतुः ॥ १५१ ॥
इत्यधीरतया तस्य हठवृत्तिविशङ्किनी ।
झटित्युत्थाय सोत्कण्ठमसारन्वसरत्सखी ॥ १५२ ॥

देशमिति । असौ नलः प्रियादन्तच्छदस्याधरस्यान्तिकदेशमुपान्तभागमेव दर्दश दष्टवान् तत्रैव देशे अधरपानस्य अलीकचापलं चकार तत्रैव रतिकाले मुख्यस्त्रीणां शुक्रमाक्षेटके शुभमिति स्मृत्या तस्य कालान्तरे तस्याशुद्धत्वादिति भावः ॥ १४९ ॥

अथास्य कन्दर्पत्वलक्षणमौत्सुक्यमेव श्लोकद्वयेनाह नेत्यादि । हे चपलापाङ्गि ! हे चञ्चलाक्षि ! स्मरशरैर्व्यथां तन्नृतां पीडां सोढुं न क्षमे न शक्नोमि तत् तस्मात् प्रसीद प्रसीद भयमजस्रं भजेत्येव स नलः प्रीतां मुदिताम् अपि तां प्रियाम् अकोपयत् । अनवसरचापलेन कोपयामास ॥ १५० ॥

नेत्रे इति । निषधनाथस्य नेत्रे द्वयी प्रियाया वदनाम्बुजम् ईयतुः प्रापतुः ततो वदनाम्बुजात् स्तनतटौ कुचोत्सङ्गभागौ ईयतुस्ताभ्यां स्तनतटाभ्यां घनं जघनम् ईयतुः । अत्र नेत्रयोः क्रमेणैकमनेकस्मिन्निन्द्रक्षणात् पर्यायालङ्कारः ॥ १५१ ॥

इतीति । तस्य स्वप्रियस्याधीरतया कातरतया हठवृत्तिं बलात्कारप्रवृत्तिं विशङ्कत इति तथा शङ्किनी असौ भैमी झटिति सहसोत्थाय [illegible] सखीं स्वसरदनुससार ॥ १५२ ॥

न्यवारीव यथाशक्ति स्यन्दमन्दं वितन्वता।
भैमी कुचनितम्बेन नलासम्भोगलोभिना ॥ १५३ ॥

अपि श्रोणिभरस्वैरां धर्त्तुं तामशकन्न सः।
तदङ्गसङ्गजस्तम्भो गजस्तम्भोरुदोरपि ॥ १५४ ॥

आलिङ्गालिङ्ग तन्वङ्गि! मामित्यर्द्धगिरं प्रियम्।
स्मित्वा निवृत्य पश्यन्ती द्वारपारमगादसौ ॥ १५५ ॥

प्रियस्याप्रियमारभ्य तदन्तर्दूनयाऽनया।
शेके शालीनयाऽऽलिभ्यो न गन्तुं न निवर्त्तितुम् ॥ १५६ ॥

न्यवारीव। भैमी नलसम्भोगलोभिना तद्गुणेन अतएव स्यन्दगमनं मन्दम् वितन्वता मन्थरं कुर्वता गतिं प्रतिबध्नतेत्यर्थः। कुचौ नितम्बश्च तेन कुचनितम्बेन प्राण्यङ्गत्वादेकवद्भावः। यथा शक्ति न्यवारीव निवारितेवेत्युत्प्रेक्षा ॥ १५३ ॥

अपीति। स नलः गजस्तम्भः आलाने इव ऊरू महान्तौ दोषौ भुजौ यस्य स महाभुजः सन्नपि भुजबाहू प्रवेष्टो दोरित्यमरः। श्रोणिभरेण स्वैरां मन्दां मन्दगमनामपि मन्दस्वच्छन्दयोः स्वैरमित्यमरः। तां प्रियां तदङ्गसङ्गेन जातः स्तम्भः निष्क्रियाङ्गलक्षणसात्त्विकविकारो यस्य स सन् धर्त्तुं स नाशकत्। स्वयं निर्व्यापारस्य किं सहकारी सम्पद्यतेति भावः ॥ १५४ ॥

आलिङ्गेति। हे तन्वि! तन्वङ्गि! मामालिङ्ग आलिङ्गेति अर्द्धोक्तिर्गीर्यस्य तं प्रियं सा भैमी स्मित्वा मन्दं हसित्वा निवृत्य पश्यन्ती द्वारस्य पारमपरभागमगात् द्वारमतिचक्रामेत्यर्थः ॥ १५५ ॥

प्रियस्येति। प्रियस्य पत्युः अतिक्रमरूपमप्रियमारभ्य आचय्यान्तरन्तःकरणे दूनया परितप्तया ओदितश्चेति निष्ठानत्वं शालीनतया अधृष्टतया अनया भैम्या आलिभ्यो गन्तुमपि गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ इति वीप्सायां

पुरमथनसुपास्य पश्य पुण्यै-
रधरितमेनमनन्तरं त्वदीयैः ॥ १५९ ॥

आनन्दं हठमाददन्निव हरध्यानार्चनादिक्षण-
स्यासत्तावपि भूपतिः प्रियतमाविच्छेदखेदालसः ।
पश्चाद्द्वारदिशं प्रति प्रतिमुहुर्द्राङ्निर्गतप्रेयसी-
प्रत्यावृत्तिधिया दिशन् दृशमसौ निर्गन्तुमुत्तस्थिवान् ॥ १६० ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतम्
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
अन्याक्षुण्णरसप्रमेयभणितौ विंशस्तदीये महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥ १६१ ॥

पुण्यैः तत्कर्तृसुकृतैः रधरित एनं पश्य पुरहरप्रसादात् सूर्याद्यधिक प्रतापोष्णा भवेदित्यर्थः ॥ १५९ ॥

आनन्दमिति । असौ भूपतिर्नलो हरध्यानस्यार्चनादिक्षणस्य तत्काल्स्यासत्तौ सन्निकर्षे प्रियतमाविच्छेदखेदेन वियोगदुःखेनालसोऽजड सन् अतएव द्राङ् निर्गताया प्रेयस्याः प्रत्यावृत्तिधिया आनन्दं सुखं हठं आददन् आदरमाददानइव पश्चाद्द्वारदिशं प्रति दिशन् दृशं निर्गन्तुं नि-र्यातुं उत्तस्थिवान् स्वयमुत्थितः ॥ १६० ॥

श्रीहर्षमिति । अन्यैरक्षुण्णा अपूर्वा रसाः शृङ्गारादयः प्रमेयाः पदार्थाश्च यासु भणितिषु तस्मिन्निह काव्ये । तृतीयादिषु भाषितपुंस्कमित्यादिना पुंवद्भावः विंशतीति शब्दस्य लोपः गतमन्यत् ॥ १६१ ॥

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां जीवातुसमाख्यायां नैषधव्याख्यायां विंशः सर्गः ॥ २० ॥

# नैषधचरितम्।

## एकविंशः सर्गः

तं विदर्भरमणीमणिसौधादुज्झितान्तनु दर्शितसेवैः।
अर्पणान्निजकरस्य नरेन्द्रैरात्मनः करदता पुनरूचे॥ १ ॥

तस्य चीनसिचयैरपि बद्धा पद्धतिः पदयुगात् कठिनेति।
तां व्यधत्त शिरसां खलु माल्यै राजराजिरभितः प्रणमन्ती॥ २॥

द्रागुपाह्रियत तस्य नृपैस्तद्दृष्टिदानबहुमानकृतार्थैः।
स्वस्वदेश्यमथरत्नमपूर्व्वं यत्प्रकल्पितगुणाधिकचित्रं॥ ३ ॥

---

तमिति। विदर्भरमण्या वैदर्भ्याः मणिसौधान्मणिमयप्रासादात् उज्झितान्तं निर्गच्छन्तं तं नलं मनु प्रति तत्र दर्शितसेवैरित्यर्थः। अनो लक्षणार्थे कर्मप्रवचनीयत्वात्तद्योगे द्वितीया। नरेन्द्रैः निजकरस्यार्पणात् अवस्थावलम्बनात् आत्मनः स्वस्य करं हस्तं बलिं च ददातीति करदाः बलिहस्तार्पकः। करा इत्यमरः। तेषां भावस्तत्ता सा पुनः बलिदानादेव करदत्वे सिद्धे पुनः हस्तदानेन साधनवैरस्यात्पुनरुक्तिरित्यर्थः॥ १ ॥

तस्येति। राजराजिः नृपपङ्क्तिः अभितः समन्तात्प्रणमन्ती चीनसिचयैः पट्टवस्त्रैः बद्धा आच्छादितापि पद्धतिर्मार्गः। तस्य नलस्य पदयुगात्कठिनेति हेतोः पञ्चमी विभक्तिः इति पञ्चमी। तां दम्पती शिरसां माल्यैः मालाभिः साधनैः व्यधत्त पिच्छितवतीं खलु॥ २॥

द्रागिति। अथ प्रणामानन्तरं तस्मै नलाय दृष्टिदानबहुमानेन कृतार्थैः नृपैः स्वस्वां स्वस्यान्देशे भवं स्वस्वदेश्यं रत्न साधुरिति

अङ्गुलीचलनलोचनभङ्गिभ्रूतरङ्गविनिवेदितदानम् ।
रत्नमन्यनृपढौकितमन्ये तत्प्रसादमलभन्त नृपास्तत् ॥ ४ ॥
तानसौ कुशलसूनृतमेकैस्तर्पितानथ पितेव विसृज्य ।
अस्त्रशस्त्रखुरलीषु विनिन्ये शैष्यकोपनमितानमितौजाः ॥ ५ ॥
मर्त्यदुष्प्रचरमस्त्रविचारं चारु शिष्यजनतामनुशिष्य ।
खेदबिन्दुकितगोधिरधीरं स श्वसन्नभवदाप्लवनेच्छुः ॥ ६ ॥
यक्षकर्दममृदून्मृदिताङ्गं प्राक् कुरङ्गमदमीलितमौलिम् ।
गन्धवारिभिरनुष्णितभृङ्गैरङ्गना सिषिचुरब्जकुचास्तम् ॥ ७ ॥

यमस्यय । यत्नेन कल्पितैः सम्पादितैः गुणैरधिकं चित्रं माश्चर्यमपूर्वं रत्नं तस्य नलस्य दूतैः प्राभृतरूपाहियत उपहृतम् ॥ ३ ॥

अङ्गुलीति । अङ्गुलीचलनेन लोचनभङ्ग्या च भ्रूतरङ्गेन विनिवेदितं ज्ञापितं दानं यस्य अन्यैः नृपैः ढौकितम् उपहृतं तस्य नलस्य प्रसादं अनुग्रहं अन्ये नृपा रत्नं अलभन्त ॥ ४ ॥

तानिति । अमितमोजो यस्यासौ नलः कुशलस्य वादस्य सूनृतस्य प्रियस्य वचनमेकैः तर्पितान् तान् पितेव विसृज्य शैष्यकेन शिष्यत्वेन योपधाद्गुरूपोत्तमाद्वुञ्। उपनमितान् समेतान् अस्त्रेष्वाग्नेयादिषु शस्त्रेषु धनुरादिषु खुरलीषु श्रमस्थानविशेषेषु विनिन्ये शिक्षितवान् ॥ ५ ॥

मर्त्येति । स नलः मर्त्यदुष्प्रचरं दुरनुमानं मस्त्रविचारं मस्त्रशिक्षां शिष्यजनतां शिष्यसमूहं चारु यथा भवति तथानुशिष्य शिक्षयित्वा खेदेन बिन्दुकिता सञ्जातबिन्दुका गोधिर्ललाटं यस्य ललाटमलिकं गोधिः स्त्री तस्मात्तु गोधिकेति यादवः । स तादृशः सन् अधीरमधिकं यथा भवति तथा श्वसन् आप्लवनं स्नानमिच्छुरभवत् ॥ ६ ॥

यक्षेति । प्राक् प्रथमं यक्षकर्दमेन कर्पूरादियोगजेन कर्पूरागुरुकस्तूरीतक्कोलैर्यक्षकर्दमैरित्यमरः । मृदु यथा तथा उन्मृदितं घर्षितमङ्गं यस्य कुरङ्गमदेन कस्तूर्यादिना मीलितः सङ्कुलितः मौलिर्यस्य तं नलं

मुक्तमाप्य दमनस्य भगिन्या भूमिरात्मदयितं धृतरागा ।
अङ्गमङ्गमनु किं परिरेभे तं मृदो जलमृदु ग्रहयालुम् ॥ ११ ॥
मूलमध्यशिखरश्रितवेध:शौरिशम्भुकरकाङ्घ्रिशिरस्थैः ।
तस्य मूर्ध्नि चकरे शुचिदर्भैर्वारि वान्तमिव गाङ्गतरङ्गैः ॥ १२ ॥
प्राणमायतवतो जलमध्ये मज्जिमानमभजन्मुखमस्य ।
आपगापरिवृढोदरपूरे पूर्वकालमुदितस्य सुधांशोः ॥ १३ ॥
मर्त्यलोकमदनः सदृशत्वं बिभ्रदभ्रविशदद्युतितारम् ।
अम्बरं परिदधे विधुमौले स्पर्द्धयेव दशदिग्वसनस्य ॥ १४ ॥

मुक्तमिति। दमनस्य भगिन्या भैम्या मुक्तं परित्यक्तं मृदो मृत्तिका ग्रहयालुं ग्रहीतारमात्मनोदयितं नलं आप्य धृतोरागा रक्तवर्णस्य रागोऽनुरक्तो मात्सर्यं क्लेशे च लोहितादिष्विति विश्वः। एतादृशी मृत् अत्र स्मृतिः विप्रो गौरमृद. प्रोक्ताः चत्वा रक्ताः प्रकीर्तिता इति। जलेन मृदु भूमि रङ्ग मङ्गं प्रत्यवयवं परिरेभे परिरब्धवती ॥ ११ ॥

मूलमिति। मूलमध्यशिखराणि दर्भाणामादिमध्याग्राणि श्रितानां प्राप्तानां यथाक्रम वेधः शौरिशम्भूनां ब्रह्मविष्णुरुद्राणां कराङ्घ्रिशिरःसु करपादजटाजूटेषु तिष्ठन्तो अत्र स्मृतिः कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः। कुशाग्रे शङ्करं विद्यादिति। तै र्गाङ्गै र्गङ्गासम्बन्धिभि स्तरङ्गै र्वान्तं निष्ठ्यूतमिव शुचि निर्मलं वारि दर्भैः कर्तृभि स्तस्य नलस्य मूर्ध्नि चकरे कीर्णं क्षिविक्षेप इति धातोः कर्मणि लिट् ॥ १२ ॥

प्राणमिति। जलस्य मध्ये प्राणमायतवतः प्राणायामकृतवतः तस्य नलस्य मुखं कर्तृ आपगापरिवृढस्य समुद्रस्योदरपूरे मध्ये जलपूरे पूर्वकाल मुदयात्प्रागुदितस्य स्थितस्य सुधांशो श्चन्द्रस्य मज्जिमानमभजत् ॥ १३ ॥

मर्त्यलोकमिति। मर्त्यलोकमदनः नल सदृशत्वं बिभ्रदभ्रस्येव विशदा

सम्यगस्य जपतः श्रुतिमन्त्राः सन्निधानमभजन्त कराब्जे ।
शुद्धबीजविशदस्फुटवर्णाः स्फाटिकाक्षवलयच्छलभाजः ॥ १८ ॥
पाणिपर्व्वणि यवः पुनराख्यद्दैवतर्पणयवार्पणमस्य ।
न्युप्यमानजलयोगितिलौघैः स द्विरुक्तकरतानुतिलोऽभूत् ॥ १९ ॥
पूतपाणिचरणः शुचिनोच्चैरध्वनानितरपादहतेन ।
ब्रह्मचारिपरिचारिसुरार्चावेश्म राजऋषिरेष विवेश ॥ २० ॥

सम्यगिति । श्रुतिमन्त्राः शुद्धैर्बीजैर्विशदानि निर्मलानि स्फुटवर्णानि अक्षराणि येषां ते शुद्धबीजाश्च ते विशदस्फुटवर्णाश्चेति विशेषणसमासः । श्रुतिमन्त्राः स्फाटिकस्याक्षवलयस्याक्षमालायाः छलं व्याजं भजन्ति ये स्फाटिकाक्षवलयमपि शुद्धवलयमपि शुद्धबीजविशदवर्णं च भवतीति तादृशाः सन्तः सम्यग् यथा तथा जपतोऽस्य नलस्य कर एवाब्जे सन्निधानमभजन्त प्राप्ताः ॥ १८ ॥

पाणिरिति । अस्य नलस्य पाणेः पर्वणि यवः यवाकारा स्पष्टरेखा दैवे दैवसम्बन्धिनि तर्पणे यवानामर्पणं कर्म पुराख्यत् पुनरुक्तमकोरत् न्युप्यमानेन पितृभ्यो दीयमानेन पितृदानं निवापः स्यादित्यमरः । जलेन युज्यन्ते ये तैस्तिलानां ओघैः समूहैर्द्विरुक्ता करतानुतिला तिलाकाररेखा यस्य सोऽभूत् भाग्यवतां हस्ते यवाकाराश्च तिलाकाराश्च रेखा दृश्यन्ते ॥ १९ ॥

पूतपाणिरिति । एष राजर्षिर्नलः ऋत्यक इति प्रकृतिभावः । पूतौ पाणिचरणौ यस्य स तादृशः सन् ब्रह्मचारिव्यतिरिक्तानां पादैर्हतः यस्य इतरपादहतस्ताडितो न भवतीत्यनितरपादहतः तेन शुचिना शुद्धेन उच्चैः उन्नतेनाध्वना मार्गेण ब्रह्मचारिणः परिचारका यत्र तत्सुरार्चावेश्म देवपूजागृहं विवेश प्रविष्टवान् ॥ २० ॥

क्वापि यन्नभसि धूपजधूमैर्मेचकागुरुभवैर्भ्रमराणाम्।
भूयते स्म सुमनःसुमनःस्रग्दामधामपटलेऽपटलेन ॥ २१ ॥
साङ्कुरेव रुचिपीततमा यैर्दीपैः पुरास्ति रजनीरजनीव।
ते धृता वितरितुं त्रिदशेभ्यो यत्र हेमलतिका इव दीपाः ॥ २२ ॥
अङ्कचुम्बिघनचन्दनपङ्कं यत्र गारुडशिलाजममत्रम्।
प्राप केलिकवलीभवदिन्दोः सिंहिकासुतमुखस्य सुखानि ॥ २३ ॥

क्वेति। यस्य सुराचार्यवेश्मनो नभसि क्वापि कस्मिंश्चित्प्रदेशे सुमनःसुमनसां जातिकुसुमानां मालायां परिवृते पुष्पे देवे चेति विश्वः स्रग्दाभिर्निर्मितस्य धाम्नो गृहस्य पटले तस्मिन् मेचकागुरुभवैः धूपज-धूमैः भ्रमराणां पटलेन समूहेन भूयते स्म भूतम् ॥ २१ ॥

साङ्कुरेति। रजनी रात्रौ यैर्दीपैः शुचिभिर्दीप्तिभिः साधनैः पीतं ग्रस्तं तमः अन्धकारं यस्यां सा रुचिपीततमा सती साङ्कुरा तेजोऽङ्कुरसहितेव पुरास्ति आसीत् पुरानुङ्क्त इति भूते लट्। रजनी रात्रिर्यैर्दीपैः रुचिभिर्दीप्तिभिः पीततमा अत्यर्थं पीतवर्णा सती साङ्कुरा न सप्ररोहा हरिद्रेव रजनी पुरास्ति रजनी नीतिकाला हरिद्रायामिति विश्वः। हेमलतिका इव स्थिता स्ते दीपाः यत्र वेश्मनि त्रिदशेभ्यो वितरितुं धृता अर्पिताः ॥ २२ ॥

अङ्केति। यत्र वेश्मनि अङ्के अन्तिके गारुडशिलाजं मरकतशिलाजं अमत्रं पात्रं अङ्कं चुम्बति स्पृशति यः घनः सान्द्रः चन्दनपङ्को यस्य तत्तादृशः सत् केलिना क्रीडया कवलीभवदिन्दोः लतायादिषु भाषित-पुंस्कं पुंवद्भावकर्तेति पुंवद्भावः। सिंहिकासुतमुखस्य राहुमुखस्य राहुरानन्दनो ... सुखानि प्राप प्राप्तवान् ॥ २३ ॥

गर्भमेणमदकर्द्दमसान्द्रं भाजनानि रजतस्य भजन्ति ।
यत्र साम्यमगमन्नमृतांशोरङ्कुरङ्ककलुषीकृतकुक्षेः ॥ २४ ॥
उज्जिहानमुकुताङ्कुरशङ्का यत्र धर्म्मगहने खलु तेने ।
भूरिशर्करकरम्भवलीनामालिभिः सुगतसौधसखानाम् ॥२५॥
खर्व्वमाख्यदमरौघनिवासं पर्व्वतं क्वचन चम्पकसम्पत् ।
मल्लिकाकुसुमराशिरकार्षीद् यत्र च स्फटिकसानुमनुच्चम् ॥२६॥
स्वात्मनः प्रियमपि प्रतिगुप्तिं कुर्व्वती कुलवधूमवजज्ञौ ।
हृद्यदैवतनिवेद्यनिवेशाद्यत्र भूमिरवकाशदरिद्रा ॥ २७ ॥

गर्भमिति । यत्र वेश्मनि रजतस्य भाजनानि एणमदकर्द्दमेन कस्तूरीपङ्केन सान्द्रं गर्भं मध्यप्रदेशं भजन्ति प्राप्नुवन्ति अङ्केन चिह्नेन रङ्कुणा मृगेण कलुषीकृतः कुक्षिर्यस्यामृतांशो चन्द्रस्य साम्यं समतामगमन् गतानि ॥ २४ ॥

उज्जिहानेति । धर्मगहने धर्मारण्ये यत्र वेश्मनि सुगतस्य बुद्धस्य सौधानां चैत्यानां सखायः सदृशाः सुगतसौधसखाः, राजाहः सखिभ्यष्टच् । तेषां भूरयः शर्कराः सिताश्च करम्भाणां दधिसक्तूनामेव करम्भः दधि सक्तव इत्यमरः । वलीनाङ्कालिभिः पङ्क्तिभिः कर्तृभिरुज्जिहानेषु-द्गच्छत्सु मुकुताङ्कुरेषु पुण्यप्ररोहेषु शङ्का तेने कृता खलु ॥ २५ ॥

खर्वमिति । अत्र वेश्मनि क्वचन प्रदेशे चम्पकानां सम्पत्समृद्धिः अमरौघस्य देवसमूहस्य निवासं पर्वतं मेरुं खर्वं ह्रस्वं नाख्यत् उक्तवती मल्लिकाकुसुमानां राशिः स्फटिकसानुं कैलासं अनुच्चं ह्रस्वमकार्षीत ॥ २६ ॥

स्वात्मन इति । यत्र वेश्मनि भूमिः पृथिवी हृद्यानां मनोज्ञानां दैवतानि दैव्यानां देयोपहाराणां निवेशनात् स्थापनाद्धेतोरवकाशदरिद्रा निरवकाशा सती स्वात्मनः प्रियं भर्तारमपि प्रत्युद्दिश्य गुप्तिं गोपनं कुर्वन्ती कुलवधूमवयुज्ञे ज्ञातवती तत्सदृशी जातेत्यर्थः ॥ २७ ॥

तत्तदर्यमरहस्यजपेषु स्रङ्मयः शयममुष्य बभाज ।
रक्तिमानमिव शिक्षितुमुच्चै रक्तचन्दनजबीजसमाजः ॥ ३१ ॥

अर्चयन् हरकरं स्मितभाजा नागकेसरतरोः प्रसवेन ।
सोऽयमापयदतिर्यगवाग्दिक्पालपाण्डुरकपालविभूषाम् ॥३२॥

नीलनीररुहमाल्यमयीं स न्यस्य तस्य गलनालविभूषां ।
स्फाटिकीमपि तनुं निरमासीन्नीलकण्ठपदसान्वयतायै ॥३३॥

प्रीतिमेष्यति कृतेन समेहक्कर्मणा पुररिपुर्मदनारिः ।
तत्पुरः पुरमनोऽयमधाचीद्रूपरूपमथ कामशरञ्च ॥ ३४ ॥

तदिति । तेषामर्यम्णः सूर्यस्य रहस्यानां मन्त्राणां जपेषु स्रङ्मयो मालामयो रक्तचन्दनजानां कुङ्कुमचन्दनोद्भवानां बीजानां तीलपर्णीतु रक्ताङ्गं चन्दनन्तु कुचन्दन मित्यमरः । समाजः समूहः उच्चैरधिकं रक्तिमानं शिक्षितुमिव अमुष्य नलस्य शयं हस्तं बभाज प्राप्तवान् ॥ ३१ ॥

अर्चयन्निति । सोऽयं स्मितभाजा नागकेसरतरोः वृक्षविशेषस्य प्रसवेन कुसुमेन साधनेन हरस्य शम्भोः करं हस्तं अर्चयन् तिरश्चिभ्यो दिग्भ्यः अवाच्याश्च दिशः अधरस्याः अन्यां अतिर्यगवाचितां दिशं मूर्ध्वां पालयति यः तस्य ब्रह्मणः पाण्डुरं कपालं तस्य भूषां आपयत् प्रापितवान् ॥ ३२ ॥

नीलेति । स नलः तस्य हरस्य नीलनीररुहमाल्यमयीं इन्दीवरदाम गलनालस्य विभूषां न्यस्य समर्प्य स्फाटिकीं स्फटिकमयीं अपि तनुं शरीरं नीलकण्ठ इति पदस्य सान्वयतायै अन्वर्थताय निरमासीत् कल्पितवान् माङ्मान इति धातोर्भौवादिकाल्लुङ् ॥ ३३ ॥

प्रीतिमिति । पुररिपुर्मदनारिः शम्भुः कृतेन समेहक्कर्मणा यतः प्रीतिमेष्यति अतः कारणादयं नलः तस्य पुररिपोः मदनारेश्च पुरः अग्रतः यथाक्रमं धर्मरूपं दुर्गरूपं असुरपुरञ्च पुरं पुरो शरीरे च

उत्तमं स महति स्म महीभृत् पूरुषं पुरुषसूक्तविधानैः ।
द्वादशापि च स केशवमूर्त्तीर्द्वादशाक्षरमुदीर्य ववन्दे ॥ ३९ ॥
मल्लिकाकुसुमकुड्मलकेन स भ्रमीवलयितेन कृते तम् ।
आसने निहितमैक्षत साक्षात् कुण्डलीन्द्रतनुकुण्डलभाजम् ॥४०॥
मेचकोत्पलमयी बलिबन्धुस्रहालिखगुरसि स्फुरति स्म ।
कौस्तुभाख्यमणिकुट्टिमवास्तुश्रीकटाक्षविकटायितकोटिः ॥ ४१ ॥

स्यानुक्रमसमवायत्वादक्षमर्यादिमाक्षुरिति भट्टक्षीरस्वामी । तथा च जपिवर्मिष्यां वेति महोपाध्यायवर्धमानसूत्रम् । व्यापृतस्य व्यापारवतोऽस्य नलस्य नवपल्लवस्येव लीला विलासो यस्य तं पाणिं रुद्रपरान् परेषां सुपरितनानामक्षराणां श्रेणी रुद्राक्षमाला भक्तानां भक्तिः प्रकारो मालेवाश्रयत श्रितवती ॥ ३८ ॥

उत्तममिति । स महीभृन्नलः उत्तमं पूरुषं पुरुषसूक्तस्य विधानैः विधिभिर्महतिस्म पूजितवान् स नलो द्वादशाक्षरं मन्त्रं मुदीर्य द्वादशापि च केशवस्य मूर्तीर्ववन्दे ॥ ३९ ॥

मल्लिकेति । स नलो भ्रमा वलयितेन वलयीकृतेन मल्लिकाकुसुमानां कुड्मलकेन कुड्मलमालारूपया मालया कृते राजितकुड्मला लिस्रमरः । कृतेति कृताविति जन् । मल्लिकाकुसुमकुड्मलकेन भ्रमीवलयितेन कृते तमित्यत्र पादान्तगुरुत्व छन्दःशास्त्रेऽभ्युपगम्यतं कृते आसने निहितं उत्तमं पुरुषं कुण्डलीन्द्रस्य शेषस्य सम्बन्धिन्या तनोः शरीरस्य कुण्डलं वलयं भजति प्राप्नोति यस्तं साक्षादैक्षत ॥ ४० ॥

मेचकेति । बलेरसुरविशेषस्य बन्धुः रुखा तस्य बलिनः बन्धोः सन् विष्णोरुरसि मेचकोत्पलमयी तस्य नलस्य बलिस्रक् पूजामाल्यं बलिः पूजोपहारः स्यात् षष्ठिर्दैत्यो बलिः कर इति विश्वः । कौस्तुभाख्यं कौस्तुभरत्नमेव मणिकुट्टिमं मणिनिबद्धं वास्तु वेश्मभूर्यस्यास्तस्या श्रियो

स्वर्णकेतकशतानि स हेम्नः पुण्डरीकघटनां रजतस्य ।
मालयाऽरुणमणेः करवीरं तस्य मूर्ध्नि पुनरुक्तमकार्षीत् ॥४२॥
नाल्पभक्तबलिरन्ननिवेद्यैस्तस्य हारिगमदेन स कृष्णः ।
शङ्खचक्रजलजातवदर्चः शङ्खचक्रजलपूजनयाऽभूत् ॥ ४३ ॥
रात्रि कृष्णगुरुधूपजधूमाः पूजयत्यहिरिपुध्वजमस्मिन् ।
निर्ययुर्भवहृता भुजगा भीदुर्यशोमलिनिता इव जालैः ॥ ४४ ॥

लक्ष्म्याः कटाक्षेणापाङ्गदर्शनेन विकटायिताः विशालीभूताः कोटयो यस्याः सा तादृशी मतो स्फुरतिस्म शुशुभे ॥ ४१ ॥

स्वर्णेति । तस्य विष्णोर्मूर्ध्नि स्वर्णकेतकानां शतानि हेम्नः सुवर्णस्य मालया पुण्डरीकाना मसिताम्भोजानां घटनां रचनां रजतस्य मालया करवीरं कुसुम अरुणमणेः पद्मरागस्य मालया साधनेन पुनरुक्तमकार्षीत् कृतवान् पुनरुक्तां पुनरुक्तमिति नपुंसकमनपुंसकेत्यादिना एकवद्भावः ॥ ४२ ॥

नेति । नाल्पभक्तोऽधिकभक्तो बलिरसुरविशेषो यस्य स विष्णुरन्ननिवेद्यैरुपहारैः नाल्पो महान् भक्तबलिरन्नोपहारो यस्य भक्तमन्धोऽन्नमित्यमरः । सोऽभूत् नाम्ना कृष्णः स विष्णुः हारिगमदेन कस्तूर्या कृष्णः कृष्णवर्णोऽभूत् कृष्णोवर्णे हरौ ध्वांक्षे पिके व्यासे सुतेऽर्जुन इत्यजयपालः । शङ्खं चक्रं सुदर्शनं जलजातं पद्मञ्च तद्वदर्चा प्रतिमा यस्य स विष्णुः शङ्खानां चक्रे समूहे चक्रं सैन्ये रथाङ्गे च राष्ट्रे दम्भेतरे च वे । अयवा. सांख्ययता दृत्यभयमाप्यजयप. कः । जलेन या पूजना तया शङ्खचक्रजलेन जातश्चेति अर्चा पूजा अर्चा यस्य अर्चा पूजा प्रतिमयोरिति विश्वः । सोऽभूत् ॥ ४३ ॥

रात्रीति । अस्मिन् रात्रि नले अहिरिपु गरुडोध्वजो लाञ्छनं यस्य तं विष्णुं पूजयति सति अहिरिपुभिया यद्दुरयशः तेन मलिनिता

अर्घ्यनिस्वमणिमाल्यविमिश्रैः स्मेरजातिमयदामसहस्रैः ।
तं पिधाय विदधे बकुरत्नक्षीरनीरनिधिमग्नमिवैषः ॥ ४५ ॥

अक्षसूत्रगतपुष्करबीजश्रेणिरस्य करसङ्गमेत्य ।
पौरुषसूक्तजपितुः पुनरापत् पद्मसद्मचिरवासविलासम् ॥ ४६ ॥

कैटभारिपदयोर्नतमूर्ध्ना सञ्जिता विचकिलस्रगनेन ।
जह्नुजेव भुवनप्रभुणाऽभात् सेविताऽनुनयताऽऽयतमाना ॥ ४७ ॥

स्वानुरागमनघः कमलायां सूचयन्नपि हृदि न्यसनेन ।
गौरवं व्यधित वागधिदेव्याः श्रीगृहोर्ध्वनिजकण्ठनिवेशात् ॥ ४८

मलिनीकृता भवेन यन्मना धृता भुजगा इव कृष्णा लघवो धूपजा धूमाः जालैः गवाक्षै निर्ययु निर्गताः ॥ ४४ ॥

अर्घ्येति । एष नलोऽनिस्वानां मूल्यदरिद्राणां मणिमाल्यानां माल्यैः विमिश्रैः मिश्रीकृतैः स्मेराणां विकसितानां जातिमयदाम्नां मालतीकुसुमस्रजां सहस्रैः तं विष्णुं पिधायाच्छाद्य बकुरत्नक्षीर-नीरनिधौ दुग्धाब्धौ मग्नमिव विदधे ॥ ४५ ॥

अक्षसूत्रेति । पौरुषसूक्तस्य जपितुर्नलस्य करसङ्गं सम्बन्धमेत्य अक्षसूत्रगतानां पुष्करबीजानां श्रेणिर्माला पद्ममेव सद्म तत्र चिरनिवासस्य बहुकालावस्थिते विलासं पुनरापत् प्राप्नवती ॥ ४६ ॥

कैटभारीति । सञ्जिता समर्पिता कैटभारे र्विष्णोः पदयोश्चरणयो रायतं दीर्घं मानं प्रमाणं आयतो दीर्घोमान ईर्ष्याकोपश्च यस्या मान प्रमाणे प्रायादौ मान चित्तोन्नतौ स्मृत इति विश्वः । सा विचकिल-स्रक् मल्लिकामाला नतो मूर्द्धा यस्य तेनानुनयता प्रसादयता अनेन भुवन-प्रभुणा लोकनाथेन नलेन जलेश्वरेण समुद्रेण च भुवनं विपिने तोय इति विश्वः । सेविता सती जह्नुजेवाभात् ॥ ४७ ॥

स्वेति । अनघो निर्दोषो विष्णुः हृदि वक्षसि न्यसनेनार्पणेन कमलायां लक्ष्म्यां स्वानुरागं सूचयन्नपि श्रीगृहाक्षमणीनियःसाहृतसः ऊर्द्ध्वं निजे

छद्ममत्स्यवपुषस्तव पुच्छास्फालनाज्जलमिवोद्धृतमब्धेः ।
श्वैत्यमेत्य गगनाङ्गणसङ्गादाविरस्ति विबुधालयगङ्गा ॥५३॥
भूरिषट्पदधृतभूवलयानां पृष्ठसीमनि किणैरिव चक्रैः ।
चुम्बिताऽवतु जगत् क्षितिरक्षा कर्मठस्य कमठस्तव मूर्त्तिः ॥५४॥
दिक्षु यत्खुरचतुष्टयमुद्रामभ्युपैमि चतुरोऽपि समुद्रान् ।
तस्य पोत्रिवपुषस्तव दंष्ट्रा तुष्टयेऽस्तु मम वास्तु जगत्याः ॥५५॥
उद्धृतिस्तव धरित्रीपरिरम्भाल्लोमभिर्विहरितैर्घनहृष्टैः ।
ब्रह्मभाण्डमभवद्बहुलिङ्गीपं कोलिकोल ! तव तत्र न मातुः ॥५६॥

मेघ अनाप्नुवतः अवनमनक्षमापि उत्कयोरुत्सुकयोः स्तनकयोर्युगस्य हन्तस्य तृप्तये घनो मेघः स्यात् ॥५२॥

छद्मेति । हे विष्णो ! छद्मना कपटेन मत्स्यो मीनो वपुः शरीरं यस्य तव पुच्छस्यास्फालनात्ताडनाद्धेतो रब्धेरूर्ध्वमुद्धृतमुत्क्षिप्तं जलं कर्त्तृ गगनस्याङ्गणेन सङ्गात् श्वैत्यं श्वेतत्वमेत्य विबुधालयगङ्गा स्वर्णदी भूत्वा आविरस्ति प्रादुर्भवतीति उद्धृता ह्यापो धवला दृश्यन्ते ॥५३॥

भूरीति । पृष्ठसीमनि पृष्ठप्रदेशे भूरिषु बहुषु षट्पदेषु धृतानां भूवलयानां किणैर्मांसग्रन्थिभिरिव चक्रैः चक्राकारराजिभिः चुम्बिता स्पृष्टा क्षिते रक्षायां कर्मठस्य कुशलस्य कर्मणि घटोरच्। तव कमठो मूर्त्तिर्जगदवतु रक्षतु ॥५४॥

दिक्ष्विति । हे विष्णो ! दिक्षु चतुर्षु चतुरश्चतुःसङ्ख्याकानपि समुद्रान् खुराणां चतुष्टयस्य पद मभ्युपैमि जानामि तस्य पोत्रिणो वराहस्य वपुष स्तव जगत्या मम वास्तु वेश्मस्थानं दंष्ट्रातुष्टये मम अस्तु ॥५५॥

उद्धृताविति । कोलिकोल ! क्रीडावराह । तत्र ब्रह्माण्डे न मातुर-त्रागमतुमनाः तस्य मनः षड्क्षिकवचनरूपं । तवोद्धृतौ उद्धरणे स्वलल्या

दानवारिरसिकाय विभूतेर्वष्मि तेऽस्मि सुतरां प्रतिपत्तिम् ।
हृत्युदग्रपुलकं बलिनोक्तं त्वां नमामि कृतवामनमायम् ॥ ६० ॥
भोगिभिः क्षितितले दिवि वासं यन्त्यमिष्यसि चिरं ध्रियमाणः ।
पाणिरेष भुवनं वितरेति च्छद्मवाग्भिरव वामन ! विश्वम् ॥ ६१॥
आशयस्य विवृतिः क्रियते किं दित्सुरस्मि हि भवच्चरणेभ्यः ।
विश्वमित्यभिहितो बलिनाऽस्मान् वामन ! प्रणतपावन ! पायाः॥ ६२

पटीयान् पटुः त्वं हे वामन ! विष्णो ! न. अस्माकं मनसः प्रमदं हर्षं देहि कुरु ॥ ५९ ॥

दानवारीति । हे वामन ! दानस्य वारि तोयं रसिकाय वाञ्छकाय ते तुभ्यं विभूतेः सम्पत्तेः प्रतिपत्तिं दानं सुतरामत्यर्थमस्मि अहम् अस्मीत्येतदव्ययं अस्मि त्वमहमर्थेऽस्मि कामये वष्मीति त्वस्य लडुत्तमपुरुषैकवचनम् । अन्यच्च, हे वामन ! त्वं दानवानामसुराणां अरिः शत्रुर्विष्णुरपि सुतरामत्यर्थम् कायं विभूतेः सम्पत्तेः प्रतिपत्तिं ज्ञानञ्चास्मि । अहमस्मि कामये इत्यनेन प्रकारेण उदग्राः पुलकाः यस्मिन् तदुग्रया भवति तथा बलिना दानवेन्द्रेणोक्तं कृता वामनरूपा माया येन तं त्वां नमामि ॥ ६० ॥

भोगिभिरिति । हे बले ! क्षितितले भूलोके दिवि स्वर्गे चिरं बहुकालं वासं ध्रियमाणस्तिष्ठन् धृङ् अवस्थाने इत्यस्य रूपं येन विरभोगिभिः भोगः सुखं तद्वद्भिः सह सम्बन्धं सख्यमेष्यसि एष पाणिर्हस्तो भुवनं जलं वितर देहि अन्यच्च, हे बले ! क्षितितले रसातले पातालएव दिवि स्वर्गे भोगिभिः सर्पैर्वास अधः स्वरूपयोरस्य तलमित्यमरः । चिरं स्थितिमेष्यसि एष पाणिर्भुवनं लोकं भुवन पिष्टपे तोयइत्यजयपालः । वितरेत्यनेन प्रकारेण छद्मवाग्भिः कपटवचनैः हे वामन ! विश्वमव रक्ष ॥ ६१ ॥

आशयस्येति । हे वामन ! आशयस्य हृदयस्य विवृतिर्विस्तृतिः आः क्रियते किं आ इति वाक्योपक्रमे आः प्रगृह्य स्मृतौ वाक्येऽपीत्यमरः । भवतश्चरणेभ्य स्त्वच्चरणेभ्यो विश्वं जगत् दित्सुर्दातुमिच्छुरस्मि हि अन्यच्च हे

कार्त्तवीर्य्यभिदुरेण दशास्ये रैणुकेय ! भवता सुखनाश्ये ।
कालभेदविरहादसमाधिं नौमि राम ! पुनरुक्तिमहं ताम् ॥ ६५ ॥
हस्तलेखमसृजन् खलु जन्मस्थानरेणुकमसौ भवदर्थम् ।
राम ! राममधरीकृततत्तल्लेखकः प्रथममेव विधाता ॥ ६६ ॥
उद्भवाज तनुजादज ! कामं विश्वभूषण ! न दूषणमत्र ।
दूषणप्रशमनाय समर्थं येन देव ! तव वैभवमेव ॥ ६७ ॥
नो ददासि यदि तत्त्वधियं मे यच्छ मोहमपि तं ! रघुवत्स !
येन रावणचमूर्युधि मूढा तन्मयं जगदपश्यदशेषम् ॥ ६८ ॥

---

रावणे सुखमनायासं यथा भवति तथा नाश्ये सति रावणञ्जितवतः कार्त-वीर्यस्य योजेता तस्य रावणः सुखन श्यएव भवति कालभेदस्य विर-हादसमाधि परिहारहीनन्ते तव रामेण दाशरथिना पुनरुक्तिमहं नौमि ॥ ६५ ॥

हस्तेति । हे राम ! दाशरथे ! अधरीकृतास्तिरस्कृता स्ते ते ले-खकाः लिपिकारा लेखा देवाश्च येन सः अधरीकृततत्तल्लेखकः देवपक्षे शेषाद्विभाषेति कप् समासान्तः । तादृशोऽसौ विधाता जन्मस्थानं रेणुर्यस्य तं रामं परशुरामं भवदर्थं हस्तलेखमसृजत् सृष्टवान् खलु लेखको हि कौशलसिद्ध्यर्थमादौ लेखान्तराणि लिखित्वा क्षिपति ॥ ६६ ॥

उद्भवेति । न जायत इत्यज ! विष्णो ! अजस्य पुत्रस्य तनूजाद्दशरथात् कामं यथेच्छं उद्भव जायस्व भवतेलौंटिरूपमिदं रूपं । हे विश्वभूषण ! अत्रा-स्मिन्नजस्य तव तनुजोद्भवनेन दूषणं नास्ति कुत इत्याशयेन हेतुना देव ! तव वैभवमेव दूषणस्य कलङ्कस्य राक्षसविशेषस्य प्रशमनाय नाशनाय समर्थम् ॥ ६७ ॥

नेति । हे रघुवत्स ! रघुनन्दन ! विष्णो ! मे मह्यं तत्त्वे ब्रह्मणि धियं बुद्धिं नो ददासि तर्हि येन मोहेन युधि युद्धे रावणस्य चमूः सेना मूढा भ्रान्ता अशेषं जगत् तन्मयं राममात्मकमपश्यत् तं मोहमपि मे मह्यं यच्छ देहि ॥ ६८ ॥

आज्ञया च पितुरज्ञभिया च क्षीरनीयत महीप्रभवा हि: ।
लङ्घितश्च भवता किमु न द्विर्वारिराशिरुदकाङ्गलङ्घः ॥ ६९ ॥
कामदेवविशिखैः खलु नेशं मार्पयज्जनकजामिति रक्षः ।
दैवतादमरणे वरवाचं तथ्ययत् स्वमपुनाद्भवदस्त्रैः ॥ ७० ॥
तद्यशो जपति कम्बुकदम्बं यस्य कम्बुरपि न क्षमसम्बुधिचुम्बि ।
नामशेषितससैन्यदशास्यादस्तनाप यशौ तव हस्तात् ॥ ७१ ॥
दुष्टदारविरहेऽपि पयोधिस्त्वं शरण्य ! शरणं स ममैधि ।
लक्ष्मणक्षणवियोगकृशानौ यः स्वजीवितहृणाङ्कृतिमन्वा ॥ ७२ ॥

---

आज्ञयेति । हे विष्णो ! राम ! पितुर्दशरथस्याज्ञया वनं गच्छतेऽवं-
शजया च अज्ञभिया मिथ्यावादकरेभ्यो मूढेभ्यः सकाशाद्भिया च मही-
प्रभव उत्पत्तिस्थानं यस्याः सा क्षीराब्धितनयाः सीता च द्विर्द्विवारं
मा हीयत परित्यक्ता एव उदकस्याङ्ग समीप गच्छन्ती या सा लङ्घा यस्य
स वारिराशिः समुद्रश्च भवता द्विर्न लङ्घितः किमु ? अपि तु लङ्घि-
त एव । ६९ ।

कामेति । हे राम ! विष्णो ! जनकजां सीतामर्पयद्ददत् यद्रक्षः
कामदेवस्य मन्मथस्य विशिखैर्बाणैर्मा नेशं मा ग्लानिं प्राप नशेः पुषा-
दित्व अधिमन्योरचि एत्व वक्तव्यात् नमाङ्योग इत्यडभावः । दैवताद-
मरणे मरणाभावे विषये वरवाक्यं दैवस्य सर्गस्य पथ्यत्वं न ममिथ्यसो-
त्वं रूप तथ्यवत्तथ्यं कुर्वन् रावणो भवतः तव अस्त्रैः स्वमात्मानम-
पुनात् पूतवान् ॥ ७० ॥

तदिति । हे राम ! विष्णो ! नामशेषितः कथामात्रशेषित स-
सैन्यः सैन्यसहितः दशास्यो रावणो येन तस्मात्तव हस्तादसौ यत्त्वत्को-
यदशमदर्शन नाप नाप यस्य कम्बुरपि कुलनिवियोगस्य अम्बुधिचुम्बि यथः
कम्बूनां कदम्बं कर्म न करोति किं अपितु करोत्येवेत्यर्थः ॥ ७१ ॥

दुष्टेति । हे शरण्य ! राम ! यस्त्वं लक्ष्मणस्य सौमित्रेः क्षण-
विरहेण कृशानौ अग्नौ स्वजीवितस्यैव हवषस्याहुतिः यत्त्वा इष्टवान्

क्रौञ्चदुःखमपि वीक्ष्य शुचा यः श्लोकमेकमसृजत् कविराद्यः ।
स त्वदुत्थकरुणः खलु काव्यं श्लोकसिन्धुमुचितं प्रबबन्ध ॥७३॥
विश्रवःपितृकयाप्युमनर्हं सम्भवत्त्वमनयेत्युचितज्ञः ।
त्वं चकर्त्तिथ न शूर्पणखायाः लक्ष्मणेन वपुषा श्रवसी वा ॥७४॥
ते हरन्तु निर्ऋतिव्रततिं मे यैः स कल्पविटपी तव दोर्भिः ।
छद्मयादवतनोरुदपाटि स्पर्द्धमान इव दानमदेन ॥ ७५ ॥

रघुजोः कनिष्ठ स त्वमिष्टदाराणां सीतायाः सम्बन्धि विरहस्य और्वस्येव पयोधिः सन् मम शरणं रक्षिता एधि भव प्रेयसीभ्यो भ्रातृस्नेहो गरी-
यानिति तात्पर्य्यम् ॥ ७२ ॥

क्रौञ्चेति । हे राम ! विष्णो ! आद्यः कविः वाल्मीकिः क्रौञ्चयो-
र्दुःखमपि वीक्ष्य शुचा एकं श्लोकं मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः
समाः । यत् क्रौञ्चमिथुनादेकमवधीः काममोहितमिति असृजत् श्लोकम-
सृजत् सृष्टवान् स आद्यः कविः त्वदुत्था भवदुद्भवा करुणा यस्य तादृशः
सन् काव्यं श्लोकसिन्धुं सुचितं यथा भवति तथा प्रबबन्ध ॥ ७३ ॥

विश्रव इति । हे राम ! विष्णो ! विश्रवाः पिता यस्याः सा विश्रवः
पितृका नद्यृतश्चेति कप् समासान्तः । तया अनया शूर्पणखया सम्भवत्त्वं
श्रोत्रसङ्गतत्वं आपुमनर्हमित्युचितज्ञः सन् लक्ष्मणेन वपुषा शूर्पण-
खायाः श्रवसी श्रोत्रे किं वा न चकर्तिथ किं न कृत्तवानसि ॥ ७४ ॥

त इति । हे विष्णो ! कृष्ण ! छद्मयादवतनोः लीलास्वीकृत-
यादवशरीरस्य तव यैर्दोर्भिः दानमदेन त्यागदर्पेण हेतुना स्पर्धमान इव
स्थितः सन् कल्पविटपी पारिजातः उदपाटि उत्पाटितः ते दोषौ भुजौ
मे मम सम्बन्धिनि निर्ऋतिमलक्ष्मीमेव व्रततिं लतां स्यादलक्ष्मीस्तु
निर्ऋतिरित्यमरः । वल्ली तु व्रततिर्लतेत्यमरः । हरन्तु । कृष्णेनो-
त्पाटितः पारिजात इति पौराणिकी कथाऽत्रानुसन्धेया ॥ ७५ ॥

बालकेलिषु तदा यदलावीः कर्परीभिरभिहत्य तरङ्गान्।
भाविबाणभुजभेदनलीलासूत्रपात इव पातु तदस्मान्॥ ७६॥
कर्णयक्तिविफलां खलु कर्त्तुं सज्जिताज्जुनरयाय नमस्ते।
केतनेन कपिनोरसि शक्तिं लक्ष्मणं क्रतवता हृतशल्यम्॥ ७७॥
नापगेयमनयः सशरीरं द्यां वरेण नितरामपि भक्तम्।
मा स्म भूत् सुरवधूसुरतस्थो दित्यपि व्रतविलोपभियेति॥ ७८॥

बलेति। हे विष्णो! कृष्ण! तदा तस्मिन् समये बालकेलिषु शिशु-क्रीडासु कर्परीभिः कलशखण्डैः खपरर्यापिकश यां स्थालं। खपरी खा-त्काचित्कपाल्यादि विवक्षापचये यदिति। अभिहत्य तरङ्गमर्मीन् यदलावीः लूनवानसि शिशवो हि खपरखण्डैः तरङ्गान् छिन्दन्ति तत्तरङ्गलवनकर्म भाविन्या भविष्यन्त्या बाणासुरविषयस्य भुजानां भेदनस्येव लीलया सूत्रपात इव स्थितमस्मान् पातयतु॥ ७६॥

कर्णेति। हे विष्णो! कृष्ण! उरसि शक्तिर्यस्य यथादिर्यस्य तं आमूलमस्तकात् खाङ्गादकम इति मध्यमलक्। चणं सौमिलिकृतं शल्यं दशानं कृतवता केतनेन लाञ्छनेन कपिना हनुमता कर्णस्य राधे-यस्य शक्तिः कारूस मर्म्यायो शक्तिरित्यमरः। अफलं तस्य कर्तुं सज्जि-ताऽर्जुनरथो येन तस्मै ते तुभ्यं अर्जुनसारथये नमोऽस्तु॥ ७७॥

नेति। हे विष्णो! कृष्ण! व्रतस्य ब्रह्मचर्यस्य भीष्मोऽपि यावत्करारे न कृतवर्यं महुष्मितवान् विलोपात् त्यक्तु मानुभिया हेतुना दिवि स्वर्गेऽपि सुरवधूनां रम्भादीनां सुरतस्य सम्भोगस्य सः स्थितः मास्मभूदिति विचार्य अत्र करणे दयालुः कारुणिक सन् मृतिच्छत्वादिना व्यग्रमनस्य नितरां भक्तं आपगेयं गाङ्गेयं भीष्मं सशरीरं वरेण द्यां स्वर्गं न नमनयः नीतवान्॥ ७८॥

घातितार्कतनयः सदयालुर्जैत्रितेन्दुकुलपार्थकृतार्थः ।
अर्द्धदुःखसुखमभ्यनयस्त्वं साश्रुभानुविहसद्विधुनेत्रः ॥ ७९ ॥

प्राणवत्प्रणयिराध ! न राधापुत्रशत्रुसखता सदृशी ते ।
श्रीप्रियस्य सदृगेव तव श्रीवत्समात्महृदि धर्त्तुमजस्रम् ॥ ८० ॥

हृद्यगन्धवह ! भोगवतीशः शेषरूपमपि बिभ्रदशेषः ।
भोगभूतिमदिरारुचिरश्रीरुल्लसत्कुमुदबन्धुरुचिस्त्वम् ॥ ८१ ॥

घातितेति। घातितो योऽर्कसुतः कर्णस्तं कुर्वन् दयालुः जैत्रितेन जैत्रेण इन्दुकुलेन चन्द्रान्वयजातेन पार्थेनार्जुनेन कृतार्थः सन् साश्रुः सवाष्पो भानुः सूर्यश्च विहसन् विधुश्चन्द्रश्च नेत्रे दक्षिणदक्षिणे यस्य स त्वं दुःखं सुखञ्च दुःखसुखं अर्द्धं नपुंसकमित्येकशेषः। अभ्यनयः अभिनीतवान् ॥ ७९ ॥

प्राणेति। प्राणवत्प्रणयिनी प्रेयसी कृता राधा गोपीविशेषो यस्य तस्य सम्बुद्धिः प्राणवत्प्रणयिराध ! कृष्ण ! ते तव राधापुत्रस्य कर्णस्य शत्रुरर्जुनस्तस्य सखा राधापुत्रशत्रुसखः तस्य भावस्तत्ता सा सदृशी योग्या न तव श्रीः प्रिया लक्ष्मीः यस्य तस्य तव श्रीवत्समाङ्कनविशेषं श्रियो लक्ष्म्याः वत्सं शिशुञ्च अजस्रं सर्वदा आत्मनो हृदि धर्तुं सदृक् सदृशमेव राधाप्रियस्य राधासुतद्वेषिणः सख्यमनुचितं श्रीप्रियस्य हृदि श्रीवत्सधारणं युक्तमिति राधाश्रीवत्सशब्दाभ्यां छलोक्तिः ॥ ८० ॥

हृद्येति। हृद्यस्य मनोहरस्य गन्धस्य सौरभस्य वहो हृद्यगन्धवहः तस्य सम्बोधनं हे हृद्यगन्धवह ! त्वं भोगवत्याः ककुद्मिकन्याया ईशः भर्ता भोगस्य सम्भोगस्य भूतिः समृद्धिः भूतिकारिणीत्यर्थः। भोगभूत्या मदिरायाः सुरया रुचिं दीप्तिं राति ददाति या सा श्रीः शरीरशोभा यस्य मदिरापाने हि नेत्रं लोहितं भवति। अतः परभागलोभात् रुचिरश्रीकत्व उल्लसन्तो प्रकाशमाना कुमुदानां कैरवाणां बन्धोश्चन्द्रस्य रुचिः शरीर-

पाञ्चजन्यमधिगत्य करेणापाञ्चजन्यमसुरानिव वच्मि ।
चेतनाश्च किल पश्यत किं नाचेतनोऽपि मयि मुक्तविरोधः॥८४॥
तावकोरसि लसद्वनमाले श्रीफलद्विफलशाखिकयेव ।
स्थीयते कमलया त्वदजस्रस्पर्शकण्टकितयोन्नकुचया च ॥ ८५॥

शरीरं यस्य तेन परशुना साधनेन सहस्रमर्जुनस्य कार्तवीर्यस्य ककुभवृक्षस्य च अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोरिति विश्वः । बाहून् भुजान् अ-शयन्दः कात्स्न्ये अशो अशतद्भ्रम इति तथाचामरसिंहः मङ्गलानन्त-रारम्भ प्रश्नकात्स्न्येष्वथो अथेति । अलुनात् तेन सकलेन सम्पूर्णेन चक्रेण सुदर्शनेन विलूने छिन्ने बाणस्य बाणासुरस्य कुरण्टकवृक्षस्य च बाणौ दानवभेदे तु शरे दासीकुरण्टकेऽत्यजयपालः । बाहूनां निचये समूहे विषये तव किञ्चित् नास्तीत्यर्थः । ककुभच्छेदिनः कुरण्डकच्छेदो-नाश्चर्यं विद्वत्यैतदप्यनुसन्धेयम् ॥ ८३ ॥

पाञ्चजन्यमिति । हे विष्णो ! पाञ्चजन्यं शङ्खं वह्निर्देवपञ्चजनेभ्य श्चेति वक्तव्यात् । शङ्खो लक्ष्मीपतेः पाञ्चजन्यइत्यमरः । पाञ्चजन्यकुला-नाञ्च सम्पाद्य सततं करेण हस्तेनाधिगत्य प्राप्य सुरान् वच्मि ब्रवीमि वच परिभाषायां इत्यस्यादादिकस्य लटि सिपिरूपं । किमित्याह हे असुराश्चेतनाश्च चैतन्यवन्तोऽभवन् किल अचेतनः अपाञ्चजन्योऽपि मयि पूर्वोक्तप्रकारेण मुक्तो विरोधो येन स किं न पश्यत ॥ ८४ ॥

तावकेति । लसन्ती वनमाला यस्मिन् अनेन वनमालाया आल-वालवलयत्वं सूचितं । तस्मिन् तावके त्वत्सम्बन्धिन्युरसि तवाजस्रं स्पर्शेन कण्टकितया उन्नतौ कुचौ यस्यास्तया कमलया लक्ष्म्या श्रीफलस्य मालूर-वृक्षस्य मालूरश्रीफलावपीत्यमरः । द्वे फले यस्यां सा या शाखिका अल्पा शाखिका तयेव स्थीयते भावे लकारः ॥ ८५ ॥

त्वय्यतइति । हे विष्णो ! उच्चैर्महत्सुभगभूयं सुभगत्वं भुवोभाव इति क्यप् । शिक्षितुमिव ते तव करो जलजं पद्मेन न त्यज्यते कुमुदानां

